महामहोपाध्याय महाकवि-भारताचार्य-

# श्रीहरिदाससिद्धान्तवागीशमहाशयस्य

## संक्षिप्तं जीवनचरितम्।

पूर्ववङ्ग फरिदपुरजिलान्तर्गत कोटालिपाडामध्यस्थित ऊनशिया ग्रामे १२८३ बङ्गाब्द (१८७६ खृष्टाब्द) सौरकार्त्तिकमासस्य सप्तमदिवसे श्रीहरिदास समजनि। प्रसिद्धो विद्वान् ✓गङ्गाधरविद्यालङ्कार किलास्य पितासीत्।

एष च पञ्चमे वर्षे कृतविद्यारम्भ एकादशे वर्षे कलापव्याकरणमध्येतुमारभमाण त्रयोदशे वर्षे उपनीत सन्, पञ्चदशे वर्षे व्याकरणोपाधिपरीक्षायामुत्तीर्ण प्रथमे विभागे प्रथम स्थानमधिचकार। तदानीमेव चासौ संस्कृतभाषायामतीव व्युत्पन्न सन् अनर्गल संस्कृतभाषा वक्तुं द्रुत कवितां कर्तुञ्चाशक्नोत्। किञ्चायम् उपनयनात् प्रभृत्येव नितरामाह्निकपूत सदाचारनिष्ठश्च सुब्राह्मणतया प्रसिद्धिं लेभे। तदैव च संस्कृतभाषया "कंसवधम्" नाम नाटकं विरचयामास अभिनीतञ्च तत् तदानीन्तनै।

परञ्च न्यायदर्शनमधीयान "वियोगवैभवम्" "शङ्करसम्भवम्" च खण्डकाव्यद्वय "जानकीविक्रमम्" नाटकञ्च विरचय्य काव्योपाधिपरीक्षायामुत्तीर्ण, नव्यस्मृति पठन् "विराजसरोजिनीम" नाम नाटिका रचयाम्बभूव उत्तीर्णश्चासीत् नव्यस्मृत्युपाधिपरीक्षायाम्। ततश्चासौ साङ्ख्यादिदर्शन पुराणञ्चाधीत्य तत्तदुपाधिपरीक्षासु समुत्तीर्ण ज्योतिःशास्त्रञ्चाधिगम्य पाठसमाप्तिञ्चाकरोत्।

परञ्च निजग्रामवर्त्ति न्यर्थ्यविद्यालय स्वल्पाध्यापनाया प्रवृत्तो वर्षद्वयमतिक्रामन्नेव खुलना जिलाधीन नकीपुरपतिना भूस्वामिना राय ✓हरिचरणचतुर्धुरीण रायबाहादुरेण स्वकीय नकीपुर नीत कामपि चतुष्पाठीं विधाय तदध्यापकपद ग्राहित स्व पुरोहितपदञ्च प्रापित।

तत्र चासौ महोत्साहेनाध्यापयन नानासुविधालाभात उत्तररामचरितादीनां षोडशाना काव्यग्रन्थाना टीकामनुवादञ्च विधाय तान् मुद्रयामास। समग्र भारत वर्षे विदेशेषु च चलितास्ते ग्रन्था सम्प्रति चतुर्थीं पञ्चमीं चावृत्तिं प्राप्ता प्राप्ता। अस्मादधीयाना बहव एव छात्रा नानाशास्त्रेषु सर्व्वासु च परीक्षासु समुत्तीर्णा।

एष च तदानीं "स्मृतिचिन्तामणिम्" नाम स्मृतिग्रन्थम् "वङ्गीयप्रतापम्" नाटकम्, "रुक्मिणीहरणम्" महाकाव्यम्, "सरलाम्" नाम गद्यकाव्यञ्च तस्मिन् नकीपुर एव स्थितो निर्ममे मुद्रायन्त्रमेक स्थापयामास।

परञ्च १३२९ बङ्गाब्द (१९२३ खृष्टाब्दे) कलिकातामागत्य सुविलैने स्थितो "महाभारतम्" संस्कर्तुमारेभे। महर्षिगणितामध्यायश्लोकसङ्ख्या सर्व्वथा परिरक्षन् विशेषगवेषणापूर्व्वक मूलम्, प्रतिश्लोक स्वरचितां टीकाम्, निजकृतवङ्गानुवादम् पाठान्तरसंग्रहम्, नीलकण्ठकृत टीकाञ्च सन्निवेशयन मुद्रापयितु प्रवृत्त। १३४७ बङ्गाब्दे च कलिकातायामेव देवलैने नव भवन क्रीणान् तत्रैव निवसन् "मिवारप्रतापम्" नाम नाटकम्, "शिवाजीचरितम्" नाम महानाटकञ्च निर्म्मायेदानीं महाभारतस्य टीकानुवादलेखा समाप्य चतुर्दशानक मुद्रापयन् विद्यत इति।

| | |
|---|---|
| १३५७ बङ्गाब्दे<br>(१९५० खृष्टाब्दे)<br>सौरवैशाखस्याष्टमदिवसे। | लिखितम्<br>अस्कृतिना कनिष्ठपुत्रेण<br>श्रीभवेशचन्द्रभट्टाचार्य्यशर्म्मणा। |

धर्म्मो नयश्च विनयश्च

विचारणश्च

रूपं शुभश्च चरितश्च

मनस्विता च ।

सम्मेलनेन सदृसीव

सदा सदस्या

यस्मिन् गुणा समुदिता

मुदिता इवासन् ॥

तस्य

खुलनाजिलाधीन-नकीपुरस्थ-भूस्वामिनः

राय हरिचरणचतुर्धुरीणरायवाहादुरस्य

पवित्रनामोद्देशे

समर्पितेयम ।

तत्स्मृतिसन्तप्त-

श्रीहरिदासदेवशर्म्मणा ।

## प्रथमसंस्करणस्य विज्ञापनम् ।

अधुना किल करुणामयपरमेश्वरस्य प्रसादात् कादम्बरीमुद्रणं परिसमाप्तम् । अत्र खलु विभिन्नदेशीय पुस्तकत्रयमालोक्य समीचीनतया सम्मत पाठो मूले सन्निवेशित, पाठान्तराणि पुनरधस्ताद्विन्यस्तानि । समालोचना तु टीकायामेव कियती यथास्थानं प्रतिपादितेति न पृथक् सङ्कलिता । संशोधनाय कृतेऽपि विशेषयत्ने मुद्राकरप्रमादस्य सर्वथा दुर्निवारतया क्वचित् क्वचित् किञ्चिदशुद्ध परिलक्ष्यते । कागज इत्यस्य प्रायेण त्रिगुणाधिकमूल्यतया मूल्यातिरेकसम्भवेऽपि पाठार्थिनां सुविधाविधानाय प्रचलितनियमापेक्षया नितान्तमेव न्यून मूल्य कल्पितम् । यदीदानीं शिक्षार्थिनः शिक्षयितारश्च पुस्तकमिदमुपकाराय मन्यमाना गृह्णन्ति, तदैव मे वास्तविकप्राणान्तपरिश्रम प्रचुरतरार्थव्ययश्च सफलो भवितेति ।

१८३८ शकाब्दे<br>
सौरश्रावणस्य प्रथमदिवसे ।<br>
नकीपुर-हरिचरणचतुष्पाठीभवने ।

विनीत—<br>
श्रीहरिदासशर्म्मणः ।

## चतुर्थसंस्करणविषये विज्ञापनम् ।

महाकारुणिकस्य भगवत परमेश्वरस्यानुग्रहेण कादम्बरीपूर्व्वभागश्चतुर्थं वार प्रकाशित । अत्र च पूर्व्वापेक्षया कागज इत्यस्य पञ्चगुणाधिक मूल्यम्, अक्षर-योजकानां षड्गुणाधिक वेतनम्, चतुर्गुणाधिको मुद्रणव्यय, त्रिगुणाधिक शोधनपारिश्रमिक, आनयन प्रेरणव्ययश्च चतुर्गुणाधिक समजनि । तेन च दरिद्राणां ब्राह्मणपण्डितपुत्रादीनां दुष्करक्रयतां जानतापि गत्यन्तराभावात् पूर्व्वा-पेक्षया सार्द्धैकगुणमात्र मूल्य मया वर्द्धितम् । तथापि ते त्वयेव गुणग्राहिणो ग्राहका व्यवहार्य्यद्रव्यान्तराणिव पूर्व्ववदेवागत्य ग्रहिष्यन्तीति ध्रुव-मेवास्त्यस्माकमाश्वास इति ।

१८७२ शकाब्दीयसौरफाल्गुन-<br>
पञ्चदशदिवसीयम् ।

कलिकाता ४१ सव्यकदेवलेनवासिन<br>
विनीत—श्रीहरिदासशर्म्मणः ।

# বঙ্গানুবাদসম্বন্ধে বিশেষ বক্তব্য।

যে কোন অনুবাদকেই তিনভাগে বিভক্ত করা যায়। যথা—উপাখ্যানানুবাদ ভাবানুবাদ ও ভাষানুবাদ। তাহার মধ্যে অনুবাদক সম্পূর্ণ স্বাধীনভাবে চলিতে পারেন বলিয়া উপাখ্যানানুবাদ সর্ব্বাপেক্ষা সহজ। কিন্তু তাহাতে মূল বুঝিবার পক্ষে বিশেষ কোন উপকার হয় না। মূলের ভাব নিয়া চলিতে হয় বলিয়া ভাবানুবাদ উপাখ্যানানুবাদ অপেক্ষা কঠিন। তবে তাহাতে মূল বুঝিবার পক্ষে কিছু সুবিধা হয় আর ভাষানুবাদ করা বড়ই কঠিন। কারণ ইহাতে অনুবাদককে মূলের ভাব ও ভাষা এই উভয়েরই সম্পূর্ণ অধীন হইয়া চলিতে হয় অথ চ সেই ভাষানুবাদই মূল বুঝিবার পক্ষে অত্যন্ত উপযোগী। কিন্তু কাদম্বরীর সেই ভাষানুবাদ করা যে কি কঠিন ব্যাপার তাহা বিবেচক অনায়াসেই বুঝিতে পারেন—এই জন্যই আমার কয়েকজন বন্ধু কাদম্বরীর ভাষানুবাদ করিতে নিষেধ করিয়াছিলেন কিন্তু আমি অদম্য উদ্যমের বশবর্ত্তী হইয়া সে সঙ্কল্প হইতে বিরত হই নাই। তবে যেখানে উপায়ান্তর নাই, সেখানে ভাবানুবাদই করা হইয়াছে। কিন্তু এই অনুবাদে যে কতদূর কৃতকার্য্য হইয়াছি, তাহা পাঠকগণ বিবেচনা করিবেন। তবে বিশেষ বক্তব্য এই যে, একানুপূর্ব্বীকবাচক বাচ্যস্বরূপ সামান্যধর্ম্ম লইয়া গ্রন্থকার পূর্ণোপমা সাজাইয়া বাহবা লইলেন, টীকাকার উভয় পক্ষেই বিশদ ব্যাখ্যা করিয়া প্রশংসাভাজন হইলেন, কিন্তু যত বিপদ ভাষানুবাদকের কারণ "পুরমেতজ্জাত সকলকল সম্প্রতি সুধাংশুবিম্বমিব" এখানে 'এই বাড়ীটী এখন চন্দ্রমণ্ডলের ন্যায় কোলাহলে পরিপূর্ণ হইয়াছে' এইরূপ অনুবাদ করিলে যেমন সাদৃশ্য থাকে না, তেমন অনুবাদও অসম্পূর্ণ রহিয়া যায়, সুতরাং বাধ্য হইয়াই এইরূপ অনুবাদ করিতে হইবে যে, 'এখন চন্দ্রমণ্ডলটী যেমন সকলকলাসমন্বিত এই বাড়ীটিও তেমন কোলাহলে পরিপূর্ণ হইয়াছে, সুতরাং সাদৃশ্য রহিল না বলিয়া অনুবাদককে অবশ্যই সাধারণে উপহাস করিতে পারে, কিন্তু বিবেচক পাঠক উপহাস করিবেন না—এ আশা খুব করা যায়, কারণ, ঐরূপ স্থলে উপায়ান্তর নাই বলিয়া অনুবাদে সাদৃশ্য না থাকা ক্ষমার যোগ্য। কাদম্বরীতে এরূপ পূর্ণোপমা অনেকই আছে, সুতরাং তাহার ভাষানুবাদও ঐরূপই হইয়াছে, তাই এই বিষয়ের অবতারণা করা হইল।

—o—

# अथ बाणभट्टस्य संक्षिप्तजीवनचरितम्

### समयनिरूपणञ्च ।

आसीत् पुरा कान्यकुब्जप्रदेशे शोणनदस्य पश्चिमे भागे प्रीतिकूटनामा ग्राम । तत्र वात्स्यगोत्रसम्भव परमवेदविद्वैदिकक्रियानिपुणश्च कुबेरनामा कश्चित् पण्डितप्रवरो बभूव । तस्य पुत्र पाशुपत (१) तदात्मजश्चार्थपतिस्तस्य चैकादश (२) पुत्रा आसन्, तेषामष्टमश्चित्रभानुस्तु राज्यदेव्यभिधानाया भार्य्यायामस्माक महाकविमुकुटमणि बाण नाम पुत्र लेभे । बाणस्य तु शैशव एव राज्यदेवी परलोक गता । अथ चित्रभानुरेव त बाल मातृवत् परिपोषयन् यथाविधि संस्कृत्य तस्य च चतुर्दशवर्षे वयसि लोकान्तरमगमत् । ततस्तु यौवनस्वभावसुलभ-दोषेण साहचर्य्यदोषेण च दूषितो बाण ईशानप्रभृतिभि प्रियसहचरै स्वदेशा-न्निर्गतो विविधान् देशान् पर्य्यटन् अनेकैर्नृपतिभिर्बहुभिश्चोपाध्यायै सह साक्षात् कुर्वन् विविध ज्ञानमुपार्ज्य पुन स्वदेशमागत । अथ कदाचित् कान्यकुब्जेश्वरो हर्षवर्द्धनो दूतमुखेन बाणमाहूतवान् । उपस्थिते च बाणे राजा दुर्जनेभ्य श्रुततद्दुश्चरित 'महाभुजङ्ग (३) खल्वयमागत' इति कथन सदस्य प्रत्यभिदधौ । तेन चापमानमात्मनो मन्यमानो बाण "निजविचारेण निर्णीयता सर्वम्" इत्यभि धायावतस्थे । परन्तु सभासद्भि सुधीभि सह शास्त्रतर्केण त महाविचक्षणतया परिचिन्वानो राजा स्वसभाया प्रधानोपाध्यायपदमध्यारोपयामास । तस्य च सभाया सूर्य्यशतकरचयिता मयूरभट्टो मातङ्गदिवाकरनामापरश्च कविरासीत् । अथ कदाचिद्बन्धुभिरनुरुद्धो बाणो हर्षचरित नाम हर्षवर्द्धनस्य जीवनचरित प्रणीय दृश्यमानाशान्त कादम्बरीपूर्वभाग प्रणयन्नेव परलोक गत । अथ तु बाणनन्दनो भूषणभट्टो नाम कादम्बर्य्या परभाग प्रणीतवान् ।

हर्षवर्द्धनस्तु ६०६ खृष्टाब्दमारभ्य ६४८ खृष्टाब्दपर्य्यन्त कान्यकुब्जराज्य शशास, (४) अतएव खृष्टीयषष्ठशताब्दीशेषभागात्सप्तमशताब्दीपूर्वार्द्धपर्य्यन्तो बाणभट्टस्यावस्थितिसमयो निर्णीयत इति ।

---

हर्षचरितस्यानुक्रमणिकायामिद दृश्यते ।

(१) बाणस्तु कादम्बर्य्या निजवशवर्णने नामेद नाभिहितवान् ।

(२) सोऽजनयदभ्रगु इव ऋषि कवि महोदत्त धर्म्म जातवेदस चित्रभानु त्र्यक्षम् अहिदत्त विश्वरूप च त्यकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान् पवित्रान् पुत्रान् । हर्षचरितम् ।

(३) भुजङ्ग षिड्ग पारदारिक इति यावत् ।

(४) चीनदेशीयपरिव्राजकस्य हियुयेनसाङ्गस्य भारतपरिभ्रमणवृत्तान्तादिद लभ्यते । अत्र त्वपराण्यपि सन्ति युक्तिप्रमाणानि ।

## अथ बाणभट्टस्य वंशावली ।




(१) स्वयं वात्स्यस्तु पुलस्त्यात् इति ब्रह्मवंशपुराणम्। वात्स्यानन्तरं बहूनामिव पुरुषाणां नामानि न लभ्यन्ते ।

(२) केषाञ्चिन्मते भूषणबाण अपरेषां मते पुलिन्द तदन्येषां मते पुलिन बाणभट्टतनयस्य चत्वारि नामानि परिलक्ष्यन्ते ।

# कथासरित्सागरात् कादम्बरीकथायां छायाग्रहणम् ।

सेयं कादम्बरीकथा बाणभट्टेन कथासरित्सागरीयएकोनषष्टितमतरङ्गगतं मकरन्दिकाया उपाख्यानमेव क्वचित् किञ्चिद्विकसीकृत्य पात्राणां नामान्तराणि च विधाय विरचिता । भूषणभट्टेन तूत्तरार्द्धे वृत्तान्तवैषम्यमपि किञ्चित् प्रतिपादितमिति प्रतीयते । तथा च—

| कथासरित्सागरगतनामानि | कादम्बरीगतनामानि |
| --- | --- |
| काञ्चनपुरी | विदिशा । |
| सुमना | शूद्रक । |
| मुक्तालता | चाण्डालदारिका । |
| शास्त्रगञ्ज (शुक) | वैशम्पायन । |
| हिमालयपादे रोहिणतरु | विन्ध्याटव्यां शाल्मलीतरु । |
| मरीचि | हारीत । |
| पौलस्त्य | जाबालि । |
| रत्नाकर पुर | उज्जयिनी नगरी । |
| ज्योतिष्प्रभ | तारापीड । |
| हर्षवती | विलासवती । |
| सोमप्रभ | चन्द्रापीड । |
| प्रभाकर | शुकनास । |
| प्रियङ्कर | वैशम्पायन । |
| आशुश्रवा (उच्चैःश्रवसः पुत्र) | इन्द्रायुध । |
| पद्मकूट | हंस । |
| हेमप्रभा | गौरी । |
| मनोरथप्रभा | महाश्वेता । |
| दीधितिमान् | श्वेतकेतु । |
| रश्मिमान् | पुण्डरीक । |
| सिंहविक्रम (विद्याधरराज) | चित्ररथ (गन्धर्वराज) । |
| मकरन्दिका | कादम्बरी । |
| देवजय | केयूरक । |
| सिंहविक्रम शुकोऽभूत् | पुण्डरीको मध्ये वैशम्पायन परञ्च तदात्म एव शुकोऽभूत् । |
| रश्मिमान् सुमना अभूत् | चन्द्रापीड शूद्रकोऽभूत् । |

## अथ कादम्बरीकथासंक्षेपः ।

आसीत् किल विदिशाभिधानायां राजधान्यामशेषगुणाकरो राजा शूद्रको नाम। तत्रैकदा सभामण्डपगतं परमरूपवती प्रतीहारी कस्याश्चिच्चण्डाल-दारिकाया आगमनं न्यवेदयत्। अथ राजादेशेन प्रतीहार्या प्रवेशिता सा केनचिद्वृद्धेन शिशुना च सममागत्य राजानं प्रणनाम। वृद्धस्तु पञ्जरगतं वैशम्पायननामानं शुकमेकमवस्थाप्य विहृत्य च तदीयगुणावलीमपससार। अपसृते च तस्मिन् वैशम्पायनो दक्षिणं चरणमुत्तोल्य—

"स्तनयुगमश्रुस्नातं समीपतरवर्त्ति हृदयशोकाग्नेः ।
चरति विमुक्ताहारं व्रतमिव भवतो रिपुस्त्रीणाम् ॥"

इत्युक्त्वा राजानं सवर्द्धयामास। राजा तु सह सदस्यैर्निरतिशयं विस्मयमापन्नः शुकमन्तःपुरं प्रवेशयितुमादिश्योदतिष्ठत्। कृतस्नानाह्निकभोजनश्च बृहस्पतिकल्पेन कुमारपालितनाम्ना मन्त्रिवरेण सह सुखोपविष्टः शुकमानाय्य तदीयं सर्वं वृत्तान्तमभिधातुमनुरुरोध। अथासौ कथयामास—"अस्ति विन्ध्याटवी नाम काचिदरण्यानी। तत्र कस्मिन् विशाले शाल्मलीवृक्षे मां प्रसूय परलोकं गतायां मे जनन्यां जराजीर्णो जनको मामपालयत्। कदाचित्तु मातङ्गनामनि शवरसेनापतौ प्रस्थिते तत्सेनान्तःस्थः कश्चिद्वृद्धशवरस्तं शाल्मलीतरुमारुह्य पक्षपुटेन मामाच्छादयन्तं पितरं मे गतासुं विधाय शुष्कपर्णपुञ्जोपरि समपातयत्। अहन्तु भाग्यवशाज्जीवितो जलमन्विष्यन् चलितो मुनिकुमारेणासाधारणमहिम्ना हारीतनाम्ना स्वपितुर्महर्षेर्जाबालेराश्रममुपनीतः। स तु महर्षिर्मामवलोक्य हसन् पृष्टश्च मुनिभिः कृतकृत्यो रात्रौ सविस्तरमुवाच। (कथामुखम्)

"आसीदवन्तीदेशे राजधान्यामुज्जयिन्यां महाराजाधिराजस्तारापीडो नाम। तस्य महिषी विलासवती, सर्वगुणाकरो मन्त्री शुकनासस्तस्य च पत्नी मनोरमा नामाभूत्। चिरमनपत्येनातिपरुषायां विलासवत्यां विविधं व्रतमाचरन्त्यां कदाचित् राजा तन्मुखे प्रविशन्तं चन्द्रं स्वप्ने ददर्श। शुकनासोऽपि स्वप्ने केनचिद्विप्रेण निहितं मनोरमायाः क्रोडे पुण्डरीकमेकमद्राक्षीत्। अथ विलासवती चन्द्रापीडं नाम पुत्रं सुषाव, मनोरमापि वैशम्पायनं नाम। तौ च कुमारौ परस्परपरमसौहार्दसम्पन्नौ राज्ञो यत्नेन सकलविद्यापारमुपगतौ। ततस्तु चन्द्रापीडो राजादेशाद्बलाहकनाम्ना सेनापतिना समुपनीतमिन्द्रायुधनामानमश्व

वरमधिवस्य विद्यालयात् राजधानीमाजगाम। जनकजनन्यादिसन्दर्शनानन्दितो मृगयां विधायागत पत्रलेखाप्राप्तिमुदित शुकनासेन विविधमुपदिष्टो राज्ञा च यौवराज्येऽभिषिक्तो दिग्विजयाय प्रतस्थे। वत्सरत्रयेण सर्वा दिशो विदिशश्च विजित्य हेमकूटधाम्ना किरातानामावासभूमिं विश्रामहेतोरधितिष्ठन् कदाचिदेकाकी चन्द्रापीड इन्द्रायुधमारुह्य मृगयानिर्गत किन्नरमिथुनमालोक्य तद्ग्रहणायानुधावन् पञ्चदश योजनानि ययौ। तस्मिंश्च किन्नरमिथुने सन्निहित मुत्तुङ्गशैलशृङ्गमारूढे नितान्तनिर्वेदमापन्न परिश्रान्त पिपासातुरश्च जलमन्विष्यन् विशालमनोहरमच्छोद नाम सरो दृष्टवान्। कृतावगाहनपानश्च तत्तीरे विश्राम्यन् वीणानिनादसमेत मधुर गानमाकर्ण्य तदनुसृत्य गत परमसुन्दरीं योगिनीं शिवान्तिकगतामालोकयत्। ततश्च लब्धातिथिसत्कारेण तेन स्पृष्टा सा समभाषत—"अरिष्टातनयो गन्धर्वराजो हंसो मे जनक, सोममयूखसम्भवकुलजाता गौरीदेवी च जननी, नाम च मे महाश्वेतेति। एकदा तु समतीतशैशवा खल्वहमस्मिन्नेव सरसि स्नातुमागता कुतोऽप्यलौकिक सौरभमाघ्राय तदभिलक्ष्य गच्छन्ती केनचिदन्येन कुमारेण सहित द्वितीयमिव मन्मथ मुनिकुमारमेकमालोक्य 'कोऽय युवा, किमभिधाना चेय कुसुममञ्जरी' इति द्वितीय कुमारमपृच्छम्। स पुनरवादीत्—"दिव्यस्य महर्षे श्वेतकेतोर्निरुपमरूपमोहिताया श्रियो देव्या जातोऽय तस्यैव महर्षे पालितपुत्र, पुण्डरीकजाततया पुण्डरीक इत्यस्य नाम, इयन्तु पारिजातकुसुममञ्जरी नन्दनवनदेवतया सादरमुपहृता। सोऽपि कुमार —"चपले। किमनेन प्रश्नपरिश्रमेण, यदि रोचते गृह्यतामियम्" इत्युक्त्वा ता मञ्जरी मम कर्णे निवेशयन् पतितामपि हस्तादक्षमालिका नाज्ञासीत्। अहन्तु ता मालामादाय प्रस्थिता। अत्रान्तरे द्वितीयेन तु कुमारेण त खलु मन्मथविकारमवलोक्य तिरस्क्रियमाण स कुमार समुपेत्य मालां ययाचे। अहन्तु स्वकीयमेव स्थूलमुक्तामय हार स्वकण्ठादुन्मुच्य तस्मै दत्त्वा ता पुन स्फटिकजपमालां कण्ठे निधाय कृतस्नाना जनन्या सह स्वगृहमागच्छम्। अथ मुहूर्त्तानन्तर परिचारिका मे तरलिका नाम समागत्य तेन कुमारेण कृत मत्परिचयादिप्रश्नवृत्तान्तमज्ञापयत्, अददाच्च पत्रमेकम्, तत्र चेयमार्या लिखितासीत्—

"दूर मुक्तालतया बिसमितया विप्रलोभ्यमानो मे।
हस इव दर्शिताशो मानसजन्मा त्वयानीत॥"

दिवावसाने तु कपिञ्जल समागत्य समुत्कण्ठितहृदयां मां तस्य कुमारस्य मन्मथव्यथामावेदयन् मम मातरमागच्छन्तीमवेत्य त्वरित प्रातिष्ठत। जनन्यान्तु

समागत्य प्रस्थितायाम्, अतीतायाञ्च सन्ध्यायाम्, उदिते चन्द्रमसि, निभृतमहं तरलिकाद्वितीया तमभिसरन्ती कपिञ्जलविलापमाकर्णयन्ती द्रुतमुपेत्य मन्दभाग्या त खलु कुमारमुपरतमद्राक्षम्। अत्रान्तरे चन्द्रमण्डलादवतीर्य कश्चन महा पुरुष—"वत्से। महाश्वेते! न त्वया जीवन परित्याज्यम्, पुनरप्यनेन सह ते भविष्यति समागम" इत्यभिधाय त मृतमुत्क्षिप्य गगनमुदतिष्ठत्। रोषपरवश कपिञ्जलोऽपि बद्धपरिकरस्तमन्वधावत्। अहन्तु विस्मिता च विषण्णा च संसारस्य क्षणभङ्गुरतामालोकयन्ती व्रतमिदमवलम्बितवती" इति।

अथ "सा तरलिका क्व गता" इति चन्द्रापीडेन पृष्टा सा पुनरवादीत्—"मदिरादेव्या जाता गन्धर्वराजस्य चित्ररथस्य कन्या कादम्बरी नाम द्वितीयमिव मे हृदयम्। स च महार्त्तया "सशोकायां महाश्वेतायां नाहमात्मन पाणि ग्राहयिष्यामि" इति प्रतिजज्ञे। गन्धर्वराजानुरोधेन तु कादम्बर्य्या पाणिग्रहणे सम्मतिसाधनाय तरलिकामहमद्यैव प्रेषितवतीति।

अथ परेद्यु प्रभात एव तरलिकया सह केयूरको नाम कश्चित् कादम्बरीभृत्य समागत्य तस्या पाणिग्रहणासम्मति न्यवेदयत्। ततो भृशमनुरुन्धत्या महा श्वेतया सह चन्द्रापीडो गन्धर्वराजधानीमुपेत्य असामान्यरूपलावण्यवती कादम्बरीं पश्यन्नमुह्यत्। कादम्बर्य्यपि तथैव परिमुह्यन्ती यथावसर दुकूलयुगल शेष नामानमेकममूल्य हारञ्च चन्द्रापीडायोपजहार। स तु कादम्बर्य्या भाव-विमोहितस्तदीयहृदयेन सह अच्छोदसरस्तीरमागत्य स्वकीयमेवागत स्कन्धावार-मालोक्य प्रविश्य च वैशम्पायनाय सर्व न्यवेदयत्। अथ परेद्यु प्रभाते केयूरकेण समुपेत्य कादम्बरीदशा वर्ण्यता सहैव चन्द्रापीड पत्रलेखामादाय गत्वा हिमगृहगता कामाकुलां कादम्बरी पश्यन व्यङ्ग्यार्थपूर्ण ललितमालाप विधाय, तदनुरोधेन पत्रलेखां तत्रैवावस्थाप्य स्कन्धावारमागत प्राप्य च पितु पत्रम्, पत्रलेखामादाय गमनाय सेनापतिपुत्र मेघनादनामान स्थापयित्वा उज्जयिनी मयासीत्। कतिपयदिनानन्तरन्तु मेघनादेन सह पत्रलेखा गत्वा चन्द्रापीडाय कादम्बर्य्या अवस्थामुक्ति विषममिव न्यवेदय"दिति। (पूर्वभाग)

---

# सूचीपत्रम् ।

## अथ स्वरूपनायकादिनिरूपणम्।

कादम्बरी नामेदं कथाकाव्यम्। यथा साहित्यदर्पणे---

कथायां सरसं वस्तु गद्यैरेव विनिर्मितम्।
क्वचिदत्र भवेदार्या क्वचिद्वक्त्रापवक्त्रके।
आदौ पद्यैर्नमस्कारः खलादेर्वृत्तकीर्तनम्॥

अत्र मुक्तकादीनि चतुर्विधान्येव गद्यानि सन्ति किन्तु उत्कलिकाप्रायमेव गद्यं बहुलम्। तथा च तत्रैव --

वृत्तबन्धोज्झितं गद्यं मुक्तकं वृत्तगन्धि च।
भवेदुत्कलिकाप्रायं चूर्णकञ्च चतुर्विधम्॥
आद्यं समासरहितं वृत्तभागयुतं परम्।
अन्यद्दीर्घसमासाढ्यं तुर्यं चाल्पसमासकम्॥

अनुकूलो धीरोदात्तलक्षणश्चन्द्रापीडो नायकः। यथा -

अनुकूल एकनिरतः।
अविकत्थनः क्षमावानतिगम्भीरो महासत्त्वः।
स्थेयान्निगूढमानो धीरोदात्तो दृढव्रतः कथितः॥

कादम्बरी तु कन्या परकीया मुग्धा नायिका। यथा---

कन्या त्वजातोपयमा सलज्जा नवयौवना।
परकीया द्विधा प्रोक्ता परोढा कन्यका तथा।
प्रथमावतीर्णयौवनमदनविकारा रतौ वामा।
कथिता मृदुश्च माने समधिकलज्जावती मुग्धा॥

परिणयात् परन्तु (उत्तरार्द्धे) स्वकीया मध्या च मन्तव्या।

विप्रलम्भशृङ्गारः प्रधानरसस्तत्र च पूर्वार्द्धे उत्तरार्द्धस्य कियदंशे च पूर्वरागरूपः, उत्तरार्द्धशेषे तु करुणारूपः। सम्भोगशृङ्गारोऽपि क्वचिद्दृश्यते।

यत्र तु रतिः प्रकृष्टा नाभीष्टमुपैति विप्रलम्भोऽसौ।
श्रवणाद्दर्शनाद्वापि मिथः संरूढरागयोः।
दशाविशेषो योऽप्राप्तौ पूर्वरागः स उच्यते॥
यूनोरेकतरस्मिन् गतवति लोकान्तरं पुनर्लभ्ये।
विमनायते यदैकस्तदा भवेत् करुणविप्रलम्भाख्यः॥

करुणहास्यादयोऽन्येऽपि रसाः सन्ति।

बाहुल्येन माधुर्य्यं गुणः । यथा-

चित्तद्रवीभावमयो ह्लादो माधुर्य्यमुच्यते ।
सम्भोगे करुणे विप्रलम्भे शान्तेऽधिकं क्रमात् ।

प्रसादगुणोऽपि न विरलः ।

अतिरेकेण पाञ्चाली रीतिः । यथा -

वर्णैः शेषैः पुनर्द्वयोः । समस्तपञ्चषपदो बन्धः पाञ्चालिका मता ॥

अन्या अपि रीतयोऽल्पाधिकभावेन परिलक्ष्यन्ते ।

—०—

## तद्य सग्रहश्लोक.

चन्द्रापीडोऽनुकूलः सकलगुणधरो नायकोऽस्मिन्नुदात्त
नेता कन्यान्यदीया मृदुललिततनुर्मुग्धकादम्बरी च ।
पाञ्चाली नाम रीतिर्विलसति बहुला विप्रलम्भो रसोऽङ्गी
माधुर्य्याख्यो गुणो वा कविमुकुटमणेः काव्ययोरन्यमेतत् ॥

# কাদম্বরী।

---

## পূর্ব্বভাগঃ।

—(০)—

### মঙ্গলাচরণম্।

---

**রজোজুষে জন্মনি সত্ত্ববৃত্তয়ে স্থিতৌ প্রজানাং প্রলয়ে তমঃস্পৃশে।**
**অজায় সর্গস্থিতিনাশহেতবে ত্রয়ীময়ায় ত্রিগুণাত্মনে নমঃ ॥১॥**

নমো গণেশায়।

শিরসি সুরশিগঙ্গাং চিত্রভানুঞ্চ ভানুং
বপুষি দধদনন্তং সাগরান্তামনন্তাম্।
উরসি চ জগদম্বালম্বতে সন্ততং যঃ
মনসি চিরমুদীয়াৎ শিবঃ শ্রীশিবঃ সঃ ॥১॥

জ্যোতির্বিক্ষণকথা পরিমোহদায়ান্ মনো বিকাসয়ন্ প্রপিতকোষু।
মিলতু ঽস্য জলধিস্থ মিতীষু দেবদেব। ভব মেঽদ্য সহায় ॥২॥

কাদম্বরীরসনিপানমিতান্তমত্তো জানাতি কোঽপি ন জনো গুণদোষবার্ত্তাম্।
তস্মাত্তদীয়বিবৃতাবপি দোষশঙ্কী শ্রীমানিহ প্রযততে হরিদাসশর্ম্মা ॥৩॥

মূলানুবৃত্তা সরলা সুগাঢা সপল্লবা কল্পলতাঽভিধানা।
মহজ্জনানন্দনসম্ভবস্য টীকা মদীয়া নিখিলার্থিতার্থম্ ॥৪॥

অথ তত্রভবান্ মহাকবির্বাণভট্টঃ প্রারিপ্সিতপরিসমাপ্তয়ে মঙ্গলাচরণং শিষ্টাচারাৎ ফলদর্শনাৎ শ্রুতিতশ্চ ইতি সাংখ্যসূত্রাদিবোধিতকর্ত্তব্যতাকতয়া জগৎকারণস্য সগুণব্রহ্মণো নমস্কারং কুরুতে—

রজোজুষ ইতি। প্রজায়ন্ত ইতি ব্যুৎপত্ত্যা প্রজাপদমত্র জন্যপদার্থমাত্রপরং বোধ্যম্। তথা চ প্রজানাং জগতাং জন্মনি উৎপত্তিকালে রজোজুষে রজোগুণাবলম্বিনে চতুরাননমূর্ত্তয়ে স্থিতৌ প্রজানাং পরিপালনকালে সত্ত্ববৃত্তয়ে সত্ত্বগুণাধিষ্ঠিতায় বিষ্ণুস্বরূপায় তথা প্রলয়ে প্রজানাং বিনাশকালে তমঃস্পৃশে তমোগুণভাজে রুদ্ররূপায় সর্গস্থিতি

---

যিনি জগতের উৎপত্তির বেলায় রজোগুণাবলম্বী ব্রহ্মা, পরিপালনের সময় সত্ত্বগুণাধিষ্ঠিত বিষ্ণু, আবার প্রলয়কালে তমোগুণশালী রুদ্র, সৃষ্টি, স্থিতি ও প্রলয়ের কারণ বেদময় মায়াশালী সেই পরব্রহ্মকে নমস্কার করি ॥১॥

जयन्ति बाणासुरमौलिलालिता दशास्यचूडामणिचक्रचुम्बिनः ।
सुरासुराधीशशिखान्तशायिनो भवच्छिदस्त्र्यम्बकपादपांशवः ॥२॥
जयत्युपेन्द्रः स चकार दूरतो बिभित्सया यः क्षणलब्ध-(१) लक्ष्मया (२)।
दृशैव कोपारुणया रिपोरुरः स्वयं भयाद्भिन्नमिवास्रपाटलम् ॥३॥

नाशहेतवे जगतां सृष्टिस्थितिसंहारकारणीभूताय त्रयीमयाय ऋग्यजुःसामरूपाय त्रिगुणात्मने त्रिगुणा माया आत्मनि यस्य तस्मै मायाशालिने अजाय नित्याय परब्रह्मणे नमः इति वाचनिकनमस्कारः ।

अत्र रजोजुषे सर्गहेतवे सत्त्ववृत्तये स्थितिहेतवे तमःस्पृशे नाशहेतवे इति यथाक्रमं नान्वयसम्भवाद्यथासंख्यमलङ्कारः ।

पद्यार्थेषु च यथासंख्यम् उक्तं वदन्ति च यथासंख्यं जतो अरो इति लक्षणात् ।

रजोगुणादीनां लक्षणमुक्तं सांख्यकारिकायाम्—

सत्त्वं लघु प्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः ।
गुरु वरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः ॥

ब्रह्मणः सर्गादिहेतुत्वे प्रमाणन्तु जन्माद्यस्य यतः इति वेदान्तसूत्रम्, यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्म इति श्रुतिः, ब्रह्मत्वे सृजते लोकान् विष्णुत्वे पालयत्यपि। रुद्रत्वे संहरत्येव तिस्रोऽवस्थाः स्वयम्भुवः ॥ इति स्मृतिश्च ।

हेतुत्वञ्चास्य निमित्तत्वमुपादानत्वञ्चावगन्तव्यम् । तथा च वेदान्तसूत्रम्— प्रकृतिश्च प्रतिज्ञादृष्टान्तानुपरोधात् । प्रकृतिश्च उपादानकारणञ्च ब्रह्माभ्युपगन्तव्यं निमित्तकारणञ्च इति शाङ्करभाष्यञ्च ।

चत्वारि शृङ्गास्त्रयोऽस्य पादाः इत्यादिश्रुतेः वेद एव परं ब्रह्म इत्यादिस्मृतेश्च ब्रह्मणस्त्रयीमयत्वम् । अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः । अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः ॥ इति श्रुतेः मायान्तु प्रकृतिं विद्यान्मायिनन्तु महेश्वरम् । तस्यावयवभूतैस्तु व्याप्तं सर्वमिदं जगत् ॥ इति स श्रुत्यन्तरवचनभाष्यधृतस्मृतेश्च मायाधिष्ठानकात् ब्रह्मणस्त्रिगुणात्मकत्वमवगन्तव्यमिति संक्षेपः ॥१॥

इदानीं शङ्करादिभ्यो दिति स्मृतश्चिकीर्षितकाव्यकरणोपयोगिज्ञानलाभाय चरणरेणूत्कर्षप्रतिपादनव्याजेन शङ्करं स्मरति जयन्तीति । बाणासुरस्य बाणनाम्नो महाशैवस्य असुरस्य मौलिना मुकुटेन लालिताः नमस्कारकाले आदरेण गृहीताः दशास्यचूडामणीनां रावणकिरीटरत्नानां चक्रं समूहं चुम्बन्ति प्रणामकाले स्पृशन्ति ये ते । सुरासुराधीशानां देवासुरपतीनां शिखान्तेषु चूडाग्रभागेषु शयितुं प्रणतिकाले स्थातुं शीलं येषां ते तथा भवच्छिदः पुनर्जन्मनिवर्त्तकाः मोक्षोपयोगिज्ञानजननद्वारा संसारक्लेशनिवर्त्तकाः इत्यर्थः त्र्यम्बकस्य त्रिलोचनस्य शिवस्य पादपांशवः चरणधूलयो जयन्ति सर्वोत्कर्षेण वर्त्तन्ताम् । जीवतु वन्तस्तिवन्ति इति वचनात् लट् । उत्कर्षप्रतिपादनेन नमस्कार आक्षिप्यते ।

अत्र उत्कर्षप्रतिपादनकार्य्यं प्रति बाणासुरमौलिलालनादिकारणचतुष्टयोपन्यासात् समुच्चयोऽलङ्कारः वृत्त्यनुप्रासश्चेत्यनयोः संसृष्टिः ॥२॥

অসুররাজ বাণকর্ত্তৃক আদরে মস্তকে পরিগৃহীত, রাক্ষসরাজ রাবণের মুকুটমণিসংস্পর্শী দেবাধিপতি ও অসুরাধিপতিগণের কেশকলাপবর্ত্তী এবং সংসারযন্ত্রণাবিনাশী মহাদেবের চরণ ধূলির জয় হউক ॥২॥

(१) क्षण । (२) लक्ष्मया।

नमामि भर्वी (१) स्वरणाम्बुजद्वय सशेखरै र्मौखरिभि कृतार्च्चनम् ।
समस्तसामन्तकिरीटवेदिका-विटङ्कपीठोल्लुठितारुणाङ्गुलि ॥४॥

## सज्जनदुर्जनयो स्तुतिनिन्दे ।

अकारणाविष्कृतवैरदारुणादसज्जनात् कस्य भय न जायते ।
विष महाहेरिव यस्य दुर्वच सुदु सह सन्निहित सदा मुखे ॥५॥

इष्टदेवतास्मरणात् सम्पूर्ण फललाभाभिलाषेण नरसिंहमूर्त्ति विष्णु स्मरति जयतीति । स प्रसिद्ध अनुजत्वेन इन्द्रमुपगत इत्युपेन्द्रो नरसिंहमूर्त्ति विष्णु जयति सर्वोत्कर्षेण वर्त्तताम् । य विभित्सया भेत्तु विदारयितुम् इच्छया दूरत क्षण लब्ध लक्ष्य विषय तदेवोर स्थल यया तया क्षण तदुर स्थल पश्यन्त्या इत्यर्थ कोपारुणया क्रोधेन रक्तवर्णया दृशा च क्षुषैव न तु नखद्वारा विदारणेनेत्यर्थ रिपो असुरो हिरण्यकशिपो उरो वक्ष स्थल भयात् स्वय भिन्नमिव नरसिंहभयात् आत्मना विदीर्णमिव असृपाटल स्वकीयरक्तनयनकिरणपातेन रुधिरवत् रक्तं चकार । एतेन बाणेऽहो नरसिंहोपासक आसीदिति प्रतीयते ।

अत्र भयात् स्वय भिन्नमिव इत्युत्प्रेक्षाभिमानिनी क्रियोत्प्रेक्षा हिरण्यकशिपुवक्षस स्वकीयश्यामगुणत्यागात् पाटलगुणग्रहणेन तद्गुणालङ्कारो लुप्तोपमा च इत्येतेषामङ्गाङ्गिभावेन सङ्कर । स इति तच्छब्दस्य प्रसिद्ध परामर्शित्वात् यच्छब्दस्य चोत्तरवाक्यगतत्वेन तच्छब्दानपेक्षणात् आत्मा जानाति यत् पाप मित्यादिवदत्र चोदा हृतवत् न वाक्यगताविधेयाविमर्श दोष ॥३॥

आदौ गुरु नमस्कृत्य इति स्मरणाद्गुरु नमस्करोति नमामीति । शेखरै शिरोमाल्यै सह वर्त्तमाना इति सशेखरास्तै मुखरस्य वेदपाठेन शब्दायमानस्य भाव इति मौखर्य तदेषामस्तीति मौखरिण तै वेदध्वनि कारिभि शिष्यै । केचित्तु सशेखरै सकिरीटै मौखरिभि क्षत्रियविशेषैरिति व्याचक्षते । कृता अर्च्चना पूजा यस्य तत् । समस्तानां सामन्तानाम् अधिकृतानां राज्ञाम् किरीटान्येव वेदिका परिष्कृतभूमय तासु यानि विटङ्क पीठानि कपोतपालिकास्थलानि मध्यगतोन्नतदेशा इत्यर्थ तेषु उल्लुठिता प्रणामकाले संसक्ता अतएव किरीटमणि किरणसम्पर्कात् स्वभावाच्च रक्तवर्णा अङ्गुलयो यस्य तत् । भर्वो भर्वुनामकस्य गुरोश्चरणाम्बुजद्वय नमामि । एतेनास्य नित्याध्यापकत्व सार्वभौममन्त्रित्वञ्च सूचितम् ।

अत्र परितर्पणमात्रसूचनाय किरीटेषु वेदिकात्वारोप इति यथाकथञ्चित् निरङ्ग केवलरूपकमलङ्कार । पूजोपयोगिपुष्पसमग्रद्योतनाय सशेखरैरित्युक्तमिति नापुष्टार्थत्वदोष । विटङ्कपदञ्च अत्युन्नतत्वप्रतिपादनप्रयोजनाय किरीटमध्यगतोन्नतदेशार्थे लक्षणया प्रयुक्तमिति न नेयार्थतादोषोऽपि ।

कपोतपालिकायान्तु विटङ्क पुन्नपुंसक मित्यमर ॥४॥

জগৎপ্রসিদ্ধ নরসিংহমূর্ত্তি নারায়ণের জয় হউক, যিনি বিদারণ করিবার ইচ্ছায় দূর হইতে ক্ষণকাল অবলোকনকারী এবং ক্রোধে রক্তবর্ণ নিজনয়নদ্বারাই হিরণ্যকশিপুর বক্ষঃস্থলকে ভয়বশত আপনা হইতে বিদীর্ণের ন্যায় রুধিরতুল্য পাটলবর্ণ করিয়াছিলেন ॥৩॥

মস্তকে পুষ্পমাল্যধারী ও সর্ব্বদা বেদধ্বনিকারী শিষ্যগণ যাহার পূজা করে এবং সামন্তরাজগণের কিরীটবেদিকার উন্নতস্থানস্পর্শে যাহার অঙ্গুলিসমূহ রক্তবর্ণ হইয়া থাকে, ‘ভর্বু’ নামক গুরুদেবের সেই চরণকমলযুগলকে নমস্কার করি ॥৪॥

(१) भत्र्वी भत्र्वी

कटु क्वणन्तो मलदायकाः खलास्तुदन्त्यलं बन्धनशृङ्खला इव।
मनस्तु साधुध्वनिभिः पदे पदे हरन्ति सन्तो मणिनूपुरा इव॥ ॥
सुभाषितं हारि विशत्यधो गलान्न दुर्जनस्यार्करिपोरिवामृतम्।
तदेव धत्ते हृदयेन सज्जनो हरिर्महारत्नमिवातिनिर्म्मलम्॥७॥

अकारणेति। अकारणम् आविष्कृतेन उद्भाविना वैरेण निन्दादिभिः शत्रुतया दारुणात् भीषणप्रकृतेः असज्जनात् कस्य जनस्य भयं न जायते अपि तु सर्वस्यैव जायत इत्यर्थः। महाहेर्महासर्पस्य विषमिव यस्य असज्जनस्य मुखे वदने दुःसहम् अतीवकष्टेन सहनीयं दुर्वचः कटुवाक्यं सदा सन्निहितम् आसन्नम् उपस्थितं वर्त्तते। अतएव ममापि चिकीर्षितकाव्यनिन्दावाग्सम्भावनया असज्जनाद्भयमस्तीति भावः।

अत्र प्रथमार्द्धे अर्थापत्तिः द्वितीयार्द्धे चोपमा अनयोः परस्परनैरपेक्ष्यात् संसृष्टिरलङ्कारः॥५॥

कटु इति। कटु श्रुतिदुःखावहं यथा स्यात्तथा क्वणन्तः ब्रुवन्तः शब्दायमानाश्च मलदायकाः दोषाविष्कारिणः स्वसंलग्नस्थाने मलजनकाश्च खलाः दुर्जनाः बन्धनशृङ्खला इव अलम् अत्यर्थं तुदन्ति मनो बन्धनस्थानञ्च व्यथयन्ति। तु किन्तु सन्तः सज्जनाः मणिनूपुरा इव पदे पदे स्थाने स्थाने सर्वत्रैवेत्यर्थः प्रतिपदक्षेपे च साधुध्वनिभिः सन्तोषकरवाक्यैः श्रुतिमधुरशब्दैश्च मनो हरन्ति आकर्षन्ति। सुतरां ममापि प्रारिप्सितकाव्यस्य निन्दया दुर्जनात्मनो वेदना प्रभविष्यति सज्जनाच्च सन्तोषः सम्भाव्यत इति भावः।

अत्र पूर्व्वोपमयोर्मिथो निरपेक्षतया संसृष्टिरलङ्कारः।

शृङ्खला पुंस्कटीवस्त्रबन्धे च निगडे त्रिषु इति मेदिनी॥६॥

सुभाषितमिति। हारि मनोहरं सुभाषितं प्रशस्तवाक्यं सत्काव्यादि कर्त्तृ अर्करिपोः राहोः अमृतं पीयूषमिव दुर्जनस्य खलस्य गलात् कण्ठात् अधो न विशति प्रवेशं न लभते। यथा राहुर्गलादधःस्थानाभावात् कवलीकृतस्यापि चन्द्रस्यामृतं निगिरितुं नार्हति तथा दुर्जनोऽपि सहृदयत्वाभावात् यत्नेनाध्याप्यमानमपि सत्काव्यादिकं नावबुध्यत इति सरलार्थः। किन्तु सज्जनो गुणग्राही जनः हरिर्विष्णुः अतिनिर्म्मलं महारत्नं कौस्तुभमणिमिव तदेव हारि सुभाषितं हृदयेन धत्ते धारयति। सुतरां ममाप्येतत् काव्यं दुर्जनो नावबुध्यमानः परिहरेत् गुणग्राही तु साकल्येन बुध्यमानो नितरामाद्रियेतेति भावः।

अत्राप्युपमयोः पूर्व्ववत् संसृष्टिरलङ्कारः॥७॥

বিনা কারণে যে শত্রুতা প্রকাশ করে এবং ভয়ঙ্কর সর্পের মুখে বিষের ন্যায় যাহার মুখে সর্ব্বদা নিতান্ত অসহ্য দুর্ব্বাক্য উপস্থিত থাকে এইরূপ ভীষণস্বভাব দুর্জন হইতে কাহার ভয় না জন্মে? ॥৫॥

কটুভাষী এবং দোষোদ্ভাবনকারী দুর্জনগণ, রুণ্‌রুণ্ শব্দকারী ও মলজনক বন্ধনশৃঙ্খলের ন্যায় অত্যন্ত বেদনা জন্মায়, কিন্তু মণিময় নূপুর যেমন প্রতিপদক্ষেপে শ্রুতিমধুরশব্দে চিত্ত আকর্ষণ করে তেমন সাধুগণ সর্ব্বত্রই মধুর বাক্যে চিত্ত আকর্ষণ করেন ॥৬॥

চন্দ্রের অমৃত যেমন রাহুর গলার নীচে প্রবেশ করে না, সেইরূপ মনোহর বাক্য দুর্জনের কণ্ঠের নীচে প্রবেশ করে না, কিন্তু নারায়ণ যেমন অতিনির্ম্মল কৌস্তুভমণি হৃদয়ে ধারণ করেন গুণগ্রাহী সজ্জন, সেইরূপ মনোহর বাক্য হৃদয়ে ধারণ করেন ॥৭॥

# कथाप्रशंसा ।

स्फुरत्कलालापविलासकोमला करोति रागं हृदि कौतुकाधिकम् ।
रसेन शय्यां स्वयमभ्युपागता कथा जनस्याभिनवा वधूरिव ।८॥
हरन्ति कं नोज्ज्वलदीपकोपमैर्नवैः पदार्थैरुपपादिताः कथाः ।
निरन्तरश्लेषघनाः सुजातयो महास्रजश्चम्पककुड्मलैरिव ॥९॥

स्फुरदिति । स्फुरतः प्रकाशमानस्य स्पष्टं प्रतीयमानस्य कलालापस्य नृत्यगीतादिकलाविद्यासम्बन्धिनो वाक्यस्य विलासेन विन्यासेन कोमला मृदुला युद्धवर्णनादिवन्नोद्धतेत्यर्थः पक्षान्तरे तु स्फुरन्तौ प्रकाशमानौ यौ कलालापविलासौ मधुरालापविभ्रमौ ताभ्यां कोमला मनोहरा । तथा रसेन शृङ्गारादिना स्वप्रतिपाद्यशृङ्गारादिरसैक्येनेत्यर्थः शय्यां गुम्फं ग्रथनम् अवान्तरकथानां स्वप्रासङ्गिकतया संयोगमिति यावत् स्वयम् अभ्युपागता आत्मना प्राप्ता अन्यत्र तु रसेन सुरतानुरागेण स्वयम् आत्मनैव शय्यां शयनीयम् अभ्युपागता उपस्थिता अभिनवा अपूर्वा कथा तदाख्यः प्रबन्धः अभिनवा वधूरिव तरुणी भार्य्येव जनस्य हृदि चित्ते कौतुकेन अधिकं बहुलीभूतं रागं श्रवणस्य सुरतस्य च अनुरागं करोति जनयति । सुतरामियमपीदृश्येव मत्प्रणीता कादम्बरीकथा लोकस्य श्रवणानुरागं जनयिष्यतीति भावः ।

अत्र पूर्णोपमालङ्कारः । रसेन इत्युक्तावपि न रसस्य स्वशब्दोक्तिदोषः स्वरूपेणानुभूयमानस्यैव रसस्य तत्तच्छब्देनाभिधाने तद्दोषाङ्गीकारात् अत्र तु स्वरूपेणानुभूयमानत्वाभावात् अन्यथा शृङ्गारवीरकरुणाद्भुतहास्यभयानकाः इत्यमरोक्त्यादावपि तद्दोषप्रसङ्गात् ।

कोमलं मृदुसुन्दरे इति विश्वः । शय्या तल्पे शब्दगुम्फे इत्यनेकार्थः । अस्यानुरूपः श्लोको यथा—

दर्शयन्ती मुखे खेदं प्रस्खलन्ती पदे पदे । कथञ्चिन्नीयते शय्यां कथा नववधूरिव ॥ ॥८॥

हरन्तीति । उज्ज्वलाः स्पष्टाः दीपकोपमाः दीपकालङ्कारोपमालङ्कारा येषु तैः नवैरपूर्वैः पदार्थैः शब्दानामभिधेयैः उपपादिता विरचिता निरन्तरेण अविरतेन प्रायश एव श्लेषेण श्लेषालङ्कारेण घनाः सुगाढा दुरवगाहाः सुजातयः सुन्दरजातीयाः कथाः तदाख्याः प्रबन्धाः उज्ज्वला दीपका प्रदीपा उपमा उपमानानि येषां तैः उज्ज्वलप्रदीपतुल्यैरित्यर्थः नवैः नूतनैः पदार्थैः उपादेयपदार्थभूतैः चम्पककुड्मलैश्चम्पकमुकुलैः उपपादिता ग्रथिता निरन्तरश्लेषेण अव्यवधानसंयोगेन घनाः निबिडाः तथा शोभना जातयो जातिकुसुमानि यासु ताः महास्रजो महामाला इव कं जनं न हरन्ति नाकर्षन्ति अपि तु सर्वमेवेत्यर्थः । सुतरां ममाप्येषा कथा सर्व्वमेव जनमाकर्षेदिति भावः ।

अत्रार्थोपम्पिपूर्णोपमयोरङ्गाङ्गिभावेन सङ्करोऽलङ्कारः । विकासोन्मुखतया विशेषसौन्दर्य्यप्रतिपादनाय कुड्मलग्रहणम् ॥९॥

---

সুস্পষ্ট মধুরালাপে ও হাবভাবে নিতান্ত মনোহরা এবং অনুরাগবশত আপনা হইতেই শয্যায় উপস্থিতা যুবতি বধূর ন্যায় সুগমকলাবিদ্যাসংক্রান্ত বাক্যবিন্যাসে সুশ্রাব্য এবং শৃঙ্গারাদি কোন একটী রসের অনুসরণ করায় অবান্তর কথার সহিত সুশ্লিষ্ট কথাকাব্য, লোকের হৃদয়ে কৌতুকবশত সমধিক অনুরাগ জন্মাইয়া থাকে ॥৮॥

সহজবোধ্য দীপক ও উপমালঙ্কারসম্পন্ন, অপূর্ব্ব পদার্থের সমাবেশে বিরচিত এবং অবিরত

## कविवंशवर्णनम्।

बभूव वात्स्यायनवंशसम्भवो द्विजो जगद्गीतगुणोऽग्रणीः सताम्।
अनेकगुप्तार्चितपादपङ्कजः कुबेरनामांश इव स्वयम्भुवः ॥१०॥
उवास यस्य श्रुतिशान्तकल्मषे सदा पुरोडाशपवित्रिताधरे।
सरस्वती सोमकषायितोदरे समस्तशास्त्रस्मृतिबन्धुरे मुखे ॥११॥

बभूवेति। वत्सस्यापत्यमिति वात्स्यः स एव अयनं गोत्रप्रवर्त्तकतया आश्रयो यस्य स तादृशो यो वंशस्तत्र सम्भव उत्पन्नः। जगता जगज्जनेन गीताः कीर्त्तिता गुणा विद्याविनयादयो यस्य सः। सतां साधूनाम् अग्रणीः अग्रेसरः श्रेष्ठः। अनेकैः बहुभिः गुप्तैः वंश्यैः अर्चिते पूजिते पादपङ्कजे चरणकमलद्वयं यस्य सः। तथा स्वयम्भुवो ब्रह्मणः अंश अंशावतार इव कुबेरनामा द्विजो ब्राह्मणो बभूव।

अत्र स्वयम्भुवोऽंश इवेति वाच्या भावाभिमानिनी द्रव्योत्प्रेक्षालङ्कारः। शर्म्मा देवश्च विप्रस्य वर्म्मा त्राता च क्षत्रियस्य च। गुप्तदासात्मकं नाम प्रशस्तं वैश्यशूद्रयोः ॥ इति वचनात् गुप्तपदेन वैश्यग्रहणम् ॥१॥

उवासेति। श्रुतिभिः वेदैः वेदपाठैरित्यर्थः शान्तं विनष्टं कल्मषं पापं यस्य तस्मिन् नित्यवेदपाठेन वाचनिकपापहीन इत्यर्थः। पुरोडाशेन अग्निहोत्रादौ हुतशेषेण हविषा पवित्रितौ भक्षणकाले संयोगेन पवित्रीकृतौ अधरौ ओष्ठौ यस्य तस्मिन्। सोमेन सोमरसेन यज्ञे सोमरसपानेन कषायितं सुरभीकृतम् उदरम् अभ्यन्तरं यस्य तस्मिन्। तथा समस्ता या शास्त्रस्मृतयः व्यासादिप्रणीतब्रह्मसूत्रादीनि शास्त्राणि मन्वादिप्रणीतधर्म्मसंहिताश्च स्मृतयः ताभिस्तत्पाठैरित्यर्थः बन्धुरं रम्यं तस्मिन्। यस्य कुबेरस्य मुखे वदने सरस्वती वाग्देवी सदा उवास वसति स्म। एतेनास्य नित्यवेदपाठित्वं नियतयाज्ञिकत्वं सर्वशास्त्रज्ञत्वञ्च प्रत्यायितम्।

पुरोडाशो हविर्भेदे हुतशेषे च कीर्त्तितः इति विश्वः। बन्धुरं मुकुटे विषु स्याद्रम्यनम्रयोः इति मेदिनी।

पुरोडाशेति मन्त्रे श्वेतवाहकथमसपुरोडाशावयजिभ्यो विन् इति निपातः। पवित्रौ कृताविति पवित्रितौ कषायं कृतमिति कषायितम् उभयत्रापि करोत्यर्थे तन्नात् कर्म्मणि क्तः। स्मृतीनां शास्त्रान्तर्गतत्वेऽपि तासां धर्म्मप्रतिपादकतया प्राधान्यसूचनाय पृथक्स्मृतिपदमुपात्तं गोवृषन्यायात् ॥११॥

শ্লেষালঙ্কারে কিঞ্চিৎ দুর্ব্বোধ্য সুন্দর কথাকাব্য উজ্জ্বল প্রদীপের তুল্য নূতন উপাদেয় বস্তু চম্পককুসুমকলিকাদ্বারা গ্রথিত, জাতিকুসুমসম্পন্ন এবং পরস্পর ঘনসন্নিবিষ্ট মহামালার ন্যায় কোন ব্যক্তিকে আকর্ষণ না করে? ॥৯॥

ব্রহ্মার অংশাবতারের ন্যায় বাৎস্যগোত্রে কুবেরনামে এক ব্রাহ্মণ জন্মগ্রহণ করিয়াছিলেন, তিনি সাধুগণের অগ্রগণ্য ছিলেন, জগতের লোক তাঁহার গুণগান করিত এবং অনেক বৈশ্য তাঁহার চরণকমলের সেবা করিত ॥১০॥

বাগ্দেবী সর্ব্বদা যাঁহার মুখে বাস করিতেন এবং বেদপাঠে যাঁহার মুখের বাচনিক পাপ বিনষ্ট হইয়াছিল যজ্ঞের অবশিষ্ট দ্রব্যভক্ষণে ওষ্ঠযুগল পবিত্র করিয়াছিল যজ্ঞকালে সোমরস পান করায় মুখমধ্য সৌরভসম্পন্ন হইত, আর যাঁহার মুখখানি সকল শাস্ত্র উচ্চারণ করিবার কালে সুন্দর দেখাইত ॥১১॥

जगुर्ग्टहेऽभ्यस्त (१) समस्तवाङ्मये ससारिकै पञ्जरवर्त्तिभि शुकै ।
निगृह्यमाणा वटव पदे पदे यजूंषि सामानि च यस्य शङ्किता ॥१२॥
हिरण्यगर्भो भुवनाण्डकादिव चपाकर क्षीरमहार्णवादिव ।
अभूत् सुपर्णो विनतोदरादिव द्विजन्मनामर्थपति पतिस्तत ॥१३॥
विहृण्वतो यस्य विसारि वाङ्मय दिने दिने शिष्यगणा नवा नवा ।
उषस्सु लग्ना श्रवणेऽधिका श्रिय प्रचक्रिरे चन्दनपल्लवा इव ॥१४॥

जगुरिति। यस्य कुवेरस्य गृहे वटवो ब्राह्मणबालका अभ्यस्तम् अनेकश श्रवणान्मुखस्थीकृत समस्त सकल वाङ्मय शास्त्र य स्त पञ्जरवर्त्तिभि सारिकाभि सहृति ससारिक शुक कीरपक्षिभि पदे पदे प्रतिपदोच्चारणे निगृह्यमाणा युष्माभिरशुद्ध पठितम् इदन्तु एताहक इत्य पराभूयमाना अतएव शङ्किता पुनरपि शुककर्तृक दोषोद्भावनशङ्कान्विता सन्त यजूंषि यजुर्वेदान सामानि सामवेदांश्च जगु पठितवन्त। एतेन तस्य चिरतर प्रचुरशिष्याध्यापकत्व सूचितम्।

अत्र ससारिक शुक स्तथा निग्रहासम्बन्ध ऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कार ॥१२॥

हिरण्य ति। भुवनाण्डकात् ब्रह्माण्डात् द्विजन्मना पति ब्राह्मणानामधिपति हिरण्यगर्भो ब्रह्मा इव क्षीर महार्णवात् द्विजन्मना पति द्विजराज चपाकरश्चन्द्र इव विनतायास्तदाख्याया कश्यपभार्य्याया उदरात् द्विजन्मना पति पक्षिश्रेष्ठ सुपर्णो गरुड इव तत कुवेरात् द्विजन्मना पति ब्राह्मणश्रेष्ठ अर्थपति अर्थपतिनामा कश्चिदभूत्। ब्रह्मतुलनया वेदपारदर्शित्व चन्द्रसाम्येन सर्वाह्लादकत्व गरुडसादृश्येन च नारायणपरायणत्व सूचितम्।

अत्र मालोपमालङ्कार। ब्रह्माण्डतो ब्रह्मण उत्पत्तौ प्रमाण यथा मनु— तदण्डमभवद्धैम सहस्रांशु समप्रभम्। तस्मिन् यज्ञे स्वय ब्रह्मा सर्वलोकपितामह ॥ ॥१३॥

विहृण्वत इति। दिने दिने प्रत्यहम् उषस्सु प्रभातकालेषु नवा नवा नूतना नूतना शिष्यगणा चन्दनपल्लवा चन्दनतरुकिसलयानि इव श्रवणे शास्त्रार्थाकर्णने रमणीना कर्णे च लग्ना आसक्ता सन्त विसारि विशाल वाङ्मय शास्त्र विहृण्वत विवरणनाय प्रकाशयत अध्यापयत इत्यर्थ यस्य अर्थपते अधिका श्रिय शोभा प्रचक्रिरे।

अत्रोपमालङ्कार ॥१४॥

অ বরত শ্রবণ করায় সকল শাস্ত্র যাহাদের মুখস্থ হইয়াছিল এই জাতীয় পঞ্জরস্থিত শুক ও সারিকাগণকর্তৃক পদে পদে পরাস্ত হইয়া ব্রাহ্মণবালকগণ আশঙ্কিত চিত্তে যাঁহার গৃহে যজুর্ব্বেদ ও সামবেদ পাঠ করিত ॥১২॥

ভুবনকোষ হইতে ব্রহ্মার ন্যায় ক্ষীরোদসমুদ্র হইতে চন্দ্রের ন্যায় এবং বিনতার উদর হইতে গরুড়ের ন্যায় সেই কুবের হইতে ব্রাহ্মণশ্রেষ্ঠ অর্থপতি জন্মগ্রহণ করিয়াছিলেন ॥১৩॥

কর্ণস্থিত চন্দনপল্লব রমণীগণের যেমন শোভা সম্পাদন করে, তেমন প্রতিদিন প্রভাতকালে নূতন নূতন ছাত্রগণ শাস্ত্রার্থ শ্রবণে আসক্ত হইয়া বিস্তৃত শাস্ত্রসমূহের অধ্যাপনায় ব্যাপৃত যে অর্থপতির বিশেষ শোভা সম্পাদন করিত ॥১৪॥

---

(१) ग्रहा ।

विधानसम्पादितदानशोभितैः स्फुरन्महावीरसनाथमूर्त्तिभिः।
मखैरसंख्यैरजयत् सुरालयं सुखेन यो यूपकरैर्गजैरिव ॥१५॥
स चित्रभानुं तनयं महात्मनां सुतोत्तमानां श्रुतिशास्त्रशालिनाम्।
अवाप मध्ये स्फटिकोपलामलं क्रमेण कैलासमिव क्षमाभृताम् ॥१६॥
महात्मनो यस्य सुदूरनिर्गता कलङ्कमुक्तेन्दुकलामलत्विषः।
द्विषन्मनः प्राविविशुः कृतान्तरा गुणा नृसिंहस्य नखाङ्कुशा इव ॥१७॥

विधानेति। यः अर्थपतिः विधानेन वेदविध्यनुसारेण सम्पादितं कृतं यद्दानं धनवितरणं तेन शोभितैः अन्यत्र तु विधानेन भक्ष्यकवलेन सम्पादितं जनितं यद्दानं मदजलं तेन शोभितैः। स्फुरन्तः प्रज्वलन्तो ये महावीरा होमाग्नयः तैः सनाथाः सहिताः मूर्त्तयः स्वरूपाणि येषां तैः अन्यत्र तु स्फुरन्तः समरोत्साहेन स्पन्दमाना ये महावीरा महायोद्धारः तैः सनाथाः आरोहणेन संयुक्ताः मूर्त्तयः शरीराणि येषां तैः। यूपान् पशुबन्धनस्तम्भान् कुर्व्वन्ति प्रयोजनवशात् सम्पादयन्तीति यूपकराः तैः अन्यत्र तु यूपा इव कराः शुण्डा येषां तैः। गजैर्हस्तिभिरिव असंख्यैः मखैः यज्ञैः सुखेन अनायासेन सुरालयं स्वर्गम् अजयत् आयत्तीकृतवान्। स्वर्गकामनया कृतैः बहुभिर्यज्ञैः क्लेशेन स्वर्गलाभमवश्यम्भाविनमकरोदिति सरलार्थः।

अत्र पूर्णोपमानुप्राणिता समासोक्तिः कार्य्ये च गजसैन्यैः परनगरविजयिनः कस्यचिन्नरपतेर्व्यवहारसमारोपात्।

विधानं हस्तिकवलः इति वैजयन्ती। होमाग्निस्तु महाज्वालो महावीरः प्रवर्ग्यवत्॥ इति भानुचन्द्रादिधृत कोषः ॥१५॥

स इति। सः अर्थपतिः क्रमेण पुत्राणामुत्पत्तिक्रमेण क्षमाभृतां गिरीणां मध्ये स्फटिकोपलैः स्फटिकमणिभिः अमलं निर्म्मलं धवलं कैलासमिव क्षमाभृतां क्षमागुणान्वितानां महात्मनां महाबुद्धीनां श्रुतिशास्त्रशालिनां वेदशास्त्रज्ञानां सुतोत्तमानाम् उत्कृष्टपुत्राणां मध्ये चित्रभानुं नाम तनयं पुत्रम् अवाप लेभे।

श्लेषोपमालङ्कारः।

अर्थपतेश्च गुणभूतय एकादश पुत्रास्तन्मध्ये चित्रभानुरष्टमः। तथा च हर्षचरिते— सोऽजनयद्भृगुं हंसं शुचिं कविं महीदत्तं धर्म्मं जातवेदसं चित्रभानुं त्र्यक्षम् अहिदत्तं विश्वरूपञ्चेत्येकादश रुद्रानिव सोमामृतरसशीकरच्छुरितमुखान् पवित्रान् पुत्रान्। ॥१६॥

महेति। सुदूरनिर्गताः बहुदूरदेशव्यापिनः अन्यत्र तु आधिक्येनाङ्गुल्यग्राद्बहिर्भूताः। कलङ्केन हरिण- लाञ्छनेन मुक्ता रहिता या इन्दुकला चन्द्रलेखा तद्वत् अमलाः त्विषः द्युतियेषां तेः। इदमुभयत्रापि समानम्। तथा कृतः स्वमाहात्म्याविष्कृतम् अन्तरं प्रवेशावकाशो यैस्ते अन्यत्र तु कृतम् अन्तरं भेदो विदारणं यैस्ते। यस्य महात्मनः चित्रभानोर्गुणाः दयादाक्षिण्यवैदग्ध्यादयः नृसिंहस्य नरसिंहमूर्त्तिधारिणो नारायणस्य नखाङ्कुशाः अङ्कुश-

---

যথাবিধি ধনবিতরণে পরিশোভিত প্রজ্বলিতহোমাগ্নিসম্পন্ন এবং যূপবিশিষ্ট (খাদ্য দান করায় মদজল নিঃসৃত হইয়া যাহাদের শোভা জন্মায় সমরোৎসাহে স্ফূর্ত্তিমান মহাবীরগণ যাহাদের উপরে আরোহণ করেন এবং যূপকাষ্ঠের ন্যায় যাহাদের শুঁড়, সেইরূপ) হস্তিতুল্য অসংখ্য যজ্ঞদ্বারা যিনি অনায়াসে স্বর্গলোক আয়ত্ত করিয়াছিলেন ॥১৫॥

সেই অর্থপতি, পর্ব্বতগণের মধ্যে স্ফটিকমণি নির্ম্মল কৈলাসপর্ব্বতের ন্যায়, মহাবুদ্ধিমান্ ক্ষমাশীল ও বেদশাস্ত্রজ্ঞ উৎকৃষ্ট পুত্রগণের মধ্যে চিত্রভানুনামে পুত্র লাভ করিয়াছিলেন ॥১৬।

दिग्वामलोकालकभङ्गता गतस्त्रयीवधूकर्णतमालपल्लवः ।
चकार यस्याध्वरधूमसञ्चयो मलीमसः शुक्लतरं निजं यशः ॥ १८॥
सरस्वतीपाणिसरोजसम्पुटप्रमृष्टहोमश्रमशीकराम्भसः ।
यशोऽशुशुक्लीकृतसप्तविष्टपात्ततः सुतो बाण इति व्यजायत ॥१९॥

बद्दहन्तो नखरा इव द्विषतां ग्राम प्रा मनोऽप अन्यत न द्विषन् प्रवीहि रण्यकशिपो मनो हृदय वक्षश्च प्राविविशु प्रविशन्ति स्म । यस्य गुणा शत्रूणामपि हृदयग्राहिण आसन् तन्माहात्म्य कि नाम वक्तव्य मस्ति भाव ।
अत्र पूर्णोपमालङ्कार । तथा द्विषन्मन इत्यत्र अपिशब्दो वक्तव्य किन्तु नोक्त इति वाच्यानभिधान दोष स तु द्विषन्मनोऽपि प्रगता कृतान्तरा इति पाठेन समाधेय ॥१७॥
दिग्वामिति । दिशां प्राच्यादीनां वधूरूपाणामिति तात्पर्य्यम् अलीकेषु ललाटेषु ये अलकाश्चूर्णकुन्तला तेषां भङ्गता रचनाविशेषरूपत्व गत प्राप्त । त्रयी ऋग्यजुःसामवेदास्ता एव वधू तस्या कर्ण तमालपल्लव तमालवृक्षनवपल्लवस्वरूप । उभयत्रापि स्वभावकृष्णवर्णत्वादिति भाव । मलीमस स्वभावमलिन यस्य चित्रभानो अध्वरधूमसञ्चयो यज्ञधूमसमूह निज स्वकीय यश स्वभावशुक्ल सुख्याति शुक्लतरम् अतिशयेन शुक्ल चकार । विद्याविनयादिगुणग्रामजनिता सुख्याति नियतयज्ञानुष्ठानात् धर्म्माचारपरायणतया अपि प्रकाशेन बहुलीबभूवेति सरलार्थ ।
अत्र अध्वरधूमसञ्चये केशरचनाविशेषत्वारोप शाब्द किन्तु वधूत्वारोपस्तु आर्थ इत्येकदेशविवर्त्ति रूपक तथा वधूत्वारोप धूमसञ्चये तमालपल्लवत्वारोपे निमित्तमिति परम्परितरूपकम् तथा मलीमसो धूमसञ्चयो यश शुक्लतर चकारेति कारणगुणविरुद्धकार्य्यगुणोत्पत्ते विषमालङ्कारश्च इत्येतेषामङ्गाङ्गिभावेन सङ्कर ।
अलीकमप्रिये भाले तथे इति हेमचन्द्र ॥१८॥
सरस्वतीति । सरस्वत्या वाग्देव्या पाणिसरोजसम्पुटेन करकमलयुगलेन प्रमृष्टानि प्रोञ्छितानि होमश्रमस्य होमकर्म्मायासस्य शीकराम्भांसि बिन्दुभूतजलानि स्वेदजलबिन्दवो यस्य तस्मात् । तथा यशस सुख्यातेरंशुभि किरणै शुक्लीकृतानि सप्त विष्टपानि भूरादीनि सप्त भुवनानि येन तस्मात् । तत चित्रभानो बाण इति प्रसिद्ध बाणनामा सुत पुत्र व्यजायत अभवत् ।
अत्र सरस्वत्या पाणिपद्मद्वयेन घर्म्मवारिबिन्दूनां प्रमार्जनसम्बन्धेऽपि तत्सम्बन्धोक्तेरसम्बन्धे सम्बन्धरूपातिशयोक्ति तथा यशोऽशुभि सप्तभुवनानां शुक्लीकरणासम्बन्धेऽपि तत्सम्बन्धोक्तेर्द्वितीया चातिशयोक्तिरित्यनयोर्मिथो निरपेक्षत्वात् संसृष्टि ।
विष्टप भुवन जगत् इत्यमर ॥१९॥

---

যে মহাত্মার বহুদূরগামী ও নিষ্কলঙ্ক চন্দ্রকলার ন্যায় নির্ম্মলকান্তিশালী গুণগ্রাম নিজমাহাত্ম্যে প্রবেশপথ পাইয়া অঙ্কুশ তুল্য বিদারণকারী নরসিংহের নখসমূহের ন্যায় শত্রুর হৃদয়েও প্রবেশ করিয়াছিল ॥১৭॥
যাঁহার যজ্ঞীয় অগ্নির মলিন ধূমসমূহ দিগবধূগণের ললাটদেশে কেশরচনাস্বরূপ এবং বেদবধূর কর্ণে তমালপল্লবস্বরূপ হইয়া স্বকীয় যশকে সমধিক শুভ্রবর্ণ করিয়াছিল ॥১৮॥
সরস্বতীদেবী স্বকীয় পাণিকমলে যাঁহার হোমপরিশ্রমজনিত ঘর্ম্মজলবিন্দুসকল মুছিয়া দিতেন

द्विजेन तेनाक्षतकण्ठकौण्ठ्यया महामनोमोहमलीमसान्धया ।
अलब्धवैदग्ध्यविलासमुग्धया धिया निबद्धेयमतिद्वयी कथा ॥२०॥

द्विजेनेति। तेन द्विजेन विप्रेण बाणेन अक्षतम् अविनष्टं कण्ठकौण्ठ्यं वाग्विन्यासे कण्ठस्य मान्द्यं बालस्वभावसुलभवाग्वैकल्यं यस्यां तया महान् यो मनोमोहः बालत्वेन चित्तविकलता तेन मलीमसा मलिना अप्रसन्ना अतएव अन्धा सदसद्विवेचनाक्षमा तया। तथा अलब्धेन अप्राप्तेन वैदग्ध्यविलासेन पाण्डित्यचातुर्य्यचमत्कारेण मुग्धा मूढा तया पाण्डित्यचातुर्य्याभावेन नितान्तसरलयेत्यर्थः धिया बुद्ध्या इयं कादम्बरीरूपा निन्द्यत्वे द्वयम् अतिक्रान्ता इत्यतिद्वयी निकृष्टत्वे अद्वितीया गूढोऽयमर्थः उत्कृष्टत्वे अद्वितीया कथा कथाख्यं काव्यविशेषं निबद्धा ग्रथिता विरचिता। अपरिणतबुद्धिमत्या खल्वियं विरचितेति तात्पर्य्यम् तेन बालचापल्यजनितदोषः सुधीभिर्मार्जनीय इति भावः।

अत्र प्रथमपादे छेकानुप्रासः अन्येषु तु वृत्त्यनुप्रासः इत्युभयोः संसृष्टिः ॥२॥

এব যাঁহার যশের কিরণ সপ্ত ভুবনকে শুক্লবর্ণ কবিয়াছিল সেই চিত্রভানু হইতে বাণ'নামে একটী পুত্র জন্মিয়াছিল ॥১৯॥

যাহাতে কণ্ঠের জড়তা বিলুপ্ত হয় না এব মনের নিতান্ত চঞ্চলতাবশত যে বুদ্ধি মলিন ও সদসদ্বিবেচনাহীন, আর পাণ্ডিত্যচাতুর্য্য লাভ না করায় যে বুদ্ধি নিতান্ত সরল, ব্রাহ্মণ বাণভট্ট সেই বুদ্ধি অনুসারে এই অদ্বিতীয় কথাকাব্য রচনা করিয়াছেন ॥২ ॥

———०———

# কথামুখম্।

—— ০ ——

## শূদ্রকবর্ণনম্।

——(০)——

আসীদশেষনরপতিশিরঃসমভ্যর্চ্চিত-শাসনঃ পাকশাসন ইবাপরঃ (ক) চতুরুদধি মালা-মেখলায়া ভুবো ভর্ত্তা (খ) প্রতাপানুরাগাবনত-সমস্ত সামন্ত-চক্রঃ (গ) চক্রবর্ত্তিলক্ষণোপেতঃ (ঘ) চক্রধর ইব করকমলোপলক্ষ্যমাণ শঙ্খ-

(ক) অথেদানীং কথামারভতে আসীদিত্যাদিনা। আসীদিতি ক্রিয়াপদস্য রাজা শূদ্রকো নাম ইতি বক্ষ্যমাণকর্ত্তৃপদেনান্বয়ঃ। অশেষৈঃ সকলৈঃ নরপতিভিঃ ভূপতিভিঃ কর্ত্তৃভিঃ শিরোভিঃ মস্তকৈঃ করণৈঃ সমভ্যর্চ্চিতং সম্মানেন গৃহীতং শাসনম্ আদেশো যস্য সঃ অতএব অপরো দেবরাজাদন্যো দ্বিতীয়ঃ পাকশাসনঃ ইন্দ্র ইব। পাকনামাসুরং শাসিতবান্ দমিতবানিতি পাকশাসনঃ।

অত্র ভাবাভিমানিনী বাচ্যা দ্রব্যোৎপ্রেক্ষালঙ্কারঃ শাসনপদাবৃত্তযমকঞ্চ ইত্যনয়োরেকাশ্রয়ানুপ্রবেশরূপঃ সঙ্করঃ। ন চ শাসনপদাবৃত্তৌ লাটানুপ্রাস ইতি বাচ্যং শব্দার্থৈকত্বে কেবলতাৎপর্য্যতো ভেদ এব তদঙ্গীকারাৎ অত্র তু শব্দার্থস্যাপি ভেদাৎ।

(খ) চতুরিতি। চতুর্ণাং ভূমণ্ডলস্য চতসৃষু দিক্ষু স্থিতানাম্ উদধীনাং সাগরাণাং মালা পঙ্ক্তিরেব মেখলা কাঞ্চী যস্যাস্তস্যাঃ ভুবো বসুধায়াঃ ভর্ত্তা পতিঃ।

অত্র স্ত্রীপুংলিঙ্গাভ্যাং পৃথিবীশূদ্রকয়োর্নায়িকানায়কব্যবহারসমারোপাৎ সমাসোক্ত্যলঙ্কার এব ন ত্বেকদেশবিবর্ত্তি রূপকম্ তৎকারণন্তু সাহিত্যদর্পণে সমাসোক্তিপ্রস্তাবে সমনুসন্ধেয়ম্।

(গ) প্রতাপেতি। প্রতাপানুরাগাভ্যাং কোষদণ্ডজতেজোবাৎসল্যাভ্যাম্ অবনতং বশীভূতং সমস্তং সকলং সামন্তচক্রম্ অধিকৃতরাজসমূহো যস্য। এতেন ন কেবলং তস্য প্রজামণ্ডলং প্রভাববশাদ্বশীভূতমাসীৎ কিন্তু তদীয়বাৎসল্যবশাদপীতি সূচিতম্।

(ঘ) চক্রেতি। চক্রবর্ত্তিলক্ষণৈঃ সার্ব্বভৌমচিহ্নৈঃ করতলরেখাদিভিঃ উপেতো বিশিষ্টঃ। তথা চ সামুদ্রকে—

আতরক্তৌ করৌ যস্য স্থিতাঙ্গুলিকৌ মৃদু। আপাদশাঙ্কিত সোঽপি চক্রবর্ত্তী ভবেদ্ধ্রুবম্॥

(ঙ) চক্রেতি। চক্রধরশ্চক্রপাণির্বিষ্ণুরিব করকমলে পাণিপদ্মতলে উপলক্ষ্যমাণঃ দৃশ্যমানঃ শঙ্খচক্রলাঞ্ছনঃ শঙ্খচক্রাকৃতিরেখারূপং চিহ্নম্ অন্যত্র তু বাস্তবিকশঙ্খচক্ররূপং চিহ্নং যস্য সঃ।

---

(ক) দ্বিতীয় ইন্দ্রের ন্যায় শূদ্রকনামে এক রাজা ছিলেন। সমস্ত রাজগণ তাঁহার আদেশ সগৌরবে শিরোধার্য্য করিতেন। (খ) তিনি চারিটী সমুদ্র (মালারূপ মেখলা) পরিবেষ্টিত সমগ্র ভূমণ্ডলের অধীশ্বর ছিলেন, (গ) অধীনস্থ সকল রাজগণ তাঁহার প্রভাবে ও স্নেহে বশীভূত

প্রবৃত্তদানার্দ্রীকৃতকরঃ, (ড) কর্ত্তা মহাশ্চর্য্যাণাম্, আহর্ত্তা ক্রতূনাম্, আদর্শঃ সর্ব্বশাস্ত্রাণাম্, উৎপত্তিঃ কলানাম্, কুলভবনং গুণানাম্, আগমঃ কাব্যামৃতরসানাম্, (ঢ) উদয়শৈলো মিত্রমণ্ডলস্য, (ণ) উৎপাতকেতুরহিতজনস্য, (ত) প্রবর্ত্তয়িতা গোষ্ঠীবন্ধানাম্ আশ্রয়ো রসিকানাম্, (থ) প্রত্যাদেশো ধনুষ্মতাং, (দ) ধৌরেয়ঃ সাহসিকানাম্, অগ্রণীর্বিদগ্ধানাম্, বৈনতেয় ইব বিনতানন্দ-

(ড) দিগিতি। দিগ্গজ ঐরাবতাদিকো দিক্করী(?) গজ ইব অনবরতপ্রবৃত্তেন সর্ব্বদা জাতেন দানেন মদজলেন ধনাদিদানজলেন চ আর্দ্রীকৃতঃ ক্লিন্নিতঃ করঃ শুণ্ডা পাণিশ্চ যস্য সঃ। পূর্ণোপমা।

(ঢ) কর্ত্তেতি। মহাশ্চর্য্যাণাং প্রবলশত্রুবিজয়াদিবিস্ময়াবহব্যাপারাণাং কর্ত্তা নির্ব্বাহকঃ। ক্রতূনাং যজ্ঞানাম্ আহর্ত্তা অনুষ্ঠাতা। সর্ব্বশাস্ত্রাণাং বেদাদীনাম্ আদর্শো দর্পণঃ। যথা দর্পণে প্রতিবিম্বিতপদার্থাঃ পরিলক্ষ্যন্তে তথা তস্মিন্নপি সর্ব্বাণি শাস্ত্রাণ্যভ্যাসবশাল্লোকৈঃ পরিলক্ষ্যন্তে স্মেতি ভাবঃ। কলানাং নৃত্যগীতাদিচতুঃষষ্টিকলাবিদ্যানাম্ উৎপত্তিঃ শিক্ষাদানাদুদ্ভবস্থানম্। গুণানাং দয়াদাক্ষিণ্যাদীনাং কুলভবনং কুলক্রমাগতাশ্রয়স্থানম্ তত্র ব তেষাং চিরাবস্থানাদিতি ভাবঃ। কাব্যানাং যে অমৃতরসাঃ পীযূষসদৃশশৃঙ্গারাদিরসাস্তেষাম্ আগমঃ উৎপত্তিস্থানম্। মহাকবিত্বেনোৎকৃষ্টকাব্যনির্ম্মাণাদিতি ভাবঃ।

অত্র একস্য রাজ্ঞো বিষয়ভেদেনানেকধোল্লেখাদুল্লেখালঙ্কারঃ।

(ণ) উদয়েতি। মিত্রমণ্ডলং সুহৃৎসমূহ এব মিত্রমণ্ডলং সূর্য্যমণ্ডলং তস্য উদয়শৈলঃ পূর্ব্বপর্ব্বতঃ। সূর্য্যো যথা পূর্ব্বপর্ব্বতে উদয়ং লভতে তথা সুহৃৎসমূহস্তদাশ্রিতঃ সন্নুন্নতিং লেভে ইতি ভাবঃ।

অত্র শ্লেষেণ সুহৃৎসমূহে সূর্য্যমণ্ডলত্বারোপাৎ রাজন্যুদয়পর্ব্বতত্বারোপে নিমিত্তমিতি শ্লিষ্টপরম্পরিতরূপকমলঙ্কারঃ।

(ত) উৎপাতেতি। অহিতজনস্য শত্রুলোকস্য উৎপাতকেতুঃ বিনাশসূচকো ধূমকেতুঃ। তদাবির্ভাব এব তেষাং বিনাশারম্ভাদিতি ভাবঃ।

অত্র রাজনি কেবলোৎপাতকেতুত্বারোপাৎ নিরঙ্গকেবলরূপকমলঙ্কারঃ।

(থ) প্রবর্ত্তয়িতেতি। গোষ্ঠীবন্ধানাং সভাস্থাপনানাং প্রবর্ত্তয়িতা নিষ্পাদয়িতা। স্থানে স্থানে সৎসভাস্থাপক ইত্যর্থঃ। রসিকানাং রসজ্ঞজনানাম্ আশ্রয়ঃ অবলম্বনম্।

(দ) প্রত্যাদেশ ইতি। ধনুষ্মতাং প্রশস্তধনুর্দ্ধরাণাং প্রত্যাদেশো নিরাকৃতিঃ নিরাকরণকারণমিত্যর্থঃ।

রূপ ভগীরথের আচরিত ধর্ম্মপথে চলিতেন (ট) সূর্য্যের যেমন প্রতিদিন উদয় হয় শূদ্রকেও তেমন প্রতিদিন অভ্যুদয় হইত। (ঠ) দেবগণ যেরূপ সুমেরুর নিকট স্থিত অন্যান্য পর্ব্বতের ছায়া আশ্রয় করেন প্রজাগণও সেইরূপ শূদ্রকের চরণের ছায়া আশ্রয় করিয়াছিল। (ড) দিগ্হস্তীর শুণ্ড যেমন কপোলনিঃসৃত মদজলে সর্ব্বদা আর্দ্র থাকে শূদ্রকের হস্তও তেমন সর্ব্বদা দানজলে আর্দ্র থাকিত। (ঢ) তিনি মহাবিস্ময়কর কার্য্য ও যজ্ঞানুষ্ঠান করিতেন এবং সকল শাস্ত্রের আদর্শ নৃত্যগীতাদি কলাবিদ্যার শিক্ষাদাতা সর্ব্বদা দয়াদাক্ষিণ্য প্রভৃতি গুণের আধার ও অমৃততুল্য কাব্যরসের উৎপত্তিস্থান ছিলেন। (ণ) উদয়াচল যেমন সূর্য্যের উদয়স্থান তিনিও তেমন সুহৃদ্গণের উন্নতিস্থান এবং (ত) ক্রুদ্ধ শত্রুর ধূমকেতুস্বরূপ ছিলেন (থ) দেশে ও নগরে সভা স্থাপন করিয়াছিলেন আর তিনি রসিক লোকের

जनन, वैण्य (१) इव चापकोटिसमुत्सारितसकलारातिः (२) कुलाचलो राजा शूद्रको नाम (ध)।

नाम्नैव यो निर्भिन्नारातिहृदयो विरचितनरसिंह (३) रूपाडम्बरम् एकविक्रमाक्रान्तसकलभुवनतलो विक्रमत्रयायासितभुवनत्रय (४) जहासेव (५) वासुदेवम् (न)।

अत्र प्रत्यादिष्टरूपकार्य्यस्य तत्कारणेन सहाभेदेनाभिधानात् हेतुर्नामालङ्कारः।

(ध) धौरेय इति। साहसिकानां समरादौ हठकारिणां धौरेयो धुरन्धरः प्रधानः। विदग्धानां चतुराणाम् अग्रणीरग्रगण्यः। वैनतेयो गरुड इव विनतानां वशीभूतानां जनानां विनतायाश्च आनन्दजननः सहर्षकारी प्रीतिकरः। वैण्यो वेणराजपुत्रः पृथुरिव चापकोट्या कोटीमत्यैकधनुषा अस्त्रसैन्यधनुर्द्धरसैन्यैरित्यर्थः। अन्यत्र तु कार्म्मुकाग्रभागेन समुत्सारिता उत्पादिता स्थानान्तरं नीताश्च सकलारातयः समस्तशत्रवः कुलाचला महेन्द्रादयः कुलपर्व्वता इव येन सः।

अनयोः पूर्णोपमालङ्कारः।

पृथिवीसमतलीकरणप्रवृत्तो राजा पृथुः धनुरग्रभागेन कुलपर्व्वतानपसारयामासेति विष्णुपुराणवार्त्ता। कुलपर्व्वता यथा—

महेन्द्रो मलयः सह्यः शुक्तिमानृक्षपर्व्वतः। विन्ध्यश्च पारियात्रश्च सप्तैते कुलपर्व्वताः॥

(न) नाम्नेति। यः शूद्रकः नाम्नैव स्वनामाकर्णनमात्रेणैव निर्भिन्नः भयोत्पादनेन विदारितम् अरातीनां हृदयं येन सः। विरचितो हिरण्यकशिपुवक्षोविदारणाय विहितः नरसिंहरूपस्य नरसिंहरूपधारणस्य आडम्बरो वृहद्व्यापारो येन तम्। एकविक्रमेण एकमात्रपराक्रमेण आक्रान्तम् आयत्तीकृतं सकलभुवनतलं येन सः। विक्रमत्रयेण पादन्यासत्रयेण आयासितं खिन्नं कृतं भुवनत्रयं येन तं तादृशं वासुदेवं नारायणं जहासेव उपहसितवानिव। तथा च शूद्रकः स्वनामश्रवणमात्रद्वारैव वैरिणां हृदयं विदारितवान् नारायणस्तु केवलं हिरण्यकशिपुहृदयविदारणाय नृसिंहमूर्त्तिधारणाडम्बरं कृतवान् तथा शूद्रकेण अनायासेन एकविक्रमेणैव चतुर्द्दश भुवनान्याक्रान्तानि नारायणेन तु त्रिभिरेव विक्रमैः केवलानि त्रीण्येव भुवनान्याक्रान्तानि सुतरां शूद्रककृतो नारायणापहासो युज्यत एवेति भावः।

अत्रोपमानादुपमेयस्याधिक्यवर्णनात् व्यतिरेकालङ्कारः क्रियोत्प्रेक्षा च अनयोरङ्गाङ्गिभावेन सङ्करः।

আশ্র (দ) ধনুর্দ্ধরদিগের প্রতিরক্ষক (ধ) সাহসিকদিগের মধ্যে প্রধান ও চতুরগণের অগ্রগণ্য ছিলেন এবং গরুড় যেমন নিজমাতা বিনতার আনন্দজনক তিনিও তেমন বশতাপন্ন লোকের আনন্দজনক ছিলেন। আর রাজা পৃথু যেমন ধনুর অগ্রভাগদ্বারা মহেন্দ্রপ্রভৃতি কুলপর্ব্বতগণকে অপসারিত করিয়াছিলেন তিনিও তেমন অসংখ্য ধনুর্দ্ধর সৈন্যদ্বারা সকল শত্রুগণকে উৎসন্ন করিয়াছিলেন।

(ন) যিনি কেবল নামদ্বারাই ভয়োৎপাদনপূর্ব্বক শত্রুগণের হৃদয় বিদারণ করিয়া এবং

(१) वैण्य पृथु। (२) समुत्सारितारातिः। (३) नारसिंह। 
(४) आयासितम् आयासितमानम्। (५) हसति स्म।

হারিণী চ সততমতিদুরন্তেয়ম্ (১) উপভোগমৃগতৃষ্ণিকা (খ)। নবযৌবনকষায়িতাত্মনশ্চ সলিলানীব তান্যেব বিষয়স্বরূপাণ্যাস্বাদ্যমানানি মধুরতরাণ্যাপতন্তি মনসঃ (গ)। নাশয়তি চ দিঙ্মোহ ইবোন্মার্গপ্রবর্ত্তক পুরুষমত্যাসঙ্গো বিষয়েষু (ঘ)। ভবাদৃশা এব ভবন্তি ভাজনানি (২) উপদেশানাম্। অপগতমলে হি মনসি স্ফটিকমণাবিব রজনিকরগভস্তয়ো বিশন্তি সুখেন (৩) উপদেশগুণাঃ (ঙ)। গুরুবচনমমলমপি সলিলমিব মহদুপজনয়তি শ্রবণস্থিতং শূলমভব্যস্য (চ)।

(খ) ইন্দ্রিয়েতি। কিঞ্চ অতিদুরন্তা নিতান্তদুর্নিবারা ইয়ম্ উপভোগ কামিন্যাদিসম্ভোগেচ্ছৈব মৃগতৃষ্ণিকা মরীচিকা ইন্দ্রিয়াণ্যেব হরিণান্ হরতীতি সা। যথা মরুভূমৌ মধ্যাহ্নে রবিকিরণেষু জলভ্রমাত্মকমরীচিকা পিপাসূন্ হরিণানাকৃষ্য পরং তদ্প্রাণান্ বিনাশয়তি তথা বিষয়ভোগেচ্ছাপি যূনামিন্দ্রিয়াণীতি ভাবঃ। অত্র উপভোগেচ্ছায়াং মৃগতৃষ্ণাত্বারোপ ইন্দ্রিয়েষু হরিণত্বারোপে নিমিত্তমিতি পরম্পরিতরূপকমলঙ্কারঃ।

(গ) নবেতি। নবযৌবনেন কষায়িতো রাগদ্বেষাদিযুক্তীকৃতঃ কষায়রসান্বিতীকৃতশ্চ আত্মা স্বরূপং যস্য তাদৃশস্য মনসো যূনশ্চিত্তস্য সলিলানীব তান্যেব প্রসিদ্ধানি বিষয়স্বরূপাণি ভোগ্যবস্তূনি আস্বাদ্যমানানি অনুভূয়মানানি সন্তি মধুরতরাণি অতিসুরসানি আপতন্তি আপাততঃ প্রতীয়ন্তে। তথা চ যথা হরীতক্যাদিকষায়িতায়াং রসনায়াং অমধুরাণ্যপি জলান্যতিমধুরাণি তথা যৌবনকষায়িতে যূনো মনসি অমধুরা অপি কামিন্যাদিভোগ্যপদার্থা আপাততোঽতিমধুরায়ন্তে ইতি ভাবঃ। অর্থোপমালঙ্কারঃ।

(ঘ) ননু মনসস্তথা মধুরতরাণ্যাপতন্তু নাম তেন কিমিত্যাহ নাশয়তীতি। দিঙ্ মোহো দিগ্ভ্রম ইব উন্মার্গে প্রবর্ত্তকঃ কুপথপরিচালকঃ বিষয়েষু ভোগ্যপদার্থেষু অত্যাসঙ্গো নিতান্তাসক্তিঃ পুরুষং নাশয়তি। তথা চ মাধুর্য্যানুভবাদ্বিষয়েষ্বাসক্তির্জায়তে সা চ নাশয়তীতি ভাবঃ। অর্থোপমালঙ্কারঃ।

(ঙ) ভবেতি। ভাজনানি পাত্রাণি বিষয়া ইত্যর্থঃ। হি যস্মাৎ অপগতমলে মাস্তন্নিস্বয়া কামক্রোধাদিরহিতে অনাবিলে চ মনসি স্ফটিকমণৌ রজনিকরগভস্তয়শ্চন্দ্রকিরণা ইব উপদেশস্য গুণাঃ ফলানি সুখেন অনায়াসেন বিশন্তি প্রবেশং লভন্তে। অর্থোপমালঙ্কারঃ।

(চ) গুর্বিতি। অমলমপি কল্যাণকরমপি অমং শস্তো চ নির্দ্দিষ্টং কল্যাণে চ সুখেঽপি চ। ইতি বিশ্ব

প্রবল বায়ু যেমন শুষ্ক পত্র অতিদূরে লইয়া যায় সেইরূপ সেই স্বভাব মানুষকে ইচ্ছানুসারে অতিদূর (অগম্য স্থানে) লইয়া যায়। (খ) আর অতিদুরন্ত এই সম্ভোগেচ্ছারূপ মৃগতৃষ্ণিকা মানুষের ইন্দ্রিয় হরিণগণকে হরণ করিয়া থাকে। (গ) কোন কষায়রসযুক্ত রসনাতে জল যেমন সেরূপ মধুর না হইলেও আপাতত অতিমধুর বলিয়া বোধ হয় সেইরূপ নবযৌবনবশত কামক্রোধাদিযুক্ত চিত্তে, কামিনী কাঞ্চনাদি প্রসিদ্ধ ভোগ্যবস্তু সকল অনুভূত হইতে লাগিলে, আপাতত বড়ই মধুর বলিয়া বোধ হয়। (ঘ) দিগ্ভ্রম যেমন মানুষকে কুপথে পরিচালিত করিয়া বিনষ্ট করে, কামিনীকাঞ্চনপ্রভৃতি ভোগ্য পদার্থে অত্যন্ত আসক্তিও তেমন মানুষকে কুপথে পরিচালিত করিয়া বিনষ্ট করে। (ঙ) তোমার মত লোকেরাই উপদেশের পাত্র হইয়া থাকে, কারণ নির্ম্মল স্ফটিকে যেমন চন্দ্রের কিরণ অনায়াসে প্রবেশ করে, সেইরূপ নির্ম্মল হৃদয়েই উপদেশের ফল অনায়াসে প্রবেশ করে। (চ) গুরুর উপদেশ

(১) ইন্দ্রিয়হরিণ হরতীব। সততদুরন্তেয়ম্। (২) ভাজনম্। (৩) সুখম্।

यौवराज्याभिषेकञ्च तं कदाचिद्दर्शनार्थमागतमारूढविनयमपि विनीततरमिच्छन् कर्त्तुं (१) शुकनासः सविस्तरमुवाच—(ण)

'तात! चन्द्रापीड! विदितवेदितव्यस्य (२) अधीतसर्वशास्त्रस्य ते नाल्पमप्युपदेष्टव्यमस्ति (त)। केवलञ्च (३) निसर्गत एव अभानुभेद्यमरत्नालोकच्छेद्यमप्रदीपप्रभापनेयमतिगहनं तमो यौवनप्रभवम् (थ)। अपरिणामोपशमो दारुणो लक्ष्मीमदः (द)। कष्टमनञ्जनवर्त्तिसाध्यमपरम् (४) ऐश्वर्य्यतिमिरान्धत्वम् (ध)।

(ण) समुपेति। किञ्च समुपस्थितो यौवराज्याभिषेको यस्य तं तं चन्द्रापीडम्। आरूढविनयमपि उत्पन्नविनयमपि। विनीततरम् आधिक्येन विनयिनम्।

(त) तातेति। तात। पुत्र। पूज्ये पितरि पुत्रे च तातशब्दः स्मृतो बुधैरिति केशवः। विदितः ज्ञातः वेदितव्यः सर्वो ज्ञातव्यविषयो येन तस्य तथा अधीतानि सर्वाणि शास्त्राणि येन तस्य। अत्र उपदेष्टव्यत्वाभावं प्रति पूर्वविशेषणद्वयार्थौ हेतुरिति पदार्थहेतुकं काव्यलिङ्गमलङ्कारः।

(थ) ननु तर्हि कथं तवायमुपदेशोपक्रम इत्याह केवलञ्चेति। किन्त्वित्यर्थः। केवलमिति यौवनप्रभवं तम इत्यस्य विशेषणम्। निसर्गतः स्वभावत एव यौवनात् प्रभवतीति यौवनप्रभवम् तमः तमोगुणजनितमज्ञानमेव तमोऽन्धकारः न भानुना सूर्य्येण भेद्यं निराकर्त्तुं शक्यम् न रत्नानामालोकेन प्रभया छेद्यम् उच्छेत्तुं शक्यम् तथा न प्रदीपप्रभया अपनेयं दूरीकर्त्तुं शक्यम् अतएव अतिगहनं नितान्तदुर्द्धर्षं भवतीति वक्ष्यमाणेनान्वयः लोकानामिति शेषः इत्यतो विस्तरेणाभिधीयसे इत्यमन्यत्राप्यन्वयः। अपरान्धकारस्य तु सूर्य्यादिभेद्यत्वादनेन साद्धं महद्वैषम्यमिति भावः। अत्र अज्ञानान्धकारयोर्भेदेऽपि तम इति श्लेषेणाभेदाध्यवसायादतिशयोक्तिरलङ्कारः तथा अतिगहनत्वप्रतिपादनकार्य्यं प्रति अभानुभेद्यत्वादिकारणत्रयोपन्यासात् समुच्चयः पदार्थहेतुकं काव्यलिङ्गञ्च इत्येतेषामङ्गाङ्गिभावेन सङ्करः। केचित्तु अधिकारूढवैशिष्ट्यरूपकमिति वदन्ति तदसत् येन हि तथा सति तम इत्यत्र निरङ्गं केवलरूपकम् अभानुभेद्यत्वादिना च तत्राधिकवैशिष्ट्यमारूढमिति वक्तव्यम् किन्तु तन्निरङ्गरूपकमेवात्र न सम्भवति तत्र हि उपमेयोपमानयोर्द्वयोरेव शब्दोपात्तत्वनियमात् अन्यथारोपप्रतीत्यसम्भवात् श्लेषेणारोपप्रतीत्या तदङ्गीकारे तु विश्वपदु खादिव वर्त्तमानमित्याद्यभेदाध्यवसायरूपातिशयोक्तिस्थलेऽपि निरङ्गरूपकप्रसङ्गादिति सुधीभिर्विभावनीयम्।

(द) अपरीति। लक्ष्मीमदो धनसम्पत्तिजनितमत्तता न विद्यते परिणामे वयोऽवसाने उपयुक्तकालापगमे वा उपशमो निवृत्तिर्यस्य सः अतएव दारुणो भयङ्करः। तथा च यौवनमदस्य वार्द्धक्येऽपगमात् मद्यादिपानजनितमदस्य

(ণ) ক্রমে যৌবরাজ্যাভিষেকের সময় উপস্থিত হইল। একদিন চন্দ্রাপীড় সাক্ষাৎ করিবার নিমিত্ত শুকনাসের নিকটে উপস্থিত হইলেন। তখন চন্দ্রাপীড় বিনয়ী হইলেও তাঁহাকে অধিকতর বিনয়ী করিবার ইচ্ছা করিয়া শুকনাস সবিস্তরে বলিতে লাগিলেন—

(ত) বাবা! চন্দ্রাপীড়! তুমি জানিবার বিষয় সমস্তই জানিয়াছ এবং সকল শাস্ত্রই অধ্যয়ন করিয়াছ, সুতরাং তোমাকে অল্পও উপদেশ দিবার বিষয় নাই। (থ) তবে একমাত্র যৌবনকালে স্বভাবতই যে অন্ধকার উৎপন্ন হয়, সূর্য্য তাহা বিনষ্ট করিতে পারেন না, কোন মণির আলোকও তাহার উচ্ছেদ করিতে পারে না এবং প্রদীপের প্রভাও তাহা দূর করিতে পারে না, সুতরাং সে অন্ধকার অতিদুর্দ্ধর্ষ হইয়া থাকে। (দ) ধনসম্পত্তিতে যে মত্ততা

[१] क्वचित् कर्त्तुमिति नास्ति। [२] वेद्यस्य। [३] केवलन्तु। [४] अपटलम्।

हारिणी च सततमतिदुरन्तेयम् (१) उपभोगमृगतृष्णिका (व)। नवयौवनकषायितात्मनश्च सलिलानीव तान्येव विषयस्वरूपाण्यास्वाद्यमानानि मधुरतराण्यापतन्ति मनसः (श)। नाशयति च दिङ्मोह इवोन्मार्गप्रवर्त्तकः पुरुषमत्यासङ्गो विषयेषु (ष)। भवादृशा एव भवन्ति भाजनानि (२) उपदेशानाम्। अपगतमले हि मनसि स्फटिकमणाविव रजनिकरगभस्तयो विशन्ति सुखेन (३) उपदेशगुणाः (स)। गुरुवचनममलमपि सलिलमिव महदुपजनयति श्रवणस्थितं शूलमभव्यस्य (ह)।

(व) इन्द्रियेति। किञ्च अतिदुरन्ता नितान्तदुर्निवारा इयम् उपभोगः कामिन्यादिसम्भोगेच्छैव मृगतृष्णिका मरीचिका इन्द्रियाण्येव हरिणान् हरतीति सा। यथा मरुभूमौ मध्याह्ने रविकिरणेषु जलभ्रमात्मकमरीचिका पिपासून् हरिणानाकृष्य परं तत्प्राणान् विनाशयति तथा विषयभोगेच्छापि यूनामिन्द्रियाणीति भावः। अत्र उपभोगेच्छायां मृगतृष्णात्वारोपः इन्द्रियेषु हरिणत्वारोपे निमित्तमिति परम्परितरूपकमलङ्कारः।

(श) नवेति। नवयौवनेन कषायितो रागद्वेषादियुक्तीकृतः कषायरसान्वितीकृतश्च आत्मा स्वरूपं यस्य तादृशस्य मनसो यूनश्चित्तस्य सलिलानीव तान्येव प्रसिद्धानि विषयस्वरूपाणि भोग्यवस्तूनि आस्वाद्यमानानि अनुभूयमानानि सन्ति मधुरतराणि अतिमधुरसानि आपतन्ति आपाततः प्रतीयन्ते। तथा च यथा हरीतक्यादिकषायितायां रसनायाम् अमधुराण्यपि जलान्यतिमधुरायन्ते तथा यौवनकषायिते यूनो मनसि अमधुरा अपि कामिन्यादिभोग्यपदार्था आपाततोऽतिमधुरायन्ते इति भावः। श्रौतोपमालङ्कारः।

(ष) ननु मनसस्तथा मधुरतराण्यापतन्तु नाम तेन किमित्याह नाशयतीति। दिङ्मोहो दिग्भ्रम इव उन्मार्गप्रवर्त्तकः कुपथपरिचालकः विषयेषु भोग्यपदार्थेषु अत्यासङ्गो नितान्तासक्तिः पुरुषं नाशयति। तथा च माधुर्य्यानुभवाद्विषयेष्वासक्तिर्जायते सा च नाशयतीति भावः। श्रौतोपमालङ्कारः।

(स) भवेति। भाजनानि पात्राणि विषया इत्यर्थः। हि यस्मात् अपगतमले शास्त्रशिक्षया कामक्रोधादिरहिते अनाविले च मनसि स्फटिकमणौ रजनिकरगभस्तयश्चन्द्रकिरणा इव उपदेशस्य गुणाः फलानि सुखेन अनायासेन विशन्ति प्रवेशं लभन्ते। श्रौतोपमालङ्कारः।

(ह) गुर्विति। अमलमपि कल्याणकरमपि अमलं शस्तौ च निर्दिष्टे कल्याणे च शुद्धेऽपि च। इति विश्व

প্রবল বায়ু যেমন শুষ্ক পত্র অতিদূরে লইয়া যায় সেইরূপ সেই স্বভাব মানুষকে ইচ্ছানুসারে অতিদূরে (অগম্য স্থানে) লইয়া যায়। (ব) আর, অতিদুরন্ত এই সম্ভোগেচ্ছারূপ মৃগতৃষ্ণিকা মানুষের ইন্দ্রিয় হরিণগণকে হরণ করিয়া থাকে। (শ) কোন কষায়রসযুক্ত রসনাতে জল যেমন সেরূপ মধুর না হইলেও আপাতত অতিমধুর বলিয়া বোধ হয় সেইরূপ নবযৌবন-বশত কামক্রোধাদিযুক্ত চিত্তে, কামিনী কাঞ্চনাদি প্রসিদ্ধ ভোগ বস্তু সকল অনুভূত হইতে লাগিলে, আপাতত বড়ই মধুর বলিয়া বোধ হয়। (ষ) দিগভ্রম যেমন মানুষকে কুপথে পরিচালিত করিয়া বিনষ্ট করে, কামিনীকাঞ্চনপ্রভৃতি ভোগ্য পদার্থে অত্যন্ত আসক্তিও তেমন মানুষকে কুপথে পরিচালিত করিয়া বিনষ্ট করে। (স) তোমার মত লোকেরাই উপদেশের পাত্র হইয়া থাকে, কারণ, নির্ম্মল স্ফটিকে যেমন চন্দ্রের কিরণ অনায়াসে প্রবেশ করে, সেইরূপ নির্ম্মল হৃদয়েই উপদেশের ফল অনায়াসে প্রবেশ করে। (হ) গুরুর উপদেশ-

(१) इन्द्रियहरिणं हरतीव। सततदुरन्तेयम्। (२) भाजनम्। (३) सुखम्।

ইতরস্য তু (১) করিণ ইব শঙ্খাভরণমাননশোভাসমুদয়মধিকতরমুপজনয়তি (ঘ)। হরতি চ সকল (২) মতিমলিনমপ্যন্ধকারমিব (৩) দোষজাত প্রদোষসময়-নিশাকর ইব (ক)। গুরূপদেশ প্রশমহেতুর্বয় পরিণাম ইব (৪) পলিতরূপেণ শিরসিজজালমমলীকুর্বন্ গুণরূপেণ তদেব পরিণময়তি (খ)। অয়মেব চানা-স্বাদিত বিষয়রসস্য তে কাল উপদেশস্য (গ)। কুসুমশর শর প্রহারজর্জরিতে হি (৫)

গুরুবচন গুরোরুপদেশবাক্যম্ সলিলমিব অভব্যস্য অসাধুজনস্য শ্রবণস্থিত কর্ণগত সত্ মহত্ শূল বেদনাম্ উপজনয়তি অসাধুতাপগমহেতুত্বেন প্রতিকূলত্বাদিতি ভাব। উপমালঙ্কার।

(ঘ) ইতরস্যেতি। ইতরস্য অভব্যেতরস্য সাধোস্তু গুরুবচনমিতি সম্বন্ধ করিণ হস্তিন শঙ্খাভরণ শঙ্খালঙ্কার ইব হস্তিনো দৃষ্টিদোষোপশমনায় কর্ণে শঙ্খালঙ্কারো বধ্যত ইতি রীতি অধিকতরম্ আননশোভাসমুদয় মুখসৌন্দর্য্যোত্পত্তিম্ উপজনয়তি হর্ষ প্রফুল্লবদনেন তচ্চ শ্রবণাদ্গ্রহণাচ্চেতি ভাব। উপমালঙ্কার।

(ক) হরতীতি। কিঞ্চ গুরুবচনম্ প্রদোষসময়নিশাকর সূর্য্যাস্তপরবর্ত্তি সময়চন্দ্র প্রদোষসময়ে হি নক্ষত্রা লোকস্যাপ্যভাবাদন্ধকারস্যাতিমালিন্যসম্ভবতাপ্রদর্শনায় প্রদোষসময়পদম্। অতিমলিনমপি গাঢ়কৃষ্ণমপি অন্ধকার মিব অতিমলিনমপি নিতান্তকলুষমপি সকল দোষজাত কামক্রোধাদিদোষসমূহ হরতি উপশময়তি। উপমালঙ্কার।

(খ) গুণি তি। প্রশমহেতুগুরূপদেশ পলিতরূপেণ শিরসিজজালমমলীকুর্বন্ বয় পরিণাম ইব তদেব দোষ জাত গুণরূপেণ পরিণময়তীত্যন্বয়। তথা চ প্রশমহেতুরন্তরিন্দ্রিয়নিগ্রহকারণীভূতো বয়পরিণামো বার্দ্ধক্য যথা শিরসিজজাল কেশকলাপম্ অমলীকুর্বন্ তদেব শিরসিজজাল পলিতরূপেণ বার্দ্ধক্যনিবন্ধনশুক্লত্বরূপেণ পরিণময়তি তথা প্রশমহেতুগুরূপদেশোঽপি তদেব দোষজাত কামক্রোধাদিকম্ অমলীকুর্বন্ বিষয়বিশেষে প্রবর্ত্তনয়া নির্ম্মলীকুর্বন্ গুণরূপেণ পরিণময়তীত্যর্থ। (তথা হি গুরূপদেশো নাম পুরুষাণাং ধর্ম্মার্জনে কামম্ দণ্ড্যেষু ক্রোধম্ স্বর্গাদৌ লোভম্ পাপাচরণে মোহম্ দানদয়াদৌ মদম্ স্বদুর্ণয়ে চ মাত্সর্য্যং প্রবর্ত্তয়ন্ দোষানেব তান্ গুণতামেবাপাদয়তীতি দ্রষ্টব্যম্। উপমালঙ্কার।

(গ) ননূপদেশস্য কালান্তরেঽপি সম্ভবাত্ কথমিদানীমেব তবায়মুদ্যম ইত্যাহ অয়মিতি। ন আস্বাদিত অনুভূত বিষয়রস কামিনীকাঞ্চনাদিভোগ্যপদার্থগুণো যেন তস্য তে তব অয়মেব উপদেশস্য কাল।

বাক্য মঙ্গলকর হইলেও অসজ্জনের কর্ণে উপস্থিত হইলে তাহা জলের ন্যায় গুরুতর বেদনা জন্মায়। (ঙ) কিন্তু তাহাই আবার সজ্জনের কর্ণে উপস্থিত হইলে, হস্তীর শঙ্খময় কর্ণালঙ্কারের ন্যায় মুখের অত্যন্ত শোভা জন্মায়। (ক) প্রদোষকালের চন্দ্র যেমন অন্ধকার অত্যন্ত কৃষ্ণবর্ণ হইলেও তাহাকে বিনষ্ট করে, সেইরূপ গুরুর উপদেশ, নিতান্ত কলুষিত হইলেও, কামক্রোধাদি সকল দোষসমূহকে বিনষ্ট করে। (খ) বার্দ্ধক্য যেমন কেশসমূহকে নির্ম্মল করত ক্রমে শুক্লরূপে পরিণত করে সেইরূপ অন্তরিন্দ্রিয়দমনের কারণ গুরুর উপদেশও সেই দোষ সমূহকেই নির্ম্মল করত ক্রমে গুণরূপে পরিণত করে। (গ) তুমি এখনও কোন ভোগ্য পদার্থের রস অনুভব কর নাই, সুতরাং এই ই তোমার উপদেশের সময়, (ঘ) কারণ, কাম-

(১) চ। (২) অপহরতি চ সকলম্ হরত্যেতি। (৩) অতিমলিনমন্ধকারমিব।
(৪) ক্বচিত্ বয়পদং নাস্তি। (৫) ক্বচিত্ হিশব্দো নাস্তি।

हृदये (१) जलमिव गलत्युपदिष्टम् (घ)। अकारणञ्च भवति दुष्प्रकृतेरन्वयः श्रुतं वा विनयस्य (२)। चन्दनप्रभवो न दहति किमनलः, किं वा प्रशमहेतुनापि न प्रचण्डतरीभवति वडवानलो वारिणा (ङ)। गुरूपदेशश्च नाम पुरुषाणामखिल-मलप्रक्षालनक्षममजलस्नानम्, (३) अनुपजातपलितादिवैरूप्यमजरं वृद्धत्वम्, अनारोपितमेदोदोषं (४) गुरूकरणम्, असुवर्णविरचनमग्राम्यं (५) कर्णाभरणम्, अतीत-(६) ज्योतिरालोकः, नोद्वेगकरः प्रजागरः, (च) विशेषेण राज्ञाम्। विरला हि

(घ) नन्वस्वादितविषयरसस्योपदेशे को दोष इत्याह कुसुमेति। हि यस्मात् कुसुमशरस्य मदनस्य शरप्रहारेण जर्जरिते उपर्युपरि शतच्छिद्रीकृते च हृदये जलमिव उपदिष्टं गुरूपदेशो गलति चालनीन्यायात् स्रवति। तथा च बलवती कामोद्दीपना वाल्यात् गुरूपदेशं प्रवेशमात्रमेवापसारयतीति भावः। उपमालङ्कारः।

(ङ) अथ सद्वंशजातस्य शास्त्रज्ञानसम्पन्नस्य च विनयप्रभावेण कथं नाम दोषाः प्रादुर्भवितुमर्हन्तीत्याह अकारणमिति। किञ्च दुष्प्रकृतेर्दुश्चरित्रस्य जनस्य अन्वयः सत्कुलम् श्रुतं प्रशमहेतु शास्त्रज्ञानं वा विनयस्य सत्पथप्रवृत्तेः अकारणं भवति हेतुर्न भवतीत्यर्थः अतीत्य हि गुणान् सर्वान् स्वभावो मूर्ध्नि वर्त्तते इति न्यायादिति भावः। अत्र अकारणं भवतीति प्रधानस्य नञः समासे गुणीभावाद्विधेयाविमर्शदोषः स तु कारणं न भवतीति पाठेनैव समाधेयः। उक्तमर्थं समर्थयितुमाह चन्दनेति। चन्दनाद्वृक्षात् प्रभवति सञ्जायते उत्पद्यत इति चन्दनप्रभवः अनलः किं न दहति अपि तु दहत्येवेत्यर्थः। सुतरामन्वयो न विनयस्य कारणमिति भावः। तथा प्रशमहेतुनापि शैत्यकारणेनापि वारिणा समुद्रजलेन वडवानलः किं वा न प्रचण्डतरीभवति समुद्दीप्तो भवति अपि तु भवत्येवेत्यर्थः। अतः प्रशमहेतुः शास्त्रज्ञानं न विनयस्य कारणमिति भावः। अत्र विशेषेण सामान्यसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

(च) प्रकारान्तरेण प्रकृतं गुरूपदेशं प्रशंसति गुरूपदेशश्चेति। किञ्च गुरूपदेशो नाम पुरुषाणाम् अखिलमलानां कामक्रोधादीनां पङ्कादीनाञ्च प्रक्षालनक्षमं शोधनसमर्थम् अजलस्नानं जलहीनं स्नानस्वरूपः। अन्यस्नानन्तु सजलमित्यपृथग्वाह्यम्। अत्राधिकारूढवैशिष्ट्यरूपकमलङ्कारः। न उपजातं पलितादि वार्द्धक्यनिबन्धनशुक्लतादि वैरूप्यं विकृतिर्यस्मिन् तत् तथा न विद्यते जरा जीर्णता यस्मिन् तत् वृद्धत्वं वार्द्धक्यस्वरूपम् शान्तत्वसदसद्विवेकादिजननादिति भावः। अन्यवृद्धत्वन्तु जातपलितादिवैरूप्यं सजरञ्चेत्यस्य वैशिष्ट्यम्। पूर्ववदलङ्कारः। न आरोपितो जनितः मेदोदोषः स्थूलताजनकमेदोनामकधातुवृद्धिदोषो येन तत् गुरूकरणं गौरवसाधनस्वरूपं वहुदर्शिताजनकं तथा सकलसम्मानप्रयोजनकत्वादिति भावः। अन्यगुरूकरणन्तु मेदोदोषजनकमित्यस्य वैशिष्ट्यम्। पूर्ववदलङ्कारः।

বাণের প্রহারে যে হৃদয় জর্জ্জরিত হইয়াছে, সে হৃদয় হইতে উপদেশবাক্য জলের ন্যায় পড়িয়া যায়। (ঙ) দুশ্চরিত্র লোকের সদ্বংশে উৎপত্তি কি বা শাস্ত্রজ্ঞান সৎপথপ্রবৃত্তির কারণ হয় না, দেখ—সন্তর্পিত চন্দনবৃক্ষ হইতে যে অগ্নি উৎপন্ন হয় সে কি দগ্ধ করে না? কিংবা শীতল সমুদ্রজলে বড়বানল কি অত্যন্ত ভীষণ হইয়া উঠে না? (চ) গুরুর উপদেশ, মানুষের সমস্ত মলপ্রক্ষালন করিবার যোগ্য জলহীন স্নানস্বরূপ, আর গুরুর উপদেশ মানুষের বার্দ্ধক্যস্বরূপ এই বার্দ্ধক্যে কেশের পক্কতা ও অঙ্গশৈথিল্যপ্রভৃতি বিকৃতি জন্মে না এবং শরীরেও

(१) हृदि। (२) श्रुतञ्चाविनयस्य। (३) अजलं स्नानम्। (४) मददोष।
(५) विरचनायाम्य। (६) अपनीत।

तेषामुपदेष्टार (छ)। प्रतिशब्दक इव (१) राजवचनमनुगच्छति जनो भयात् (ज)। उद्दाम-दर्प-श्वयथु स्थगित (२) श्रवणविवराश्चोपदिश्यमानमपि (३) ते न शृण्वन्ति (झ)। शृण्वन्तोऽपि च गजनिमोलितेनावधीरयन्त (४) खेदयन्ति हितोपदेशदायिनो गुरून् (ञ)। अहङ्कार दाहज्वर-मूर्च्छान्धकारिता विह्वला हि राजप्रकृति, अलीकाभिमानोन्मादकारीणि धनानि, राज्य-विष विकार तन्द्रोप्रदा (५) राजलक्ष्मी (६) (ट)।

न सुवर्णे न स्वर्णे न विरचना निर्म्माणं यस्य तत् अग्राम्य ग्राम्यतादोषरहित अलङ्कादिवचनभिन्नभूतम् अतिसुन्दर मित्यर्थ कर्णाभरणं कर्णालङ्कारस्वरूप अप यमाने य व चित्तग्रीभाजननादिति भाव । अन्यकर्णाभरणन्तु सुवर्ण निर्म्मित ग्राम्यश्चेत्यस्य वैशिष्ट्यम्। पुव वदलङ्कार । अतीतज्योतिरस्तेजोहीन आलोक प्रकाशस्वरूप परीचायप्रकाशा न्निति भाव । अन्यालोकस्तु तेजस्वीत्यस्य व शिष्ट्यम्। पुव वदलङ्कार । नीद्रेगकर अकष्टजनक इत्यर्थ प्रजागरो जागरस्वरूप सव विषयेषु सावधानताजननादिति भाव । अन्यजागरणन्तु कष्टजनकमित्यस्य वैशिष्ट्यम्। पुव वदलङ्कार ।

(छ) विशेषेणेति। एते अजलस्नानाद्यो गुणा राज्ञां विशेषेणोपकारिण इत्यर्थ तथा च सत्सु खल्वेषु तेषां प्रभुतया मङ्गलातिरिक्तसम्भवात् असत्सु तु अनर्थ बाहुल्यसम्भवाच्चेति भाव । ननु यतस्ते प्रभव अत उपदेष्टारोऽपि बहव एव सम्भवन्तीत्याह विरला इति। विरला हि अल्पा एव।

(ज) ननु कथं नाम विरलास्तेषामुपदेष्टार इत्याह प्रतीति। प्रतिशब्दक प्रतिध्वनिरिव स्वार्थे क जन प्रायेण लोक भयात् राजवचनमनुगच्छति अनुसरति न तु सति सम्भवे प्रतिवदत्यपि सुतरामेव विरला इति भाव । अत्रोपमालङ्कार ।

(झ) अथ यदि केचिद्भयमपहाय उपदिष्टं मप्यच्छन्ति इत्याह उद्दामेति। उद्दामा विशाला दर्पा अहङ्कारा एव श्वयथव शोथास्तै स्थगितानि आवृतानि श्रवणविवराणि कर्णरन्ध्राणि येषां ते ते राजान । अत्र निरङ्ग केवलरूपकमलङ्कार ।

(ञ) अहो राजानो हि उपदेशकाले ततो न गच्छन्ति नवा वारयन्ति तत कथं न शृण्वन्तीत्युच्यत इत्याह शृण्वन्तोऽपीति। गजवन्निमीलितेन नेत्रसङ्कोचमात्रेण अवधीरयन्त उपदेशमवजानन्त । खेदयन्ति क्लेशयन्ति स्वयोपदेशस्यावज्ञानादिति भाव । अत्र लुप्तोपमालङ्कार ।

জীর্ণ শীর্ণ হয় না, আবার গুরূপদেশ স্থূলতার সাধক, অথচ মেদদোষ জন্মায় না, কর্ণের সুন্দর অলঙ্কার অথচ তাহা স্বর্ণনির্ম্মিত নহে, তেজ নাই অথচ আলোকস্বরূপ এবং জাগরণ বটে, কিন্তু সে কোন কষ্ট জন্ময় না। (ছ) এই সকল গুণ রাজাদের পক্ষে বিশেষ উপকারী কারণ, তাঁহাদের উপদেষ্টা অল্পই। (জ) যেহেতু প্রায় সকল লোকই ভয়বশত প্রতিধ্বনির ন্যায় রাজাদের বাক্যের কেবল অনুসরণই করিয়া থাকে। (ঝ) আবার গুরুতর অহঙ্কাররূপ শোথরোগে রাজাদের কর্ণবিবর রুদ্ধ হইয়া থাকে, সুতরাং কেহ উপদেশ দিতে লাগিলেও, তাঁহারা তাহা শুনিতে পান না। (ঞ) শুনিতে পাইলেও তাঁহারা হস্তীর ন্যায় নয়নসঙ্কোচ

(१) एव। (२) उद्दामदर्पाश्व पृथु स्थगित। (३) उपदिश्यमान। (४) अवधारयन्त।
(५) तन्द्राप्रदा। (६) राज्यलक्ष्मी।

आलोकयतु तावत् कल्याणाभिनिवेशी लक्ष्मीमेव प्रथमम्। इयं हि सुभट-(१)खड्गमण्डलोत्पल-वन-विभ्रम-भ्रमरी लक्ष्मीः क्षीरसागरात् पारिजातपल्लवेभ्यो रागम्, इन्दुशकलादेकान्तवक्रताम्, उच्चैःश्रवसश्चञ्चलताम्, कालकूटान्मोहनशक्तिम्, मदिराया मदम्, कौस्तुभमणेरतिनैष्ठुर्यम्, (२) इत्येतानि सहवास-परिचयवशाद्विरहविनोदचिह्नानि गृहीत्वेवोद्गता (३) (ठ)। न ह्येवंविधमपरम् (४) अपरि

(ट) ननु राजानः कथमेवं कुर्वन्तीत्याह अहङ्कारेति। हि यस्मात् राजप्रकृतिः राज्ञां स्वभावः अहङ्कार एव दाहज्वरः सन्तापजननात् तेन या मूर्च्छा मोहस्तया अन्धकारिता सञ्जातान्धकारा सदसद्विवेकहीनेत्यर्थः अतएव विह्वला समाकुला अस्थिरा अत्र निरङ्गं केवलरूपकमलङ्कारः। विशेषतश्च धनानि अलीकाभिमानेन धनानां नश्वरत्वान्मिथ्याहङ्कारेण उन्मादः मत्तता कृतं शीलं येषां तानि तादृशानि। अपरञ्च राजलक्ष्मीः राज्यमेव विषं विकारहेतुत्वात् तेन यो विकारस्तेन तन्द्रीं तन्द्रां प्रददातीति सा। एतेभ्य एव कारणेभ्यो राजान उक्तरूपं कुर्वन्तीति भावः। अत्रापि निरङ्गं केवलरूपकमलङ्कारः।

(ठ) राज्यविषेत्याद्युक्तमर्थं समर्थयितुं लक्ष्मीस्वभावमेव बाहुल्येनाह आलोकयत्विति। कल्याणाभिनिवेशी मङ्गलाग्रहान्वितो भवान् प्रथमं लक्ष्मीमेव तावत् आलोकयतु परमार्थतो विचारयतु। हि तथाहि सुभटानां निपुणयोद्धॄणां खड्गमण्डलं तरवारिसमूह एव उत्पलवनं तत्र विभ्रमे विचरणे भ्रमरी मधुकरीस्वरूपा इयं लक्ष्मीः। अत्र परम्परितरूपकमलङ्कारः। पारिजातपल्लवेभ्यः क्षीरोदसागरादेवोत्पद्यमानपारिजातवृक्षकिसलयेभ्यः रागं रक्तिमानमिव रागम् आत्मनि लोकानुरागं गृहीत्वेव क्षीरसागरादुद्गता तन्मन्थनवेलायामुत्थिता। इत्यमत्यत्राप्यन्वयः। इन्दुशकलाच्चन्द्रखण्डात् एकान्तवक्रताम् अत्यन्तकुटिलतामिव एकान्तवक्रताम् अत्यन्तदुर्व्यवहारम्। उच्चैःश्रवसो घोटकात् चञ्चलतां स्पन्दितदेहत्वमिव चञ्चलताम् अचिरस्थायित्वम्। कालकूटाद्विषात् मोहनशक्तिं मूर्च्छाजननसामर्थ्यमिव मोहनशक्तिमन्यवशीकरणसामर्थ्यम्। मदिरायाः सुरातः मदं मत्ततजननशक्तिमिव मदमौद्धत्यम्। तथा कौस्तुभमणेः सकाशात् अतिनैष्ठुर्यं नितान्तकाठिन्यमिव अतिनैष्ठुर्यम् अत्यन्तनिर्दयत्वम्। इत्येतानि रागादीनि सहवासपरिचयवशात् एकत्रावस्थानप्रणयवशात् विरहस्य पारिजातादिभिर्वियोगस्य विनोदचिह्नानि अपनोदनचिह्नभूतानि गृहीत्वेव क्षीरसागरादुद्गता तत्तद्गुणवत्त्वादिति भावः। अन्योऽपि सहचरवियोगसम्भावनायां तदीयचिह्नीभूतं छत्रपादुकादिकं परिगृह्य प्रवासं गच्छतीति द्रष्टव्यम्। अत्र रक्तिमानुरागादीनां भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिः उक्तरूपं रूपकम् क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्करः।

যারা সেই উপদেশের অবজ্ঞা করত সেই হিতোপদেশদাতা গুরুদিগকে দুঃখিত করিয়া থাকেন, (ট) কারণ, রাজাদের স্বভাব অহঙ্কাররূপ দাহজ্বরজনিত মূর্চ্ছাতে বিবেকবিহীন হইয়া একেবারে বিহ্বল হইয়া পড়ে, দ্বিতীয়তঃ ধনসম্পত্তি মিথ্যা অভিমানে উন্মত্ততা জন্মায় আর রাজলক্ষ্মী, রাজ্যরূপ বিষবিকারদ্বারা তন্দ্রা উৎপাদন করে।

(ঠ) তুমি মঙ্গললাভের নিমিত্ত যত্নবান্ সুতরাং প্রথমে লক্ষ্মীকেই বিচার করিয়া দেখ, এই লক্ষ্মী, নিপুণ যোদ্ধাদিগের তরবারিসমূহস্বরূপ পদ্মবনে বিচরণকারিণী ভ্রমরীস্বরূপা এবং এ, ক্ষীরোদসাগর হইতে উঠিবার সময়ে পারিজাতপ্রভৃতির সহিত একত্র বাস করায় পূর্ব্বেই উহাদের সহিত প্রণয় জন্মিয়াছিল, তাই উহাদের বিরহদুঃখ দূর করিবার চিহ্নস্বরূপ

(१) क्वचित् सुभटपदं नास्ति। (२) नैष्ठुर्यम्। (३) गृहीत्वेवोद्गता। (४) क्वचित् अपरमिति न दृश्यते।

চিতমিহ জগতি কিঞ্চিদস্তি, যথেয়মনার্য্যা (ড)। লব্ধাপি খলু দুঃখেন পরিপাল্যতে, (ঢ) দৃঢ়গুণপাশ সন্দান (১) নিষ্পন্দীকৃতাপি নশ্যতি, (ণ) উদ্দাম দর্প ভট-সহস্রোল্লাসিতাসিলতা (২) পঞ্জর বিধৃতাপ্যপক্রামতি, (ত) মদজল দুর্দ্দিনান্ধকার গজ-(৩) ঘন-ঘটা পরিপালিতাপি প্রপলায়তে, (থ) ন পরিচয় রক্ষতি, নাভিজন মীক্ষতে, ন রূপমালোকয়তে, (৪) ন কুলক্রমমনুবর্ত্ততে, ন শীল পশ্যতি ন বৈদগ্ধ্য গণয়তি, ন শ্রুতমাকর্ণয়তি, ন ধর্ম্মমনুরুধ্যতে, ন ত্যাগমাদ্রিয়তে, ন বিশেষজ্ঞতা

(ড) নহীতি। অপরচিত পরিচয়নিবন্ধনসৌহার্দ্দ নিরপেক্ষম্। কিঞ্চিৎ কিমপি বস্তু। অনার্য্যা নীচস্বভাবা।

(ঢ) বাক্যবাহুল্যেন লক্ষ্ম্যা অপরিচিতত্বমুপপাদয়ন্নাহ লব্ধাপীতি। প্রায়েণ ন লভ্যতে লব্ধাপীত্যপেরর্থ। অন্যস্তু পরিচিতো নবমিতি ভাব।

(ণ দৃঢ়েতি। দৃঢ়া যথাযথপ্রয়োগেণানন্যথাকরণীয়া গুণা সন্ধিবিগ্রহাদয় এব পাশো রজ্জুস্তেন যৎ সন্দান বন্ধন তেন নিষ্পন্দীকৃতাপি লক্ষ্মী নশ্যতি অন্যপক্ষাশ্রয়াদদর্শন যাতি অন্য পাশবদ্ধা গবা যোঽপি নৈবমিতি ভাব। অত্র নাশকারণাভাবেঽপি তদুৎপত্ত কি বিভাবনা উত নিষ্পন্দীকরণরূপে স্থৈর্য্যকারণে সত্যপি তদনুৎপত্তেবি শেষোক্তিরিত্যনয়ো সন্দেহসঙ্কর সোঽপি নিরঙ্গকেবলরূপকেণ সঙ্কীর্য্যতে। কৈশ্চিত্ত্বেষু বিরোধাভাসতাদৃশরূপকয়ো সঙ্কর ইত্যাখ্যতে।

(ত) উদ্দামেতি। উদ্দামো বিশালো দর্পো যস্য তেন ভটসহস্রেণ যোদ্ধ সমূহেন উল্লাসিতা উত্তোলিতা অসিলতা লম্বিততরবারয় এব পঞ্জর তত্র বিধৃতাপি আবদ্ধাপি লক্ষ্মী অপক্রামতি অপসরতি পক্ষান্তরমবলম্বত ইত্যর্থ। পঞ্জরবদ্ধা হি হান্য পশবোঽপি নবমিতি ভাব। অত্রাপি পূর্ব্ববদেবালঙ্কার।

(থ) মদেতি। (মদজলান্যেব দুর্দ্দিনানি দৃষ্টয়স্ত রন্ধকারো যেভ্যস্তাদৃশা গজা এব ঘনা মেঘাস্তেষাং ঘটয়া সমূহেন পরিপালিতাপি লক্ষ্মী প্রপলায়তে পক্ষান্তর গচ্ছতি) চিত্তালোঽপি নব শক্নোতীতি ভাব। অত্র মদজলেষু দুর্দ্দিনত্বারোপো গজেষু মেঘত্বারোপে নিমিত্তমিতি পরম্পরিতরূপকম্ পূর্ব্ববদ্বিভাবনাবিশেষোক্ত্যো সন্দেহসঙ্করশ্চ ইত্যনয়োরপ্যঙ্গাঙ্গিভাবেন সঙ্কর।

পারিজাতপল্লবের নিকট হইতে রাগ (রক্তিমা অনুরাগ) চন্দ্রখণ্ড হইতে অত্যন্ত বক্রতা উচ্চৈঃশ্রবার নিকট হইতে চাঞ্চল্য কালকূট বিষের নিকট হইতে মোহনশক্তি মদ্যের নিকট হইতে মাদকতা এবং কৌস্তুভমণির নিকট হইতে অত্যন্ত নিষ্ঠুরতা এই সকল, সঙ্গে লইয়াই যেন উঠিয়াছিল। (ড) দীর্ঘকাল পরিচয়বশত যে সৌহার্দ্দ জন্মে তাহার গণনা না করে এমন অপর কেহ এই জগতে নাই, যেমন এই নীচপ্রকৃতি লক্ষ্মী। (ঢ) ইহাকে পাইলেও দুঃখেই পরিপালন করিতে হয় (ণ) যথাযথভাবে প্রযুক্ত সন্ধি বিগ্রহপ্রভৃতি গুণরূপ রজ্জুদ্বারা বন্ধন করিয়া নিশ্চল করিয়া রাখিলেও চলিয়া যায় (ত) অত্যন্ত দর্পসমন্বিত যোদ্ধৃগণের উত্তোলিত তরবারিসমূহরূপ পিঞ্জরমধ্যে আবদ্ধ করিয়া রাখিলেও সরিয়া পড়ে (থ) মদজলরূপ বৃষ্টিদ্বারা অন্ধকারকারী হস্তিরূপ মেঘসমূহ পরিবেষ্টিত করিয়া রাখিলেও পলাইয়া যায়

(১) দৃঢ়গুণসন্দান। (২) উল্লসিতাসিলতা। (৩) গজঘটিতঘনঘটাটোপ।
(৪) আলোকয়তি।

विचारयति, नाचारं पालयति, न सत्यमवबुध्यते, (१) न लक्षणं प्रमाणीकरोति (द)। गन्धर्वनगरलेखेव पश्यत एव नश्यति (ध)। अद्याप्यारूढ-मन्दर परिवर्त्तावर्त्त भ्रान्ति जनित संस्कारेव परिभ्रमति (२) (न)। कमलिनी सञ्चरण (३) व्यतिकर लग्न नलिन-नाल कण्टक क्षतेव (४) न क्वचिदपि (५) निर्भरमाबध्नाति

(द) नैत्यादि। परिचयं न रक्षति चिराश्रयस्यापि परित्यागात् कुक्कुरोऽपि नवमित्याशय। अभिजनं सत्कुलं न ईक्षते पर्य्यालोचयति तत्परित्यागेन दुष्कुलावलम्बनात् दासीऽपि न वमाचरतीत्यभिप्राय। रूपं सौन्दर्य्यं नालोकयते सुन्दरपरित्यागेन कुत्सिताश्रयात् वेश्यापि न व करोतीति भाव। कुलक्रमं नानुवर्त्तते वंशपरम्परया परिरक्षिताहं कथमकस्मादन्यत्र गच्छामीति न विचारयतीत्यर्थ सहसैव तत्परित्यागात् करेणुरपि नैवमिति भाव। शीलं सच्चरित्रं न पश्यति दुश्चरित्रस्याप्यवलम्बनात् दास्यपि नैवमित्याशय। वैदग्ध्यं दाक्ष्यं न गणयति जडस्याप्याश्रयात् पान्थोऽपि न वमिति भाव। श्रुतं शास्त्रज्ञानं नाकर्णयति पण्डितमपहाय मूर्खाश्रयणात् दास्यपि न व करोतीति भाव। धर्म्मं न अनुरुध्यते धर्म्मानुरोधेन धार्म्मिकं नाश्रयतीत्यर्थ प्रायेणाधार्म्मिकस्यैवाश्रयात् पारावतोऽपि नैवमिति भाव। त्यागं दानं न आद्रियते दानप्रसक्त्यादरेण दातारं नाश्रयतीत्यर्थ दातृपरित्यागेन कृपणाश्रयात् विडालोऽपि नैवमिति भाव। विशेषज्ञतां न विचारयति विशेषज्ञतापर्य्यालोचनया विचक्षणं नावलम्बत इत्यर्थ प्रायेण वणिजामाश्रयात् भक्षोऽपि नैवमिति भाव। आचारं न पालयति श्वपाकगृहेऽपि गमनात् वृषल्यपि नैवमिति भाव। सत्यं नावबुध्यते प्रायेण धूर्त्ताश्रयात् अजापि न वमिति भाव। लक्षणं न प्रमाणीकरोति सामुद्रिकोक्तध्वजवज्रादिकरचिह्नादिदर्शनेन तादृशं पुरुषं नाश्रयति तादृशं परिहाय लक्षणहीनावलम्बनात् पथिकोऽपि न वमिति भाव।

(ध) गन्धर्वेति। गन्धर्वनगरलेखा दृष्टिभ्रमादाकाशे नगरवद्दृश्यमाना कापि रेखा सेव इयं लक्ष्मी पश्यत एव पश्यन्तं जनमनादृत्य व नश्यति विलयं याति। इदमतीवाश्चर्य्यमिति भाव। अत्रोपमालङ्कार। गन्धर्वनगरदर्शनफलमुक्तं बृहत्संहितायाम्— गन्धर्वनगरमुत्थितमापाण्डुरमशनिपातवातकरम्। दीप्ते नरेन्द्रमृत्युर्वामेऽरिभयं जयः सव्ये॥ इत्यादि।

(न) अद्येति। आरूढ उत्पन्नो यो मन्दरपरिवर्त्तन समुद्रमन्थनवेलायां मन्दराचलघूर्णनेन आवर्त्तो जलभ्रमिस्तत्र या भ्रान्तिर्भ्रमणं अपि तत्र्त्यायां घूर्णनं तया जनितश्चिरायोत्पादित संस्कारो भ्रमणजनकवेगाख्य संस्कारो यस्याः सा तादृशी सतीव अद्यापि परिभ्रमति गृहाद्गृहान्तरं यातीत्यर्थ। अन्योऽपि पूर्वघूर्णन संस्कारवशात् समयान्तरेऽपि घूर्णते। अत्र क्रियोत्प्रेक्षालङ्कार।

(দ) আর এই লক্ষ্মী প্রণয় রাখে না কুলের প্রতি দৃষ্টিপাত করে না রূপ দেখে না, কুলক্রমের অনুসরণ করে না স্বভাবের প্রতি লক্ষ্য করে না দক্ষতার আদর করে না শাস্ত্রজ্ঞান শুনিতে চায় না, ধর্ম্মের গৌরব রাখে না, দানশক্তির আদর করে না বিশেষ অভিজ্ঞতার বিচার করে না, আচার পালন করে না, সত্য বোঝে না এবং পুরুষের ধ্বজ বজ্রাদি চিহ্ন দেখিয়া তাহার অনুসরণ করে না। (ধ) আকাশে গন্ধর্ব্বনগররেখার ন্যায় দেখিতে দেখিতেই লোপ পাইয়া যায়। (ন) সমুদ্রমন্থনের সময় মন্দরপর্ব্বতের ঘূর্ণনে সমুদ্রে যে ঘোলা জন্মিয়াছিল, লক্ষ্মী তাহাতে ঘুরিয়া সেই সংস্কারবশতই যেন এখনও ঘুরিতেছে। (প) পদ্মবনে বিচরণ করিবার

(१) अनुबुध्यते। (२) भ्रमति। (३) सञ्चार। (४) नालकण्टकैव नालकण्टकैर्य्येव।
(५) क्वचित् अपिशब्दो नास्ति।

पदम् (प)। अतिप्रयत्नविधृतापि परमेश्वरगृहेषु विविधगन्धगजगण्डमधुपानमत्तेव परिस्खलति (फ)। पारुष्यमिवोपशिक्षितुमसिधारासु निवसति (ब)। विश्वरूपत्वमिव ग्रहीतुमाश्रिता नारायणमूर्त्तिम (भ)। अप्रत्ययबहुला च दिवसान्त(१) कमलमिव समुपचित(२) मूल दण्ड कोष-मण्डलमपि मुञ्चति भूभुजम् (म)।

(प) कमेति। कमलिनीषु पद्मलतासु सञ्चरणव्यतिकरेण लक्ष्म्याः पद्मवनस्थायित्वप्रसिद्धेः विचरणसम्पर्केण लग्नानि चरणे सक्तानि यानि नलिनानां पद्मानां नालकण्टकानि तैः क्षता विदीर्णचरणेव लक्ष्मीः क्वचिदपि पदप्रतिष्ठामिव पदं चरणं निर्भरं दृढं न आबध्नाति न करोति। अन्योऽपि कण्टकक्षतपदो दृढं पदमर्पयितुं न शक्नोति। अत्र चरणप्रतिष्ठयोर्भेदेऽपि पदशब्दस्य तेनाभेदाध्यवसायादतिशयोक्तिः क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(फ) मत्तेति। परमेश्वराणां महाराजानां गृहेषु अतिप्रयत्नेन विधृता आबद्धापि इयं लक्ष्मीः विविधानां गन्धगजानां गण्डयोर्यानि मधूनि मदजलान्येव मधूनि मद्यानि तेषां पानेन मत्तेव सती परिस्खलति भ्रश्यति राजान्तरं यातीत्यर्थः। अन्यापि मद्यपानमत्ता यत्नेन धृतापि पश्यत एव भ्रश्यन्ति। अत्रापि मदजलमद्ययोर्भेदेऽपि मधुशब्दस्य तेनाभेदाध्यवसायादतिशयोक्तिः क्रियोत्प्रेक्षा चेत्यनयोः पूर्ववत् सङ्करः।

(ब) पारुष्यमिति। पारुष्यं कठिनतामिव पारुष्यं निर्दयत्वम् उपशिक्षितुमिव असिधारासु निवसति। येनासिधारा यस्य कण्ठे पातयितुं शक्यते निर्दयतया चिराश्रयमपि तमपहाय सहसैव तं पातयितारमाश्रयतीति भावः। अत्र कठिनत्वनिर्दयत्वयोर्भेदेऽपि पारुष्यपदस्य तेनाभेदाध्यवसायादतिशयोक्तिः क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्करः।

(भ) विश्वेति। विश्वस्य ब्रह्माण्डस्य रूपाणि यस्मिन् तादृशं यद्रूपं तद्विश्वरूपं तत्त्वं ग्रहीतुमिव नारायणमूर्त्तिमाश्रिता तन्मूर्त्तेर्विश्वरूपत्ववत्त्वात्। येन हि कदाचिद्वाणिज्यलक्ष्मीरूपेण वणिजां कदाचिच्च राजलक्ष्मीरूपेण राज्ञां गृहेषु इत्यादिप्रकारेण भासत इति तात्पर्य्यम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(म) अप्रत्ययेति। किञ्च अप्रत्ययोऽविश्वासो बहुलो यस्याः सा दिवसान्तकमलमिव दिवावसानपद्ममिव समुपचितानि सम्यग् वृद्धिं प्राप्तानि मूलं विजयकारणीभूतं सैन्यं ब्रह्मदेशश्च दण्डः उपायविशेषः नालञ्च कोषो धनं मध्यदेशश्च मण्डलं राष्ट्रं परिमण्डलञ्च एतानि यस्य तं तथाभूतं भूभुजं राजानं मुञ्चति परित्यजति राजान्तरमाश्रयतीत्यर्थः। अतएवाप्रत्ययबहुलत्वमिति भावः। अत्र त्यागकारणाभावेऽपि तदुत्पत्तेः किं विभावना आहोस्वित् मूलादिवृद्धिरूपे कारणे सत्यपि तत्कार्य्यास्थैर्य्यानुत्पत्तेर्विशेषोक्तिरित्यनयोः सन्देहसङ्करः पूर्णोपमा चानयोरप्यङ्गाङ्गिभावेन सङ्करः।

সময়ে পদ্মনালের কণ্টক লাগায় চরণ ক্ষতবিক্ষত হইয়াছে বলিয়াই যেন লক্ষ্মী কোন স্থানেও দৃঢ়ভাবে পদক্ষেপ করে না। (ফ) রাজাদের ঘরে অত্যন্ত যত্নে রাখিলেও লক্ষ্মী, নানাবিধ গন্ধহস্তীর গণ্ডের মধুপানে মত্ত হইয়াই যেন চলিয়া যায়। (ব) নিষ্ঠুরতা শিক্ষা করিবার জন্যই যেন তরবারির ধারাতে বাস করে। (ভ) নারায়ণের নিকট হইতে বিশ্বরূপ গ্রহণ করিবার জন্যই যেন তাঁহার শরীর আশ্রয় করিয়াছে। (ম) লক্ষ্মীর প্রতি অবিশ্বাসই অধিক পরিমাণে করিতে হয়, কারণ পদ্মের মূল, নাল, কোষ (বোথল, চাকা) ও বিস্তার বিশেষ বৃদ্ধি পাইয়া থাকিলেও দিনের শেষভাগে শোভা যেমন সেই পদ্মকে পরিত্যাগ করে, সেইরূপ

(१) दिवसावसान। (२) समुच्छित।

लतेव विटपकानध्यारोहति (य)। गङ्गेव वसुजनन्यपि तरङ्गबुद्बुदचञ्चला (र)। दिवसकरगतिरिव प्रकटितविविध-सङ्क्रान्ति (ल)। पातालगुहेव तमोबहुला (व)। हिडिम्बेव (१) भीमसाहसैकहार्य्यहृदया (श)। प्रावृडिवाचिरद्युति-कारिणी (ष)। दुष्टपिशाचीव दर्शितानेकपुरुषोच्छ्राया स्वल्पसत्त्वमुन्मत्तीकरोति

(य) लतेति। लतेव लक्ष्मी विटपकान् कुत्सितकामुकान् तरुशाखाश्च अध्यारोहति आश्रयति। अत्र पूर्णोपमालङ्कारः। विटप पल्लवे षिड्गे विस्तारे स्तम्बशाखयोः। इति विश्वः।

(र) गङ्गेति। गङ्गेव लक्ष्मी वसूनां धनानाम् अष्टानां देवविशेषाणाञ्च जनन्यपि तरङ्गबुद्बुदवच्चञ्चला पक्षे तरङ्गबुद्बुदैश्चञ्चला। पूर्णोपमा।

पुरा किल गङ्गा वशिष्ठशापान्मानुषत्वप्राप्तानष्टौ वसूनुत्पादयामासेति महाभारतवार्त्ता।

(ल) दिवसेति। दिवसकरस्य सूर्य्यस्य गतिरिव लक्ष्मी प्रकटिता विविधेषु जनेषु सङ्क्रान्तिः सञ्चारो यया सा पक्षे प्रकटिता विविधा महाविषुवादि द्वादशप्रकारा सङ्क्रान्तयो राश्यन्तरगमनानि यया सा। पूर्णोपमा।

(व) पातालेति। पातालगुहेव लक्ष्मी तमस्तमोगुणजनितमोहः अन्धकारश्च यस्यां सा। पूर्णोपमा।

(श) हिडिम्बेति। हिडिम्बा राक्षसीव भीमसाहसेन परराज्याक्रमणादिकेवलभयङ्करहठकारितया हार्य्यं हर्त्तुं शक्यं हृदयं मनो यस्याः सा पक्षे भीमस्य वृकोदरस्य साहसेन हिडिम्बवधादिकेवलसाहसकर्म्मणा हार्य्यं हृदयं यस्याः सा। पूर्णोपमा।

(ष) प्रावृडिति। प्रावृट् वर्षाकाल इव अचिरद्युतिम् अल्पकालस्थायिनीं पुरभवनादिशोभां कर्त्तुं शीलं यस्याः सा पक्षे अचिरद्युतिं विद्युतं कर्त्तुं शीलं यस्याः सा। पूर्णोपमा।

(स) दुष्टेति। दुष्टा भयप्रदश्च नाभिलाष्ट्रविनाशया पिशाचीव दर्शितः अनेकेषां पुरुषाणाम् उच्छ्राय अभ्युदयो यया सा तादृशी सती स्वल्पसत्त्वम् अल्पबुद्धिं जनम् उन्मत्तीकरोति तदभ्युदयदर्शनेन तदाशया उन्मत्तं करोति पक्षे उत्तोलितपाणिमानुषमानः पुरुषः तथा च दर्शितः स्वशरीरे प्रकटितः अनेकेषां पुरुषाणाम् उच्छ्राय उन्नतता यया सा अतीवदीर्घ त्वय तादृशी सती अल्पसत्त्वं दुर्ब्बलं मानुषम् उन्मत्तीकरोति भयेनेति भावः। पूर्णोपमा।

রাজার সৈন্য দণ্ডশক্তি ধন ও রাজ্য এই সকল বিশেষ বৃদ্ধি পাইয়া থাকিলেও লক্ষ্মী সেই রাজাকে পরিত্যাগ করে। (য) লতা যেমন বৃক্ষের শাখা আশ্রয় করে লক্ষ্মীও তেমন কুৎসিত কামুক ব্যক্তিদিগকে আশ্রয় করে। (র) গঙ্গা যেমন বসুগণের জননী হইয়াও তরঙ্গ ও বুদবুদদ্বারা চঞ্চল, লক্ষ্মীও তেমন ধনের উৎপাদক হইয়াও তরঙ্গ ও বুদ্‌বুদের ন্যায় চঞ্চল। (ল) সূর্য্যের গতি যেমন মহাবিষুবপ্রভৃতি নানাবিধ সংক্রান্তি প্রকাশ করে লক্ষ্মীও তেমন নানাবিধ লোকের গৃহে সঞ্চরণ করে। (ব) পাতালগহ্বরে যেমন বহুপরিমাণেই অন্ধকার এই লক্ষ্মী আসিলে লোকেরও তেমন বহুপরিমাণেই মোহ হইয়া থাকে। (শ) ভীমসেনের সাহস যেমন হিড়িম্বা রাক্ষসীর মন অপহরণ করিয়াছিল সেইরূপ কেবল ভয়ঙ্কর সাহসই লক্ষ্মীর মন অপহরণ করিয়া থাকে। (ষ) বর্ষাকাল যেমন বিদ্যুৎ প্রকাশ করে, লক্ষ্মীও তেমন লোকের অতি অল্পকালস্থায়ীই গৃহ-নগরের শোভা প্রদর্শন করে। (স) কোন দুষ্ট পিশাচী যেমন আপনার শরীরে বহুপুরুষ পরিমিত উচ্চতা দেখাইয়া দুর্ব্বল ব্যক্তিকে ভয়ে উন্মত্ত করে, লক্ষ্মীও তেমন

(१) हिडम्बेव।

(घ)। सरस्वतीपरिगृहीतमीर्ष्ययेव नालिङ्गति जनम्, (ङ) गुणवन्तमपवित्रमिव न स्पृशति, उदारसत्त्वममङ्गलमिव न बहु मन्यते, सुजनमनिमित्तमिव न पश्यति (१) अभिजातमहिमिव लङ्घयति, शूरं कण्टकमिव परिहरति, दातारं दुःस्वप्नमिव ( ) न स्मरति, विनीतं पातकिनमिव नोपसर्पति, मनस्विनमुन्मत्तमिवोपहसति (३) (च)। परस्परविरुद्धमिन्द्रजालमिव दर्शयन्ती प्रकटयति जगति (४) निजं चरितम् (क)। तथाहि, सततम (५) उष्माणमारोपयन्त्यपि (६) जाड्यमुपजनयति (ख)। उन्नतिमादधानापि नीचस्वभावतामाविष्करोति (ग)। तोयराशिसम्भवापि

(ङ) सरेति। सरस्वतीपरिगृहीतं विद्यावन्तमित्यर्थः जनम् ईर्ष्ययेव नालिङ्गति नाश्रयति सपत्न्यन्तराश्लिष्टं पतिं सपत्न्यन्तरवदिति भावः। अतएवात्र काव्ये च सपत्नीव्यवहारसमारोपात् समासोक्तिरलङ्कारो गुणीभूततया सङ्कीर्यते।

(च) गुणेति। गुणवन्तं जनम् अपवित्रं चण्डालादि जनमिव न स्पृशति। इत्थं द्वितीयान्तपदानां जनमिति प्रस्तुतविशेष्यपदानुषङ्गात् मनस्विनमुन्मत्तमिव हसतीत्यन्तं यावत् प्रत्येकवाक्ये उपमालङ्कारः। उदारसत्त्वं महाशयं जनम्। न बहु मन्यते नाद्रियते। अनिमित्तम् उल्कापातादिदुर्लक्षणम्। अभिजातं सत्कुलोत्पन्नं जनम् अहिं सर्पमिव लङ्घयति अतिक्रम्य याति। परिहरति परित्यजति। विनीतं विनयोपेतम्। मनस्विनं प्रशस्तचित्तम्।

(क) परेति। अपि चेति चार्थः। इन्द्रजालं दर्शयन्तीव जगति परस्परविरुद्धं परस्परविरुद्धधर्मान्वितमित्यर्थः निजं चरितं प्रकटयतीत्यन्वयः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ख) लक्ष्मीचरिते परस्परविरुद्धधर्मवत्त्वं प्रदर्शयितुमाह तथाहीति। इयं लक्ष्मीः उष्माणमारोपयन्त्यपि तापं प्रवर्त्तयन्त्यपि जाड्यं शैत्यमुपजनयतीति विरोधः उष्माणं धनमदं जाड्यं सदसद्विवेकहीनत्वमिति तत्समाधानम्। अत्र विरोधाभासोऽलङ्कारः।

(ग) उन्नतिमिति। उन्नतिमादधानापि ऊर्द्धगतिं कुर्वाणापि नीचस्वभावतां नीचप्रवृत्तित्वम् आविष्करोतीति विरोधः उन्नतिमवस्थोत्कर्षम् नीचस्वभावताम् औद्धत्यजननेन कुत्सितप्रवृत्तित्वमिति तत्परिहारः। विरोधाभासः।

অনেক লোককে উন্নতি দেখাইয়া অল্পবুদ্ধি লোককে তাহার আশায় উন্মত্ত করে। (ঙ) সরস্বতীকর্তৃক পরিগৃহীত লোককে (বিদ্বান ব্যক্তিকে) ঈর্ষ্যাবশতই যেন আলিঙ্গন করে না (চ) গুণবান ব্যক্তিকে অপবিত্রের ন্যায় স্পর্শ করে না মহাশয় ব্যক্তিকে অমঙ্গলের ন্যায় আদর করে না, সজ্জনকে দুর্লক্ষণের ন্যায় দেখে না সৎকুলজাত ব্যক্তিকে সর্পের ন্যায় লঙ্ঘন করিয়া যায় বীরকে কণ্টকের ন্যায় পরিত্যাগ করে দাতাকে দুঃস্বপ্নের ন্যায় স্মরণও করে না পাতকীর ন্যায় বিনয়ীর নিকটেও যায় না আর মনস্বী ব্যক্তিকে উন্মত্তের ন্যায় উপহাস করে (ক) এবং এই লক্ষ্মী ইন্দ্রজাল দেখাইতে দেখাইতেই যেন এই জগতে পরস্পর বিরুদ্ধ ধর্ম্ম সমন্বিত নিজের চরিত্র প্রকাশ করে। (খ) দেখ—সর্ব্বদা উত্তাপ জন্মাইয়াও শীতলতা জন্মায় (ধনের অহঙ্কার জন্মায় অথ চ মানুষকে সদসদ্বিবেচনাহীন করে)। (গ) উপরে উঠাইয়াও নীচে রাখে (অবস্থার উন্নতি জন্মায় অথ চ মানুষকে কুৎসিতস্বভাব করে)। (ঘ) সমুদ্র হইতে

(१) क्वचित् न पश्यतीति नञ् न दृश्यते। (२) दुःस्वप्नम्। (३) हसति।
(४) क्वचित् जगतीति नास्ति। (५) सन्ततम्। (६) उपजनयन्त्यपि।

तृष्णां संवर्द्धयति (घ)। ईश्वरतां दधानापि अशिवप्रकृतित्वमातनोति (ङ)। बलोपचयमाहरन्त्यपि लघिमानमापादयति (च)। अमृतसहोदरापि कटु-(१) विपाका (छ)। विग्रहवत्यपि अप्रत्यक्षदर्शना (ज)। पुरुषोत्तमरतापि खलजन-प्रिया (झ)। रेणुमयीव स्वच्छमपि कलुषीकरोति (ञ)। यथा यथा चेयं चपला दीप्यते तथा तथा दीपशिखेव कज्जलमलिनमेव कर्म्म केवलमुद्वमति (ट)। तथाहि,

(घ) तोयेति। तोयराशेः समुद्रात् सम्भवतीति साऽपि तृष्णां पिपासां संवर्द्धयतीति विरोधः तृष्णां धनाकाङ्क्षामिति समाधानम्। विरोधाभासः।

(ङ) ईश्वरतामिति। ईश्वरतां दधानापि शिवत्वं धारयन्त्यपि अशिवप्रकृतित्वं शिवभिन्नत्वभावत्वमातनोतीति विरोधः ईश्वरतां दधानापि लोकानां प्रभुत्वमापादयन्त्यपि अशिवप्रकृतित्वं परोत्पीड़नहेतुतया अमङ्गलस्वभावत्वमातनोतीति परिहारः। विरोधाभासः।

(च) बलेति। बलोपचयमाहरन्त्यपि दैहिकशक्तिवृद्धिं कुर्वत्यपि लघिमानं भाररहित्यमापादयतीति दैहिकबलवृद्धौ देहे भारावश्यम्भावाद्विरोधः बलोपचयं सैन्यवृद्धिं लघिमानं कापण्यमिति समाधानम्। विरोधाभासः।

(छ) अमृतेति। अमृतसहोदरापि एकसमुद्रादुत्पन्नत्वादिति भावः कटुविपाका रसनायां कटुरसेति अमृतसहोदराया मधुररसत्वसम्भवे कटुरसत्वाद्विरोधः कटुः परिणामुत्पीड़कतया दुःखकरः विपाकः परिणामो यस्याः सेति परिहारः। विरोधाभासः।

(ज) विग्रहेति। विग्रहवत्यपि मूर्त्तिमत्यपि अप्रत्यक्षं दर्शनं ज्ञानं यस्याः सा चाक्षुषप्रत्यक्षायोग्येत्यर्थः इति विरोधः विग्रहवत्यपि प्रयोजकतया युद्धवत्यपि परस्परयुद्धसङ्घटनकारिण्यपि देवत्वाद्देवाप्रत्यक्षदर्शनेति समाधानम्। विरोधाभासः।

(झ) पुरुषेति। पुरुषोत्तमरतापि उत्कृष्टपुरुषासक्तापि खलजनप्रियेति विरोधः पुरुषोत्तमरतापि नारायणासक्तापि खलजनप्रिया प्रायेण खलजनाश्रयत्वादिति परिहारः। विरोधाभासः।

(ञ) रेण्विति। रेणुमयीव धूलिनिष्पन्नेव स्वच्छं निर्म्मलमपि कलुषीकरोति मलिनं विदधातीति विरोधः स्वच्छमपि रागाभिमानादिहीनमपि जनं कलुषीकरोति रागाभिमानादिमन्तं करोतीति समाधानम्। अत्र धूलिनिष्पन्नत्वोत्प्रेक्षणात् क्रियोत्प्रेक्षा विरोधाभासश्चानयोरङ्गाङ्गिभावेन सङ्करः।

(ट) यथेति। अपि चेति चार्थः। चपला चञ्चला विद्युदिति च ध्वन्यते दीप्यते प्रकाशते आविर्भवति।

জন্মিয়াও পিপাসা বৃদ্ধি করে (ধনের আকাঙ্ক্ষা বৃদ্ধি করে)। (ঙ) শিব হইয়াও অশিবস্বভাব বিস্তার করে (লোকের প্রভুত্ব জন্মায় অথচ স্বভাব সাধারণের পক্ষে অমঙ্গলজনক করে)। (চ) শরীরের বল বৃদ্ধি করিয়াও লঘুতা জন্মায় (সৈন্য বৃদ্ধি করে অথচ কৃপণস্বভাব করে)। (ছ) অমৃতের সহোদরা হইয়াও জিহ্বাতে কটুরস বলিয়া অনুভূত হয়, (পরিণামে দুঃখ জন্মায়)। (জ) মূর্ত্তিমতী হইয়াও চাক্ষুষপ্রত্যক্ষের যোগ্য নহে (ধনিগণের মধ্যে পরস্পর কলহ জন্মায় এবং দৃষ্টিগোচর হয় না)। (ঝ) উৎকৃষ্ট পুরুষ আসক্ত হইয়াও খল ব্যক্তিকে ভালবাসে, (নারায়ণে আসক্ত থাকে এবং প্রায়শ দুর্জ্জনকেই ভালবাসে)। (ঞ) ধূলিময়ী হইয়াই যেন নির্ম্মল বস্তুকেও মলিন করে (অভিমানাদি দোষ বিহীন ব্যক্তিকে অভিমানাদি দোষে দোষী

(१) कटुक।

ইয়ং সম্বর্দ্ধনবারিধারা তৃষ্ণাবিষবল্লীনাম্, ব্যাধগীতিরিন্দ্রিয়মৃগাণাম্, পরামর্শধূম লেখা সচ্চরিতচিত্রাণাম্, বিভ্রমশয্যা মোহদীর্ঘনিদ্রাণাম্, নিবাসজীর্ণবলভী ধনমদপিশাচিকানাম্, তিমিরোদ্গতিঃ শাস্ত্রদৃষ্টীনাম্, পুরঃপতাকা (১) সর্ব্বাবিনয়ানাম্, উৎপত্তিনিম্নগা ক্রোধাবেগগ্রাহাণাম্, আপানভূমি (২) বিষয়মধূনাম্, সঙ্গীতশালা ভ্রূবিকারনাট্যানাম্, আবাসদরী দোষাশীবিষাণাম্, উৎসারণবেত্রলতা সৎপুরুষব্যবহারাণাম, (৩) অকালপ্রাবৃট্ গুণকলহংসকানাম্, বিসর্পণভূমি লোকাপবাদবিস্ফোটকানাম্, (৪) প্রস্তাবনা কপটনাটকস্য, কদলিকা কামকরিণঃ,

কজ্জলবন্মলিনমেব পরদ্রি সাপরভূমিহরণাদিকং পাপমেব ন তু প্রায়েণ শোভনমিত্যবধেয়ম্ কর্ম্ম কেবলমুদ্বমতি আবিষ্করোতি। পক্ষে কজ্জলমিব মলিনং কর্ম্ম। অত্র পূর্ণোপমালঙ্কারঃ।

(ঠ) মলিনকর্ম্মোদ্গমনং প্রতিপাদয়ন্নাহ তথাহীতি। ইয়ং লক্ষ্মীঃ তৃষ্ণা বিষয়স্পৃহা এব বিষবল্ল্যঃ অনর্থহেতুত্বাদ্গরললতাস্তাসাং সম্বর্দ্ধনবারিধারা বৃদ্ধিহেতুভূতনিরবচ্ছিন্নজলসেকঃ সত্যামস্যাং তৃষ্ণাবৃদ্ধিদর্শনাদিতি ভাবঃ। অত্র তৃষ্ণাসু বিষবল্লীত্বারোপো লক্ষ্ম্যাং বারিধারাত্বারোপে নিমিত্তমিতি পরম্পরিতরূপকমলঙ্কারঃ। ইত্থং রাহুজিহ্বা ধর্ম্মেন্দুমণ্ডলস্য ইত্যন্তং যাবৎ প্রায়েণ প্রত্যেকবাক্যে এবায়মলঙ্কারঃ সমুন্নেয়ঃ। ইন্দ্রিয়াণ্যেব মৃগাস্তেষাং ব্যাধগীতিঃ আকৃষ্য নষ্টীকরণাৎ। ব্যাধা হি গীতেন হরিণানাকৃষ্য নিঘ্নন্তীতি প্রসিদ্ধম্। সচ্চরিতান্যেব চিত্রাণি আলেখ্যানি তেষাং পরামর্শধূমলেখা আবরণধূমরাজিঃ সত্যামস্যাং প্রায়েণ লোকানাং সচ্চরিতাবরণাৎ। মোহঃ কার্য্যাকার্য্যবিবেকাভাবঃ এব দীর্ঘনিদ্রাস্তাসাং বিভ্রমশয্যা বিলাসশয্যা সত্যামস্যাং মোহবৃদ্ধিদর্শনাৎ। ধনমদা এব পিশাচিকাস্তাসাং নিবাসায় অবস্থানায় জীর্ণবলভী পুরাতনচন্দ্রশালা পিশাচানাং জীর্ণমন্দিরমিব ধনমদানাং লক্ষ্ম্যামেবাবাসাৎ। শাস্ত্রাণ্যেব দৃষ্টয়ো নেত্রাণি তাসাং তিমিরোদ্গতিঃ নেত্ররোগবিশেষস্যোৎপত্তিঃ অনয়ৈব শাস্ত্রদৃষ্টিব্যাঘাতাৎ। সর্ব্বাবিনয়ানাং সর্ব্ববিধদুরাচারাণাং পুরঃপতাকা সম্মুখস্থবৈজয়ন্তী পতাকাদর্শনেন রথাগমনানুমানবৎ লক্ষ্মীদর্শনেন সর্ব্ববিধদুরাচরণানুমানাৎ। অত্র তু নিরঙ্গকেবলরূপকমলঙ্কারঃ। ক্রোধাবেগা এব গ্রাহাঃ জলজন্তুবিশেষাস্তেষাম্ উৎপত্তিনিম্নগা উদ্ভবনদী অস্যাং সত্যামেব বাহুল্যেন ক্রোধাবেগোৎপত্তিদর্শনাৎ। বিষয়াঃ স্রক্চন্দনাদিভোগ্যপদার্থা এব মধূনি অনর্থহেতুত্বেন মদ্যানি তেষাম্ আপানভূমিঃ পানস্থানম্ অস্যামেব বাহুল্যেন ভোগদর্শনাৎ। ভ্রূবিকারা ভ্রূকুট্য এব নাট্যানি অভিনয়াস্তেষাং সঙ্গীতশালা অস্যামেব বাহুল্যেন ভ্রূকুটীকরণাৎ। দোষাঃ কামাদয় এব আশীবিষাঃ প্রাণনাশকত্বাৎ বিষধরাস্তেষাম্ আবাসদরী অবস্থানগুহা অস্যামেব কামাদ্যবস্থানাৎ। সৎপুরুষাণাং

করে)। (ট) আর, যেমন যেমন এই চঞ্চলা লক্ষ্মী আবির্ভূত হয়, তেমন তেমনই দীপশিখার ন্যায় কজ্জলবৎ মলিন পাপকার্য্যই কেবল প্রকাশ করিতে থাকে। (ঠ) দেখ—এই লক্ষ্মী, বিষয়লালসারূপ বিষলতাসমূহের বৃদ্ধিজনক জলধারা, ইন্দ্রিয়রূপ হরিণগণের পক্ষে ব্যাধের গান, সচ্চরিত্ররূপ চিত্রসমূহের আবরণকারী ধূমশ্রেণী, মোহরূপ দীর্ঘনিদ্রার পক্ষে কোমল শয্যা, ধনাভিমানরূপ পিশাচীদিগের বাসের জন্য পুরাতন চিলেকোঠা, শাস্ত্ররূপ নয়নের পক্ষে তিমিরনামক নেত্ররোগ, সর্ব্বপ্রকার দুরাচারের সম্মুখে পতাকা, ক্রোধবেগরূপ জলজন্তুগণের উৎপত্তির নদী, স্রক্ চন্দন বনিতাপ্রভৃতি ভোগ্যপদার্থরূপ মদ্যের পানভূমি, ভ্রূকুটীরূপ অভিনয়ের রঙ্গালয়, কামাদিদোষরূপ বিষধরসর্পগণের বাসের গুহা, সৎপুরুষগণের সদ্ব্যবহার দূর

(১) পুরঃসরপতাকা। (২) আবাসভূমি। (৩) ব্যবহারাণাম্। (৪) বিস্ফোটানাম্।

वध्यशाला साधुभावस्य, राहुजिह्वा धर्मेन्दुमण्डलस्य (ठ)। न हि त पश्यामि। यो ह्यपरिचितयानया (१) न निर्भरमुपगूढ, यो वा न विप्रलब्ध (ड)। नियतमियमालेख्यगतापि चलति, पुस्तमय्यपि (२) इन्द्रजालमाचरति, उत्कीर्णापि विप्रलभते, श्रुताप्यभिसन्धत्ते, चिन्तितापि वञ्चयति (ढ)। एव विधयापि चानया दुराचारया कथमपि दैववशेन परिगृहीता ( ) विक्लवा भवन्ति (४) राजान, सर्वा-

व्यवहारा सदशाचरणानि तेषाम् उत्सारणाय दूरीकरणाय वेत्रलता उत्पन्नायामस्या सत्पुरुषाणामपि पूर्व सदयाचरणविलोपात्। अत्रापि निरङ्ग केवलरूपकमलङ्कार । गुणा दयादाक्षिण्यादय एव कलहसकास्तेषाम् अकालप्रावृट असमयागतवर्षाकाल वर्षाकाले हसान मिव सत्यामस्यां गुणानामदर्शनात्। लोकापवादा एव विस्फोटका व्रणविशेषास्तेषां विसर्पणभूमि प्रसारणक्षेत्रम् सत्यामस्यां लोकापवादविस्तारदर्शनात्। कपट कूटव्यवहार एव नाटक तस्य प्रस्तावना आमुखम् सत्यां सत्यामेव कपटाचरणारम्भात्। काम एव करी हस्ती तस्य कदलिका रम्भा अस्यामेव कामस्य स्वैरविचरणात्। साधुभावस्य सौजन्यस्य वध्यशाला हत्यागृहम् अस्यामेव साधुता विलोपात्। अत्रापि निरङ्ग केवलरूपकमलङ्कार । तथा धर्मो धर्माचरणमेव इन्दुमण्डल निर्मलतया चन्द्रबिम्ब तस्य राहुजिह्वा अनय व धर्माचरणग्रासात्।

(ड) नहीति। त जनम्। न निर्भरमुपगूढो न गाढमालिङ्गित सम्पत्तिलिप्सया निरतिशयचेष्टानन्तर तथा न सश्लिष्ट इत्यर्थ । न विप्रलब्ध परित्यज्य न प्रतारित । अत्र लक्ष्म्यां कार्य्य याविश्वासिन्या कुलटाया व्यवहारसमारोपात् समासोक्तिरलङ्कार । तथा यच्छब्दान्वितवाक्ययो परपाठात् न्यक्कारो ह्ययमेव मे यदरय इत्यादिवद्वाक्यगतविधेयविमर्शदोष स तु नहि त पश्यामि इति वाक्यस्य परापाठेनैव समाधेय ।

(ढ) सर्वप्रकारेणैव लक्ष्म्या प्रतारणा प्रदर्शयन्नाह नियतमिति। नियत निश्चितम्। आलेख्यगतापि चित्रापि सापि चलति गृहान्तर याति। अत्र मूर्तविम्बचित्रितप्रतिबिम्बयोरभेदाविवक्षणात् दैवलाञ्च समाधानाद्विरोधाभासोऽलङ्कार । एवमन्यत्रापि। पुस्तमय्यपि मृत्काष्ठादि निर्म्मितपुत्तलिकारूपापि इन्द्रजालमाचरति कुहक प्रदर्शयति आकस्मिकविलोपादिव्यवहारात्। मृदा वा दारुणा वाथ वस्त्रेणाप्यथ चर्म्मणा। लोहरत्नै कृत वापि पुस्तमित्यभिधीयते॥ इत्यमरटीकायां भरत । उत्कीर्णापि पाषाण निखन्य निर्म्मितापि विप्रलभते सहसा परित्यज्य प्रतारयति। श्रुतमस्यास्तीति श्रुता अर्श आदित्वात् दुर्व्यवहारनिषेधकशास्त्रज्ञानशालिन्यपीत्यर्थ अभिसन्धत्ते

করিবার বেত্রযষ্টি, দয়াদাক্ষিণ্যপ্রভৃতি গুণরূপ কলহংসগণের অসময়োপস্থিত বর্ষাকাল লোকনিন্দারূপ বিস্ফোটের বিস্তার পাইবার ক্ষেত্র কপটাচরণরূপ নাটকের প্রস্তাবনা, কন্দর্পরূপ হস্তীর কদলীবন সৌজন্যের হত্যাগৃহ এবং ধর্মাচরণরূপ চন্দ্রমণ্ডলের পক্ষে রাহুর জিহ্বা এই লক্ষ্মী। (ড) আমি সেরূপ লোক দেখিতে পাই না যে এই অপরিচিতা লক্ষ্মী কর্তৃক গাঢ় আলিঙ্গিত হয় নাই অথবা যে প্রতারিত হয় নাই। (ঢ) এই লক্ষ্মী চিত্রপটে চিত্রিত হইলেও নিশ্চয়ই চলিয়া যায় মৃত্তিকা কিংবা কাষ্ঠাদিদ্বারা পুত্তলিকা করিয়া রাখিলেও সে ইন্দ্রজালের ন্যায় ব্যবহার করে পাষাণ হইতে ক্ষোদিত করিয়া রাখিলেও সে প্রতারণা করে, শাস্ত্রাভিজ্ঞ হইলেও কুব্যবহার করে এবং ভক্তিসহকারে ধ্যান করিলেও বঞ্চনা করে। (ণ) এইরূপ দুরাচারিণী লক্ষ্মী অদৃষ্টবশতঃ কোন প্রকারে আসিয়া আশ্রয় করিলেই রাজগণ

(१) क्वचित् अनयति नास्ति। (२) पुस्तकमय्यपि। (३) दैवपरिगृहीता। (४) विक्लवीभवन्ति।

বিনয়াধিষ্ঠানতাঞ্চ গচ্ছন্তি (ঘ)। তথাহি, অভিষেকসময় এব চৈষাং (১) মঙ্গল-কলসজলৈরিব প্রক্ষাল্যতে দাক্ষিণ্যম্, অগ্নিকার্য্যধূমেনেব মলিনীক্রিয়তে (২) হৃদয়ম্, পুরোহিত-কুশাগ্র-সম্মার্জ্জনীভিরিবাপনীয়তে (৩) ক্ষান্তি উষ্ণীষপট্ট (৪) বন্ধনেবাবচ্ছাদ্যতে (৫) জরাগমনস্মরণম্, আতপত্রমণ্ডলেনেবাপবার্য্যতে (৬) পরলোকদর্শনম্, চামরপবনৈরিবাপহ্রিয়তে সত্যবাদিতা, বেত্রদণ্ডৈরিবোৎসার্য্যন্তে গুণা, জয়শব্দকলকলৈরিব ( ) তিরস্ক্রিয়ন্তে সাধুবাদা, ধ্বজপটপল্লবৈরিব পরামৃশ্যতে যশ (ঙ)। কেচিৎ (৮) শ্রম-বশ-শিথিল (৯) শকুনি-গল পুট-(১০) চপলাভি খদ্যোতোন্মেষ-

দুষ্যবহরতি অবিশ্বাসাবরণাৎ। চিন্তিতাপি লাভাশয়া ভক্ত্যা ধ্যাতাপি বঞ্চয়তি আগমনসম্ভাবনাং প্রদর্শ্য অনাগমনাৎ।

(ঘ) এবমিতি। পরিগৃহীতা আশ্রিতা। বিক্লবা সমাকুলা। সর্ব্বেষাম্ অবিনয়ানাং দুরাচারাণাম্ অধিষ্ঠানতামাস্পদত্বম্। অত্র লক্ষ্ম্যা কাম্য ণ পিশাচীব্যবহারসমারোপাৎ সমাসোক্তিরলঙ্কার।

(ঙ) ব ক্তব্যম্ অবিনয়াধিষ্ঠানতাঞ্চোপপাদয়িতুমাহ তথাহীতি। এষাং রাজ্ঞাম্। দাক্ষিণ্যমৌদার্য্যম্। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার। ধ্বজপটপল্লবৈরিব পরামৃশ্যতে যশ ইত্যন্ত যাবৎ প্রত্যেকবাক্যে অয়মেবালঙ্কার। অগ্নিকার্য্যস্য অভিষেকাঙ্গহোমস্য ধূমেন। পুরোহিতানাং কুশাগ্রাণ্যেব সম্মার্জ্জন্যস্তাভি ক্ষান্তি ক্ষমাগুণ অপনীয়তে ধূল্যাদিবৎ দূরীক্রিয়ত ইব প্রায়েণ অসহিষ্ণুতাধীনত্বা। অত্র নিরঙ্গকেবলরূপকসঙ্কীর্ণা ক্রিয়োৎপ্রেক্ষালঙ্কার। উষ্ণীষপট্টবন্ধেন উষ্ণীষীভূতক্ষৌমবসনবন্ধনেন জরাগমনস্মরণ বার্দ্ধক্য মে ভবিষ্যতীতি চিন্তা অবচ্ছাদ্যতে মস্তকবৎ আব্রিয়ত ইব প্রায়েণ বৃদ্ধানামুপহাসাৎ। আতপত্রমণ্ডলেন মণ্ডলীকৃতচ্ছত্রেণ পরলোকদর্শন জন্মান্তরদৃষ্টি অপবার্য্যতে অন্যজনদর্শনবৎ নিবার্য্যতে প্রায়েণ জন্মান্তরভাবিদুঃখজ্ঞানাভাবেন পাপাচরণাৎ। চামরাণাং পবনৈ বায়ুভি সত্যবাদিতা অপহ্রিয়তে ধূলিবদ্দূরীক্রিয়ত ইব প্রায়েণ মিথ্যাবাদিত্বাৎ। বেত্রদণ্ডৈ গুণা দয়াদয় উৎসার্য্যন্তে ইতরলোকবৎ দূরীক্রিয়ন্ত ইব প্রায়েণ তেষাং নির্গুণত্বাৎ। সাধুবাদা সৌজন্যপ্রশংসাবাক্যানি তিরস্ক্রিয়ন্তে সাধারণালাপবৎ আচ্ছাদ্যন্ত ইব প্রায়েণ তৎ সৌজন্যপ্রশংসাবিমুখত্বাৎ। ধ্বজপটপল্লবৈ উত্তোলিতকেতুদণ্ডলগ্নবিস্তৃতপতাকাভি যশ পরামৃশ্যতে আর্দ্রবস্ত্রেণেব প্রোঞ্ছ্যত ইব তদবধি নানাদুরাচারবশাৎ প্রায়শ তেষাং যশোবিলোপাৎ।

একেবারে আকুল হইয়া পড়েন এবং সকল প্রকার দুরাচারপরায়ণ হইয়া উঠেন। ( ) দেখ—অভিষেকের সময়েই রাজাদের সে ঔদার্য্য যেন মাঙ্গলিক কলসের জলে প্রক্ষালন করিয়া ফেলে, হোমের ধূমেই যেন হৃদয় মলিন করে, পুরোহিতগণের কুশাগ্ররূপ সম্মার্জ্জনীই (ঝাটা, পিছা) যেন ক্ষমাগুণ অপসারিত করিয়া দেয়, পট্টবসনের উষ্ণীষবন্ধনই যেন 'আমিও বৃদ্ধ হইব' এই চিন্তাকে আচ্ছাদন করে, প্রসারিত ছত্রই যেন জন্মান্তরের প্রতি দৃষ্টিপাতকে নিবারণ করে, চামরের বায়ুই যেন সত্যবাদিতা অপহরণ করে, বেত্রযষ্টিই যেন দয়াপ্রভৃতি গুণসমূহকে সরাইয়া দেয়, জয়ধ্বনির কোলাহলই যেন সৌজন্যের প্রশংসাকে নীচে ফেলিয়া রাখে এবং ধ্বজের বিস্তৃত পতাকাই যেন যশ মুছিয়া ফেলে। (থ) পরিশ্রমবশত পক্ষীর শিথিল গল

(১) এষাম্ এব চৈতেষাম্। (২) মলিনীভবতি। (৩) অপক্রিয়তে। (৪) পট। (৫) অবাচ্ছাদ্যতে। (৬) অপবার্য্যতে অপধার্য্যতে। (৭) কলকলরবৈ। (৮) কশ্চিৎ। (৯) শ্রমশিথিল। (১০) পক্ষপুট।

मुहूर्तं मनोहराभिर्मनस्विजनगर्हिताभि सम्पद्भि प्रलोभ्यमाना, (थ) धन लव-लाभावलेपविस्मृत जन्मानोऽनेकदोषोपचितेन दुष्टासृजेव (१) रागावेशेन बाध्य-माना, (द) विविधविषय ग्रास (२) लालसै पञ्चभिरप्यनेक-सहस्रसङ्ख्यै रिवेन्द्रियै रायास्यमाना, (ध) प्रकृतिचञ्चलतया लब्धप्रसरेण (३) एकेनापि सहस्रतामिवोप-गतेन मनसा आकुलीक्रियमाणा विह्वलतामुपयान्ति (न)। ग्रहैरिव गृह्यन्ते, भूतै-रिवाभिभूयन्ते, मन्त्रै रिवावेश्यन्ते, सत्त्वैरिवावष्टभ्यन्ते, वायुनेव विडम्ब्यन्ते, पिशाचैरिव ग्रस्यन्ते, (प) मदनशरैर्मर्माहता इव (४) मुखभङ्गसहस्राणि कुर्वते,

(थ) केचिदिति। केचित राजान विह्वलतामुपयान्तीति वक्ष्यमाणेनास्यान्वय। श्रमवशेन दूरोड्डयनादि परिश्रमहेतुना शिथिल यत् शकुनेमयूरादिपक्षिण गलपुट गलदेशस्तद्वत चपलाभिश्चञ्चलाभि खद्योतोन्मेषवत ज्योतिरिङ्गणप्रकाशवत मुहूर्त मनोहराभि क्षणविनश्वरत्वात किञ्चित कालमात्रमनोज्ञाभि अतएव मनस्विजन गर्हिताभिर्ज्ञानिलोकनिन्दिताभि सम्पद्भिर्धनादिसम्पत्तिभि प्रलोभ्यमाना लोभं नीयमाना। अत्र लुप्तोपमाद्वय पदार्थहेतुक काव्यलिङ्गञ्चेत्येषां परस्परनिरपेक्षतया संसृष्टि।

(द) धनेति। धनलवस्य अत्यल्पधनस्यापि लाभावलेपेन प्राप्त्यहङ्कारेण विस्मृतानि जन्मानि यैस्ते अत्यल्पस्यापि धनस्याभिमानेन के वयम् केषां पुत्रा कीदृशावस्था अभूमेति अरवबोधा इत्यर्थ। इत्येकपुत्रपरमेतत्। अनेकै दोषै कामक्रोधादिभि वातपित्तकफविकारैश्च उपचितो वृद्धिं गतस्तेन दुष्टासृजेव दूषितरक्तेनेव रागावेशेन विषयासक्तिसम्प्राप्त्या बाध्यमाना अधीरीक्रियमाणा पीड्यमानाश्च। अत्र पूर्णोपमालङ्कार।

(ध) विविधेति। विविधानां विषयाणां शब्दस्पर्शादीनां ग्रासेषु ग्रहणेषु लालसैरभिलाषुकै पञ्चभिरपि स्तुत पञ्चसङ्ख्यकैरपि विषयबाहुल्यादनेकसहस्रसंख्यै रिव स्थितै इन्द्रियै श्रोत्रत्वगादिज्ञानेन्द्रियै वाक्पाण्यादिकर्मेन्द्रियैश्च आयास्यमाना स्वस्वविषयेषु सततगाढप्रवृत्तनया परिक्लिश्यमाना। अत्र गुणोत्प्रेक्षालङ्कार।

(न) प्रकृतीति। तथा प्रकृत्या स्वभावेनैव चञ्चलतया हेतुना लब्धप्रसरेण प्राप्तावकाशेन नानाविषयधावितेन अतएव एकेनापि सता सहस्रतां सहस्रसङ्ख्यकत्वम् उपगतेनेव विषयबाहुल्यात् प्राप्तेनेव मनसा आकुलीक्रियमाणा सन्त विह्वलतामवस्थामुपयान्ति। अत्र क्रियोत्प्रेक्षालङ्कार।

(प) तदा च तेषामवस्थामाह ग्रहैरित्यादि। ग्रहै पूतनादिभि गृह्यन्ते धियन्त इव। अयो अयो विविध भावमङ्गीकरणादिति भाव। अत्र क्रियोत्प्रेक्षालङ्कार। अन्यत्राप्ययमेव भावोऽलङ्कारश्च वेदितव्य। भूत इ व

দেশের ন্যায় চঞ্চল এবং জোনাকি পোকার প্রকাশের ন্যায় অল্পকালমাত্রই দেখিতে সুন্দর, সুতরাং জ্ঞানী লোকের নিন্দার ভাজন সম্পদদ্বারা কোন কোন রাজা লুব্ধ হইয়া পড়েন, (দ) সামান্য ধনলাভের অহঙ্কারে স্ব স্ব জন্মবৃত্তান্ত বিস্মৃত হইয়া যান, দূষিত রক্তের ন্যায় নানাবিধ দোষে বৃদ্ধিপ্রাপ্ত বিষয়াসক্তিতে যাতনা ভোগ করিতে থাকেন (ধ) শব্দ স্পর্শপ্রভৃতি নানাবিধ বিষয় গ্রহণ করিতে অভিলাষী এবং পঞ্চসংখ্যক হইলেও বিষয়বাহুল্যনিবন্ধন যেন অনেক সহস্র সংখ্যাপ্রাপ্ত—এইরূপ ইন্দ্রিয়গণদ্বারা কষ্ট ভোগ করিতে থাকেন, (ন) মন স্বভাবতই চঞ্চল বলিয়া নানাবিষয়ে ধাবিত হইতে থাকে, সুতরাং এক হইলেও যেন সহস্র সংখ্যা প্রাপ্ত হয়, অতএব সে মনদ্বারাও রাজারা আকুলিত হইয়া একেবারে বিহ্বল হইয়া পড়েন। (প) তখন

(१) दोषासृजेव। (२) विषयरसग्रास। (३) प्रसारेण। (४) अभिहता इव।

धनोष्मणा पच्यमाना इव विचेष्टन्ते, गाढप्रहाराहता इव (१) अङ्गानि न धारयन्ति, (फ) कुलीरा इव तिर्य्यक् परिभ्रमन्ति, (ब) अधर्म्मभग्नगतयः पङ्गव इव परेण सञ्चार्य्यन्ते, (भ) मृषावाद-विष विपाक-(२) सञ्जात मुखरोगा इवातिकृच्छ्रेण जल्पन्ति, (म) सप्तच्छद-तरव इव कुसुम-रजोविकारैरासन्नवर्त्तिनां (३) शिरःशूलमुत्पादयन्ति, (य) आसन्नमृत्यव इव बन्धुजनम् (४) अपि नाभिजानन्ति, (र) उत्कुपित-(५)

योनिविशेषैः । मन्त्र एव शिक्षान्त्रिकैर्वा आवेश्यन्ते केचिज्जनरात्माधीनतायां प्रवेश्यन्त इव वशीक्रियन्त इवेत्यर्थः । सर्वैः भुजङ्गादिहिंस्रजन्तुभिः अवष्टभ्यन्ते बलादाक्रम्यन्त इव कदाचिद्यातनाप्रत्यायनादिति भावः । वायुना वायुरोगेण विक्षिप्यन्ते विचाल्यन्त इव । तथा पिशाचैः च व्यन्ते अवलम्ब्यन्त इव ।

(फ) अवस्थान्तराण्याह मदनेत्यादि । मुखभङ्गसहस्राणि नानाविधा मुखभङ्गीरित्यर्थः । अत्रापि प्रत्येक वाक्ये क्रियोत्प्रेक्षालङ्कारः । धनोष्मणा धनाहङ्कारजनितसन्तापेन । विचेष्टन्ते निस्पन्दविस्पन्दनादीनि विचेष्टाः कुर्वन्ति आड्गतधानावदिति भावः । गाढप्रहारेण लगुडादिभिस्त्रीव्राघातेन आहता इव । न धारयन्ति स्वयं न वहन्ति ।

(ब) कुलीरा इति । कुलीरा कर्कटा इव वक्रं विचरन्ति सर्वैरेव सार्द्धं कौटिल्यमाचरन्तीत्यर्थः । अत्र पूर्णोपमालङ्कारः ।

(भ) अधर्म्मेति । अधर्म्मेण पापेन भग्ना विनष्टा गतिः कर्त्तव्यमार्गे गमनं येषां ते अन्यत्र तु पापेन विनष्टगमनशक्तयः अतएव पद्भ्यां न गच्छन्तीति पङ्गवस्त इव परेण अमात्यादिना सञ्चार्य्यन्ते उपदेशादिना कर्त्तव्यमार्गे परिचाल्यन्ते अन्यत्र तु परेण बन्धुजनेन सञ्चार्य्यन्ते हस्तावलम्बनादिना गमनं कार्य्यन्ते । अत्र पदार्थहेतुक काव्यलिङ्गसङ्कीर्णा पूर्णोपमा ।

(म) मृषेति । मृषावादा मिथ्योक्तय एव विषाणि तेषां विपाकेन विकारेण सञ्जातो मुखरोगो येषां ते तादृशा इव सन्तः अतिकृच्छ्रेण नितान्तकष्टेन जल्पन्ति प्रलपन्ति । प्रायेणाभिमानवशात्तूष्णीमेव तिष्ठन्ति यदि कदाचित् प्रियत्वातिशयेन वदन्ति तदपि प्रलापप्रायमेवेति भावः । अत्र निरङ्गकेवलरूपकसङ्कीर्णा क्रियोत्प्रेक्षालङ्कारः ।

(य) सप्तेति । सप्तच्छदतरवः सप्तपर्णवृक्षा इव कुसुमानि नेत्ररोगाः अवशात्तूष्णीकभ्रूभङ्गीविशेषा एव रजोविकारा रजोगुणपरिणामास्तैः आसन्नवर्त्तिनां जनानां शिरःशूलं तज्जन्यदुःखमिव दुःखम् उत्पादयन्ति अन्यत्र तु कुसुमरजसां पुष्पपरागाणां विकारैस्तत्सम्पर्कजनितवायुप्रकोपैरित्यर्थः शिरःशूलं मस्तकवेदनाम् । सप्तपर्णकुसुमपरागस्याघ्रातिशयेन शिरोरोगो जायत इति वैद्यशास्त्रे प्रसिद्धम् । पूर्णोपमा । कुसुमं स्त्रीरजोनेत्ररोगयोः फले पुष्पे चेति हेमचन्द्रः ।

পূতনাপ্রভৃতি কোন কোন গ্রহ আসিয়া যেন তাঁহাদিগকে আশ্রয় করে ভূতেই যেন পাইয়া বসে, কেহ কেহ মন্ত্রশক্তিতেই যেন তাঁহাদিগকে বশ করিয়া ফেলে হিংস্রজন্তুতেই যেন আশ্রয় করে বায়ুরোগেই যেন বিচলিত করিতে থাকে, এমন কি, পিশাচেই যেন পাইয়া বসে। (ফ) আবার তাঁহারাও মদনশরে মর্ম্মাহত হইয়াই যেন বিবিধ মুখভঙ্গী করিতে থাকেন, ধনের অহঙ্কারাগ্নিতে পচ্যমান হইয়াই যেন নানাবিধ ভাব-ভঙ্গী প্রকাশ করেন (ব) কর্কটের ন্যায় রাজারা সর্ব্বদাই বক্রভাবে চলিয়া থাকেন, (ভ) পাপে, রাজাদের কর্ত্তব্য পথে চলিবার শক্তি

(१) अभिहता इव । (२) मृषावादविपाक । (३) पार्श्ववर्त्तिनां । (४) पुरःस्थितं बन्धुजनम् ।
(५) उत्कम्पित ।

श्ववेन च दत्तकुङ्कुमस्थासकेनेवाकृष्यमाणेनेन्द्रायुधेन सनाथीकृतपुरोभाग शनै शनै प्रथममेव शातक्रतवीमाशामभिप्रतस्थे (ध)।

अथ चलित गजघटा-कम्पित धवलातपत्र-(१) वनम, अनेककल्लोल परम्परा पतित-चन्द्रमण्डल-प्रतिबिम्ब-सहस्रम, महाप्रलय जलधि-जलमिव प्लावितमहीतलम्, अद्भुतोद्भूतकलकलम, अखिल ( ) सञ्चचाल बलम (न)।

उच्चलितस्य चास्य स्वभवनादुपपादितप्रस्थानमङ्गलो दुकूल (३) वासा सित-कुसुमाङ्गरागो महता बलसमूहेन नरेन्द्रवृन्दैश्चानुगम्यमान (४) धृतधवलातपत्रो

मालानां जालेन समूहेन शबल विचित्र शिरो यस्य तेन। अतएव सलग्न सन्ध्याया आतपो रागो यत्र तेनेति सिन्दूररञ्जितकुम्भसादृश्यम्। तिर्य्यक आवर्ज्जित पतित श्वेतो गङ्गाप्रवाहो यस्मात्तेनेति पृष्ठवद्धध्वजगतपताका सादृश्यम्। तथा तारागणेन नक्षत्रसमूहेन दन्तुरित विषमीकृत शिखरशिलातल प्रस्थपाषाणो यस्य तेनेति सितकुसुममालासादृश्यम्। ईदृशेन मेरुगिरिणेव सुमेरुपर्वतेनेव गन्धमादनेन तदाख्येन पूर्ववर्णितेन गन्धहस्तिना अनुगम्यमानश्चन्द्रापीड़। अत्र पदार्थ हेतुककाव्यलिङ्गसङ्कीर्ण श्रौत्युपमालङ्कार।

(ध) कनकेति। कनकालङ्कारप्रभाणां प्रतानेन बाहुल्येन कल्माषिता विचित्रीकृता अवयवा अङ्गानि यस्य तेन अतएव दत्ता गात्रेषु अपिता कुङ्कुमस्थासका कुङ्कुमद्रवकृतहस्तबिम्बचित्राणि यस्मिन् तेनेव सता। अत्र क्रियोत्प्रेक्षालङ्कार। आकृष्यमाणेन केनाप्याकृष्य नीयमानेन इन्द्रायुधेन पूर्ववर्णितेन तदाख्यघोटकेन सनाथीकृत स्वसयुक्तीकृत पुरोभाग सम्मुखदेशो यस्य स चन्द्रापीड़। शतक्रतोरिन्द्रस्येयमिति शातक्रतवीतामाशां पूर्वां दिशम्।

(न) अथेति। अथ चन्द्रापीडप्रस्थानानन्तरम् चलितासु गजघटासु कम्पित धवलातपत्राणाम् आरोहिगण श्वेतच्छत्राणां वन समूहो यस्मिन् तत् अतएव अनेकासु कल्लोलपरम्परासु महातरङ्गश्रेणीषु पतित चन्द्रमण्डल प्रतिबिम्बानां सहस्र समूहो यस्य तादृशम् महाप्रलयकालीनजलधिजलमिव प्लावितमहीतलम् अद्भुत आश्चर्य्य उद्भूत उत्पन्न कलकल कोलाहलो यत्र तत् अखिल बल चन्द्रापीडसैन्य सञ्चचाल तत्पश्चादिति शेष। अत्रोपमालङ्कार।

মালা ভূতলে দুলিতেছিল এব শ্বেতবর্ণ পুষ্পমালাসমূহে তাহার মস্তক বিচিত্র করা হইয়াছিল, সুতরা সন্ধ্যার রক্তিমা পতিত হইলে গঙ্গার শ্বেতবর্ণ প্রবাহ নীচের দিকে পড়িত লাগিলে এব উপরের প্রস্তরখণ্ড নক্ষত্রসমূহ অসমানতল হইলে সুমেরুপর্ব্বতের ন্যায় সেই গন্ধমাদনকে দেখা যাইতেছিল। (ধ) কোন ভৃত্য চন্দ্রাপীড়ের অগ্রে অগ্রে সেই ইন্দ্রায়ুধকে আকর্ষণ করিয়া নিয়া যাইতেছিল সুবর্ণময় অলঙ্কারের প্রভারাশিতে তাহার সকল অঙ্গ বিচিত্র করিতেছিল, তাহাতে বোধ হইতেছিল যেন কুঙ্কুমরসদ্বারা তাহার অঙ্গে হাতের পাঞ্জা চিত্র করিয়া দেওয়া হইয়াছে—এইভাবে চন্দ্রাপীড় প্রথমেই পূর্ব্বদিক্ অভিমুখে প্রস্থান করিলেন।

(ন) তিনি প্রস্থান করিলে সকল সৈন্য অদ্ভুত কোলাহল করিতে করিতে ভূতল প্লাবিত করিয়া তাঁহার পশ্চাৎ পশ্চাৎ যাইতে লাগিল, হস্তিসমূহ চলিতে লাগিলে আরোহিগণের শ্বেতবর্ণ ছত্রসমূহ কম্পিত হইতে লাগিল তাহাতে বহুতর বড় বড় তরঙ্গশ্রেণীর উপরে চন্দ্রমণ্ডলের প্রতিবিম্বসমূহ পতিত হইলে প্রলয়কালীন সমুদ্রজলপ্রবাহের ন্যায় সেই সৈন্যগণকে দেখা যাইতে লাগিল।

(१) कम्पितातपत्र। (२) सकल। (३) धवलदुकूल। (४) अनुरज्यमान।

দ্বিতীয় ইব যুবরাজস্ত্বরিতপদসঞ্চারিণ্যা করিণ্যা বৈশম্পায়নঃ সমীপমাজগাম (১) (প)। আগত্য চ রজনিকর ইব (২) রবেরাসন্নবর্ত্তী বভূব (ফ)।

অনন্তরমিতশ্চেতশ্চ 'নির্গতো যুবরাজ' ইতি সমাকর্ণ্য প্রধাবতা বলানাং ভরেণ চলিত কুলশৈল কীলিত-জলধি জল-তরঙ্গ গতেব তৎক্ষণমাচকম্পে মেদিনী (ব)। সম্মুখাগতৈরন্যৈশ্চান্যৈশ্চ প্রণমদ্ভির্ভূমিপালৈঃ, অংশুলতা জাল জটিল চূলিকানাং মণিমুকুটানামালোকেনোন্মিষিতবহুলরোচিষাঞ্চ পত্রভঙ্গিনীনাং (৩) কেয়ূরমণ্ডলীনাং প্রভাসন্তানেন ক্বচিদ্বিকীর্য্যমাণ চাষ পক্ষ ক্ষোদা ইব, ক্বচিদুৎপতিত-শিখি কুল চলচ্চন্দ্রক শত-শারা ইব, ক্বচিদকাল জলধর-তড়িত্তরলা ইব, ক্বচিৎ সকল্পতরু

(প) উজ্জ্বলিতস্যেতি। কিঞ্চ উজ্জ্বলিতস্য প্রস্থিতস্য অস্য চন্দ্রাপীড়স্য সমীপমাজগামেতি সম্বন্ধঃ। উপপাদিতঃ বর্জয়িকাষ্ঠীমাদিনা ঋত্বিগ্ভিঃ সম্পাদিতঃ প্রস্থানমঙ্গলং যস্য সঃ দুকূলবাসা পরিহিতসূক্ষ্মবস্ত্রঃ সিতকুসুমৈরঙ্গরাগী গাত্রশোভা যস্য সঃ। ধৃতং কেনচিদ্ভৃত্যেন মস্তকোপরি গৃহীতং ধবলাতপত্রং যস্য সঃ বৈশম্পায়নঃ দ্বিতীয়ো যুবরাজ ইব তাদৃশাড়ম্বরশালিত্বাদিতি ভাবঃ। করিণ্যা তদারোহণেনেত্যর্থঃ। অত্র দ্রব্যোৎপ্রেক্ষালঙ্কারঃ।

(ফ) আগত্যেতি। আগত্য চ বৈশম্পায়নঃ রবেঃ সূর্য্যস্য রজনিকরশ্চন্দ্র ইব আসন্নবর্ত্তী চন্দ্রাপীড়স্য পার্শ্ববর্ত্তী বভূব। শুক্লপক্ষপ্রথমভাগে দিবসাবসানে নভসি চন্দ্রো রবেরাসন্নবর্ত্তী ভবতীতি দ্রষ্টব্যম্। অত্রোপমালঙ্কারঃ। তথা রজনিকরো রবেরাসন্নবর্ত্তী ভবতি বৈশম্পায়নস্তু বভূবেতি কালভেদাদ্ভগ্নপ্রক্রমতাদোষঃ স চ রজনিকরো যথা ভবতি তথা বভূবেতি পাঠেন সমাধেয়ঃ।

(ব) অনেতি। ইতশ্চেতশ্চ ইতস্ততঃ ইত্যর্থঃ যুবরাজো নির্গত ইতি বাক্যং সমাকর্ণ্য প্রধাবতাং তৎপশ্চাদিতি শেষঃ বলানাং সৈন্যানাং ভরেণ মেদিনী পৃথিবী চলিতাঃ পক্ষবত্তয়া গমনশীলাঃ কুলপর্ব্বতাঃ প্রাগুক্তমহেন্দ্রাদিভিঃ কীলিতো বিদ্ধো যো জলধিস্তস্য জলতরঙ্গগতেব সতী তৎক্ষণমাচকম্পে। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। চলিতগজঘটাসাম্যদ্যোতনায় চলিতকুলশৈলকীলিতেতি বিশেষণম্।

(ভ) সম্মুখেতি। পরস্পরং সম্মুখাগতৈঃ অন্যৈশ্চ অন্যৈশ্চ ভিন্নভিন্নৈঃ প্রণমদ্ভির্ভূমিপালৈর্হেতুভিঃ। অংশুলতানাং কিরণশ্রেণীনাং জালেন জটিলা বিষমা চূলিকাশ্চূড়া প্রান্তদেশা যেষাং তেষাং মণিমুকুটানামালোকেন তথা উন্মি

(প) বৈশম্পায়ন দ্বিতীয় যুবরাজের ন্যায় একটা দ্রুতগামিনী হস্তিনীতে আরোহণ করিয়া নিজবাটী হইতে প্রস্থিত চন্দ্রাপীড়ের নিকটে আগমন করিলেন, পুরোহিতগণ তাঁহার যাত্রা-কালীন মঙ্গলকার্য্য সম্পাদন করিয়াছিলেন তাঁহার পরিধানে সূক্ষ্ম বস্ত্র ছিল শ্বেতবর্ণ পুষ্পে শরীরের শোভা করা হইয়াছিল এবং কোন ভৃত্য মস্তকের উপরে শ্বেতবর্ণ ছত্র ধারণ করিয়াছিল, বিশাল সৈন্যশ্রেণী এবং সামন্তরাজগণ তাহারও পশ্চাৎ পশ্চাৎ আসিতেছিলেন। (ফ) চন্দ্র যেমন সূর্য্যের পার্শ্ববর্ত্তী হন সেইরূপ বৈশম্পায়ন আসিয়া চন্দ্রাপীড়ের পার্শ্ববর্ত্তী হইলেন।

(ব) তদনন্তর যুবরাজ বাটী হইতে নির্গত হইয়াছেন ইতস্তত এই কথা শুনিয়া সৈন্যগণ তাঁহার পশ্চাৎ পশ্চাৎ ধাবিত হইতে লাগিল, তাহাদের পদভরে পৃথিবী গমনশীল কুলপর্ব্বতগণদ্বারা গ্রথিত-সমুদ্র জলে স্থিত হইয়াই যেন কাঁপিতে লাগিল। (ভ) সামন্তরাজগণ পরস্পর পরস্পরের সম্মুখে উপস্থিত হইয়া নমস্কার করিতে লাগিলেন, তখন তাঁহাদের মণিময়

(১) সমাজগাম। (২) শশিকর ইব। (৩) পত্রভঙ্গীনাং।

পল্লবা इव, क्वचित् सशतक्रतुचापा इव, (१) क्वचित् सबालातपा इवाक्रियन्त (२) दश दिशः (भ)। धवलान्यपि विविध मणि निकर कल्माषितत्सर्पिभिश्चूडामणि मरीचिभिर्मायूराणीवाराजन्त (३) राज्ञामातपत्राणि (म)।

क्षणेन च तुरगमयमिव महीतलम्, कुञ्जरमयमिव दिक्चक्रवालम्, आतपत्र-मण्डलमयमिवान्तरिक्षम्, ध्वजवनमयमिवाम्बरतलम्, इभमदगन्धमय इव समीरण, भूपालमयीव प्रजासृष्टिः, आभरणांशुमयीव दृष्टि, (४) किरीटमय इवातप, चामरमय इव दिवस, (५) जयशब्दमयमिव त्रिभुवनमभवत (य)। सर्वतश्च

पितानि उद्गतानि बहुलानि याची पि दीप्तयो यासां तासां पत्रभङ्गिनीनां पत्रलताविशिष्टानां केयूरमण्डलीनां प्रभा सन्तानेन दीप्तिप्रवाहेण च करणं क्वचिद्दिश विकीर्यमाणा विक्षिप्यमाणा चाषाणां पक्षाणां पत्रश्रीदा पतत्रवर्णानि यासु ता इव दश दिश अक्रियन्त इत्यन्वय । एवमन्यत्र । अत्र क्रियोत्प्रेक्षालङ्कार । क्वचित् उत्पतितस्य उड्डीनस्य शिखिकुलस्य मयूरसमूहस्य चलता चन्द्रकशतेन मेचकसमूहेन पुच्छगतविचित्रचिह्नसमूहेनेति यावत् शारा विचित्रा इव। अत्र गुणोत्प्रेक्षालङ्कार । क्वचित् अकाले यो जलधरो मेघस्तस्य तडिता विद्युता तरलाश्चपला इव। अत्रापि गुणोत्प्रेक्षालङ्कार । क्वचित् कल्पतरुपल्लवै सह विद्यमाना इति सकल्पतरुपल्लवा इव। गुणोत्प्रेक्षा। क्वचित् शतक्रतुचापैरिन्द्रधनुर्भि सहेति सशतक्रतुचापा इव। गुणोत्प्रेक्षा। क्वचिच्च बालातपेन नवोदितरविकिरणेन सहेति सबालातपा इव दश दिश अक्रियन्त। अत्रापि गुणोत्प्रेक्षालङ्कार ।

(म) धवलानीति। धवलान्यपि राज्ञामातपत्राणि छत्राणि विविधानां मणीनां तत्किरणानामित्यर्थ निकरेण समूहेन कल्माष विचित्रै र्नानावर्णै उत्सर्पिभि ऊर्ध्वप्रसारिभि च डामणिमरीचिभि करणै मायूराणि मयूरपिच्छ निर्म्मितानीव। अत्र क्रियोत्प्रेक्षालङ्कार ।

(य) क्षणेनेति। दिक्चक्रवाल दिक्समूह । ध्वजवनमयमिव केतुसमूहमयमिव। इभमदगन्धमय इव

মুকুটের প্রান্তভাগ কিরণজালে আলোকিত ছিল সেই আলোকে এবং নানাবিধ পত্রলতা বিশিষ্ট ও অত্যন্ত দীপ্তিশালী কেয়ূরসমূহের আলোকমালাতে কোন জায়গায় দশ দিকে সোণাচড়ার (পাখীর) পাখা চূর্ণ করিয়া যেন বিক্ষিপ্ত করা হইতেছে বলিয়া বোধ হইতেছিল কোন স্থানে উড্ডীন ময়ূরগণের চলনশীল পচ্ছচিত্রেই যেন দশ দিক্ বিচিত্র করিয়াছিল, কোন স্থানে অকাল মেঘের বিদ্যুতেই যেন দশ দিক্ চঞ্চল করিয়াছিল কোন স্থানে দশ দিক্ যেন কল্পতরুর পল্লবযুক্ত কোন স্থানে যেন ইন্দ্রধনুঃসমন্বিত এবং কোন স্থানে যেন নবোদিত সূর্য্যকিরণ সংযুক্ত করিয়াছিল। (ম) রাজগণের ছত্রসমূহ শ্বেত বর্ণ হইলেও সেগুলি নানাবিধ মণির কিরণসমূহে বিচিত্র হইয়া এবং ঊর্দ্ধগামী চূড়ামণির কিরণে যেন ময়ূরপুচ্ছনির্ম্মিতের ন্যায় বিরাজ করিতে লাগিল।

(য) ক্ষণকালমধ্যে ভূতল যেন ঘোটকময় হইয়া গেল, দিঙ্মণ্ডল যেন হস্তিময় হইয়া পড়ল আকাশ যেন ছত্রময় ও ধ্বজময় হইয়া উঠিল বায়ু যেন হস্তীর মদজল গন্ধময় হইল সকল লোকই যেন রাজময় বলিয়া বোধ হইতে লাগিল, দৃষ্টিপাত যেন অলঙ্কারের কিরণময় হইয়া

(१) सशतयज्ञचापा इव। (२) क्रियन्त। (३) राजन्ते अरज्यन्त। (४) द्रष्टि।
(५) किरीटमय इव दिवस अय ।

कुलपर्वताकारैः प्रचलद्भिर्मत्तवारणैः, उत्पातचन्द्रमण्डलनिभैश्च प्रेङ्खद्भिरातपत्रैः (१) संवर्त्तकाम्भोदगम्भीरभीमनादेन च ध्वनता दुन्दुभिना, तारकावर्षसदृशेन विसर्पता गजशीकरनिकरेण, धूमकेतुधूसरैश्चोल्लसद्भिरवनिरजोदण्डकैः, निर्घातपातपरुषगम्भीरघोषैश्च करिकण्ठगर्जितैः, क्षतजकणवर्षबभ्रुणा च भ्रमता मतङ्गजकुम्भसिन्दूररेणुना, सङ्क्षुभितजलधिजलकल्लोलचञ्चलाभिश्च विसर्पन्तीभिः (२) तुरङ्ग-(३) मालाभिः, अन्धकारितदिगन्तरेण चानवरतं क्षरता (४) गज-मदजल-धारा-(५) दुर्द्दिनेन, कलकलेन च भुवनान्तरव्यापिना महाप्रलयकाल इव सञ्जज्ञे (ख)।

हस्तिदानजलसौरभमय इव। दृष्टिदर्शनम् आभरणांशुमयी रत्नालङ्कारकिरणमयीव। अत्र विकारार्थे मयट्प्रत्ययात् विकारस्य च अन्यथारूपत्वेन गुणत्वात् सर्वत्र गुणोत्प्रेक्षालङ्कारः।

(ख) सर्वत इति। किञ्च कुलपर्वताकारैरित्यार्थोपमालङ्कारः। सर्वतः प्रचलद्भिर्मत्तवारणैर्मत्तहस्तिभिः। प्रलयसमये जगतामुत्पातसूचनार्थं यच्चन्द्रमण्डलसञ्चलनमिति द्योतनाय मुत्पातपदम्। अत्राप्यार्थोपमालङ्कारः। प्रेङ्खद्भिः सञ्चलद्भिः। संवर्त्तकाम्भोदवत् प्रलयकालीनमहामेघवत् गम्भीरो भीमो भयानकश्च नादो यस्य तेन। अत्र लुप्तोपमालङ्कारः। ध्वनता शब्दायमानेन। तारकावर्षसदृशेन नक्षत्रवृष्टितुल्येन अत्रार्थोपमा विसर्पता समन्तात् प्रसरता गजशीकरनिकरेण हस्तिशुण्डनिर्गतजलबिन्दुसमूहेन। धूमकेतुवद्धूसरैरिति लुप्तोपमा उल्लसद्भिरुत्तिष्ठद्भिः अवनिरजोदण्डकैः दण्डवल्लम्बमानधूलीश्रेणीभिः। निर्घातः पांशुज्वालरूपो वायुस्तस्य पातवत् परुषाः कर्कशा गम्भीराश्च घोषाः शब्दा येषां तैः। क्षतजकणवर्षवत् रक्तबिन्दुवृष्टिवत् बभ्रुणा पिङ्गलवर्णेनेति लुप्तोपमा मतङ्गजकुम्भसिन्दूररेणुना हस्तिकुम्भस्थितसिन्दूरकणेन। सङ्क्षुभिता उद्वेलिता ये जलधिजलकल्लोलास्तद्वच्चञ्चलाभिरिति लुप्तोपमा विसर्पन्तीभिः प्रचलन्तीभिः तुरङ्गमालाभिर्घोटकश्रेणीभिः। अन्धकारितानि सञ्जातान्धकाराणि दिगन्तराणि येन तेन गजमदजलधारादुर्द्दिनेन हस्तिदानजलधारावृष्ट्या। तथा भुवनान्तरव्यापिना कलकलेन सैन्यानां कोलाहलेन च कारणेन महाप्रलयकाल सञ्जज्ञे उत्पन्न इव तदाप्युक्तकुलपर्वतचलनाद्यवश्यम्भावादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः तेन च सर्वेषां विनाशो ध्वन्यत इत्यलङ्कारेण वस्तुध्वनिः।

উঠিল রৌদ্র যেন মুকুটময় হইয়া গেল দিনটা যেন চামরময় হইয়াছে বলিয়া বোধ হইতে লাগিল এবং ত্রিভুবন যেন জয় জয়শব্দময় হইয়া পড়িল (খ) এবং কুলপর্ব্বতের ন্যায় বৃহৎ আকার মত্তহস্তিগণ সকল দিক্ ব্যাপ্ত করিয়া যাইতে লাগিল উৎপাতিক চন্দ্রমণ্ডলের ন্যায় ছত্র সমূহ চলিতে লাগিল তাড্যমান দুন্দুভি, প্রলয়কালের মহামেঘের ন্যায় গম্ভীর ও ভয়ঙ্কর শব্দ করিতে লাগিল, হস্তিগণের শুণ্ড হইতে নক্ষত্রবৃষ্টির ন্যায় জলবিন্দুসমূহ পড়িতে লাগিল, ভূতল হইতে ধূমকেতুর ন্যায় ধূসরবর্ণ ধূলি উঠিতে লাগিল, হস্তিগণ নির্ঘাত বায়ুপতনের ন্যায় কর্কশ ও গম্ভীর শব্দে গর্জন করিতে লাগিল, হস্তিগণের কুম্ভস্থল হইতে রক্তবৃষ্টির ন্যায় সিন্দূরের রেণু উড়িতে লাগিল উদ্বেলিত সমুদ্রজলের মহাতরঙ্গের ন্যায় ঘোটকগণ চলিতেছিল, হস্তিগণের মদজলধারা সকল দিক্ অন্ধকার করিয়া অনবরত ক্ষরিত হইতেছিল এবং সৈন্যগণের কোলাহলে জগৎসংসার ব্যাপ্ত হইল—এই সকল কারণে সেই সময়ে যেন মহাপ্রলয়কাল উপস্থিত হইল।

(१) प्रतसितातपत्रैः। (२) प्रविसर्पन्तीभिः। (३) तुरङ्गम। (४) अनवरतक्षरता। (५) क्वचित् गजपद नास्ति।

বল বহল (১) কোলাহলভীতা ইব ধবল ধ্বজ-নিবহ নিরন্তরাবৃতা যযু ক্কাপি দশ দিশ (ল)। মলিনাবনি (২) রজ সংস্পর্শশঙ্কিতমিব সমদ গজ ঘটাব-চূল-সহস্র সচ্ছন্নমতিদূরমম্বরম (৩) অপসসার (ব)। প্রবল বেত্রিবেত্রলতা (৪) সমুৎসার্য্যমাণা ইব তুরগ-খুররজোধূসরম (৫) অর্ক কিরণা মুমুচু পুরোভাগম্ (শ)। ইভ কর শীকর নির্ব্বাপণ ত্রস্ত ইবাতপত্রচ্ছাদিতাতপো দিবসো ননাশ (ষ)। বল ভর (৬) জর্জরীকৃতা মদ কল করি চরণ শত-তাড়িতা (৭) দ্বিতীয়েব প্রয়াণভেরী ভৈরব ভূমৌ ররাস (স)। গুল্ফদঘ্নসে চ তুরঙ্গ মুখ বিনি সৃত সিত-

(ল) বলেতি। ধ বলৈ ধ্বজনিবহৈ নিরন্তর নিরবকাশ যথা তথা আবৃতা আচ্ছন্না দশ দিশ বলানা সৈন্যানা বহলেন বহুলেন কোলাহলেন ভীতা ইব সত্য ক্কাপি অনির্দ্দিষ্টস্থানে যযু অদৃশ্যতা গতা ইত্যর্থ। অত্র ক্রিয়োৎপ্রেক্ষা ধ্বজনিরন্তরাবরণাসম্বন্ধেঽপি তৎসম্বন্ধোক্তেরতিশয়োক্তি পদার্থহেতুক কাব্যলিঙ্গম্ তথা দিশ কার্য্যে ঘ কোলাহলভীতাপসৃতকুলকামিনীব্যবহারসমারোপাৎ সমাসোক্তিশ্চেত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্কর।

(ব) মলিনেতি। সমদানাং গজঘটানাং হস্তিসমূহানাম্ অবচূলসহস্রৈ পৃষ্ঠস্থধ্বজপতাকাসমূহৈঃ সচ্ছন্নম্ আচ্ছন্নম্ অম্বরমাকাশ কর্ত্ত মলিনানাম্ অবনিরজসাং ধূলীনাং সংস্পর্শাৎ শঙ্কিতমিব সৎ অতিদূরমপসসার তৎসম্বন্ধানাং দূর এব দৃশ্যতা যযাবিতি ভাব। অত্রাপি পূর্ব্ববদুৎপ্রেক্ষা পদার্থহেতুক কাব্যলিঙ্গম্ অতিশয়োক্তিশ্চ তথা অম্বরে স্ত্রীরজঃস্পর্শশঙ্কয়া অপসৃতজনব্যবহারসমারোপাৎ সমাসোক্তিশ্চেত্যেতেষাং পূর্ব্ববৎ সঙ্কর।

(শ) প্রবলেতি। অর্ককিরণা প্রবলস্য রাজনিয়োগাৎ পূর্ণপ্রভাবস্য বেত্রিণো বেত্রযষ্টিধারিণো রক্ষিজনস্য বেত্রলতয়া সমুৎসার্য্যমাণা অপসার্য্যমাণা ইব সন্ত তুরগখুররজোধূসর পুরোভাগ মুমুচুস্তত্যজু রাজপুরোগামিসাধারণজনবদিতি ভাব। অত্র ক্রিয়োৎপ্রেক্ষা পরিত্যাগ প্রতি তুরগখুররজোধূসরত্ব স্যার্থৌ হেতুরিতি পদার্থহেতুক কাব্যলিঙ্গ তথা কার্য্যে অর্ককরণেষু রাজপুরপরিত্যাগরূপসাধারণজনব্যবহারসমারোপাৎ সমাসোক্তিরিত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্কর।

(ষ) ইভেতি। আতপত্রৈ সচ্ছাদিত আতপো রবিকিরণো যত্র তাদৃশ স দিবস ইভানা হস্তিনা করশীকর শুণ্ডানিঃসৃতজলবিন্দুভিঃ নির্ব্বাপণম্ আত্মনো বিলয়স্তেন ত্রস্তো ভীত ইব সন ননাশ অদৃশ্যতা গত আতপত্রৈ রাবরণাদ্দিবালোকো নাসীদিতি ভাব। জলবিন্দুভিরগ্নেরিব দিবালোকস্য নির্ব্বাপণসম্ভাবনেতি বোধ্যম্। অত্র ক্রিয়োৎপ্রেক্ষা দিবসনাশ প্রতি আতপত্রাচ্ছাদন হেতুরিতি পদার্থহেতুক কাব্যলিঙ্গম্ তথা দিবসনাশাসম্বন্ধেঽপি তৎসম্বন্ধোক্তেরতিশয়োক্তিরিত্যেতেষামঙ্গাঙ্গিভাবেন সঙ্কর।

(ল) শ্বেতবর্ণ ধ্বজসমূহে ঘনভাবে আবৃত দশ দিক্ সৈন্যগণের অত্যন্ত কোলাহলে ভীত হইয়াই যেন কোথাও চলিয়া গেল (ব) আকাশতল মদমত্ত হস্তিগণের পৃষ্ঠবর্ত্তী পতাকাসমূহে আচ্ছন্ন হইয়া মলিন ধূলির সংস্পর্শের আশঙ্কায়ই যেন অতিদূরে সরিয়া গেল। (শ) সূর্য্যের কিরণসমূহ বেত্রযষ্টিধারী প্রবল রক্ষিপুরুষের বেত্রযষ্টিদ্বারা অপসারিত হইয়াই যেন অশ্বগণের খুরের ধূলিতে ধূসরবর্ণ সম্মুখভাগ পরিত্যাগ করিয়াছিল। (ষ) ছত্রসমূহে দিনের আলোক আবৃত হইয়াছিল সুতরাং সেই দিনটা হস্তিগণের শুণ্ড হইতে নির্গত জলবিন্দুসমূহে

(১) বহুলবল। (২) মলিনীকৃতমিব। (৩) অম্বরতলম্। (৪) প্রচলিতবেত্রলতা প্রচুরবেত্রলতা। (৫) ধূসরতাভীতা ইবার্ক ধূসরতাভীতার্ক। (৬) বহলবলভর। (৭) সঞ্চরণশতসন্তাড়িতা চরণশতখণ্ডিতা।

फेन पल्लविते (१) मदपयसि मदस्रुता करिणां प्रचस्खलु पदे पदे पदातय (छ)। हरिताल परिमलनिभेन चातिपटुना गजमदामोदेनानुलिप्तस्य सामजस्येवापययौ (२) निखिलान्यगन्धग्रहणसामर्थ्यं घ्राणेन्द्रियस्य (ज)।

क्रमेण च प्रसर्पतो बलस्य पुर प्रधावता जन कदम्बकाना कोलाहलेन, तार तरदीर्घेण च काहलाना निनादेन, खर रव मिश्रितेन च वाजिनां ह्रेषारवेण, (३) अनवरत कांस्यताल स्वन (४) सम्पृक्तेन च दन्तिनामाडम्बररवेण, ग्रैवेयककिङ्किणी

(ख) चलेति। भूमिभू तल चलाना सैन्याना भरेण जर्जरीकृता क्षुब्धा तथा मदकलानां मदमत्तानां करिणां चरणप्रतन पदसमूहेन ताडिता च सती द्वितीया प्रयाणभेरीव प्रस्थानदुन्दुभिरिव भैरव भयानक यथा तथा ररास दध्वान। अत्र द्रव्योत्प्रेक्षालङ्कार तथा शब्दकरण प्रति पूर्व विशेषणद्वयार्थौ हेतुरिति पदार्थ हेतुक काव्यलिङ्ग मानयोरङ्गाङ्गिभावेन सङ्कर ।

(छ) गुल्फेति। पदातय सैन्या पदे पदे प्रतिपदक्षेपम् गुल्फ यसे पादग्रन्थिपरिमिते। प्रमाणे द्वयसच् प्रत्यय । तुरङ्गाणा मुखेभ्यो विनिसृत सित शुभ्रै फेनै पल्लविते विस्तारित मदस्रुता मदजलस्राविणां करिणां मदपयसि दानजले प्रचस्खलु स्खलित्वा पतितवन्त । अत्र गुल्फद्वयसत्वाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति रलङ्कार ।

(ज) हरीति। हरितालस्य स्वनामख्यातधातुविशेषस्य परिमलनिभेन सौरभसदृशेन अतिपटुना नितान्त तीव्रेण च गजमदामोदेन हस्तिनां दानजलसौरभेण अनुलिप्तस्य सम्बद्धस्य व्याप्तस्य च सामजस्य तत्तत्करिण इव घ्राणेन्द्रियस्य जनगणनासिका । निखिलान्यगन्धग्रहणसामर्थ्यम् अपययौ विननाश गजमदामोदेन स्वस्वमदामोदेन च परिपूर्णत्वादिति भाव । अत्र लुप्तोपमातीतोपमयोरङ्गाङ्गिभावेन सङ्कर । सामजस्तु गजे पु स सामात्थे पुनरन्यवत्। इति मेदिनी।

(क) क्रमेणेति। प्रसर्पतो बलस्य गच्छत सैन्यस्य। जनकदम्बकानां लोकसमूहानाम्। तारतरदीर्घेण

আপনার নির্ব্বাণ হইয়া যাইবার ভয়েই যেন অদৃশ্য হইয়া গিয়াছিল। (খ) সৈন্যগণের পদভরে ভূতল জর্জরিত হইতেছিল আবার মদমত্ত হস্তিগণের চরণসমূহদ্বারাও তাড়িত হইতেছিল, এতবা সেই ভূতল দ্বিতীয় প্রয়াণদুন্দুভির ন্যায় ভয়ঙ্কর শব্দ করিতেছিল। (ছ) মদস্রবী হস্তিগণের মদজল ভূতলে পড়িতেছিল সেগুলি আবার অশ্বগণের মুখনিঃসৃত শুভ্র বর্ণ ফেনপুঞ্জে বিস্তৃত হইয়া গুলফ (গোড়ালি গুম্‌মুরিয়া) পরিমাণে উঁচু হইয়াছিল, সুতরাং পদাতিসৈন্যগণ প্রত্যেক পদক্ষেপে তাহাতে স্খলিত হইয়া পড়িয়া যাইতেছিল। (জ) হরিতালের গন্ধের তুল্য এবং অত্যন্ত তীব্র হস্তিগণের মদজলের গন্ধ যাহাদের নাসিকায় যাইতেছিল সেই সকল হস্তিগণের নাসিকার ন্যায় সৈন্যগণের নাসিকারও অন্য সকল গন্ধ গ্রহণ করিবার শক্তি লোপ পাইয়াছিল।

(ক) ক্রমে প্রচলিত সৈন্যগণের অগ্রগামী লোকসমূহের কোলাহল, জয়ঢাকের অতি বৃহৎ শব্দে খুরের শব্দমিশ্রিত অশ্বগণের হ্রেষারব হস্তিগণের অবিশ্রান্ত সঞ্চালিত বৃহৎ কর্ণশব্দের

(१) पल्लवे। (२) उपययौ समुपययौ समागम। (३) हेषारवेण। (४) स्वर।

ক্বণিতানুস্তেন (১) চ গতিবশাদ্বিষম-(২) বিরাবিণীনা ঘণ্টানা টঙ্কৃতেন, মঙ্গল-শঙ্খ-শব্দ সবদ্ধিত ধ্বনীনাঞ্চ প্রয়াণপটহানা নিনাদেন, মুহুর্মুহুরিতস্ততস্তাড্য-মানানাঞ্চ ডিণ্ডিমানা (৩) নি স্বনেন, জর্জরীকৃতশ্রবণপুটস্য মূর্চ্ছেবাভবজ্জনস্য (ক)।

শন শনৈস্ব বলসঙ্ক্ষোভজন্মা ক্ষিতেরনেকবর্ণতয়া ক্বচিজ্জীর্ণ শফর ক্রোড ধূম্র, ক্বচিৎ ক্রমেলক-সটা-সন্নিভ, ক্বচিৎ পরিণত রল্লক-রোম পল্লব-মলিন, ক্বচিৎ পত্রোর্ণ-(৪) তন্তুপাণ্ডর, ক্বচিজ্জরঠ-মৃণালদণ্ডধবল, ক্বচিজ্জরৎকপি কেশর (৫) কপিল, ক্বচিদ্বর (৬) বৃষভ রোমন্থ ফেন পিণ্ড-পাণ্ডুর, (খ) ত্রিপথগাপ্রবাহ

অত্যন্তোচ্চৈস্তরৈণ কাহলানাং বৃহদ্‌ঢক্কানাম্। অনবরতো য কণ তালয়োরখণ্ডতালপত্রবদ্বিশালয়ো কণ যো স্বন শব্দস্তেন সম্পৃক্ত সম্মিলিতস্তেন। আডম্বরবেণ বিশালেন হিতধ্বনিনা। গ্রৈবেয়কাণি কণ্ঠাভরণানি তেষু যা কিঙ্কিণ্য ক্ষুদ্রঘণ্টিকাস্তাসা ক্বণিত রবৈরনুস্যূত অনুগতস্তেন গতিবশাৎ বিষমবিরাবিণীনা ভয়ঙ্করশব্দকারিণীনা ঘণ্টানা কণ্ঠলম্বিতানামিত্যর্থ টঙ্কৃতেন ট ট শব্দেন। মঙ্গলশঙ্খশব্দৈ সবদ্ধিতা ধ্বনয়ো যেষা তেষাম্ প্রয়াণপটহানা যাত্রাঢক্কানাম্। জর্জরীকৃত প্রব্যথিত শ্রবণপুট যস্য তস্য জনস্য মূর্চ্ছা মোহ অভবদিব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার।

(খ) শনৈরিতি। বলসঙ্ক্ষোভাৎ সৈন্যস্য সমরম্ভচলনাজ্জন্ম যস্য স তাদৃশো রেণুঃতৎপপাতেতি বক্ষ্যমাণ ক্রিয়য়ান্বয়। ক্ষিতের্গমনাধারভূতভূতলস্য অনেকবর্ণ তয়া হেতুনা। ক্বচিৎ ধূসরমৃত্তিকাময়ভূমৌ জীর্ণ শফরস্য পরিণতপ্রোষ্ঠীমৎস্যবিশেষস্য ক্রোডবৎ ধূম্রো ধূম্রবর্ণ। ক্বচিৎ পিঙ্গলমৃত্তিকাময়ভূতলে ক্রমেলকস্য উষ্ট্রস্য সটা সন্নিভো জটাতুল্য। ক্বচিৎ কৃষ্ণমৃত্তিকাময়স্থানে পরিণতস্য বৃদ্ধস্য রল্লকস্য হরিণবিশেষস্য রোম্ণাং পল্লবৎ গুচ্ছবৎ মলিন কৃষ্ণবর্ণ। রল্লক কম্বলে মৃগে। তথৈব কম্বলমৃগে ইতি হেমচন্দ্র। ক্বচিৎ পাণ্ডুমৃন্ময়স্থানে বটলকুচাদিপত্রেষু ক্রিমিভিরূর্ণাযা কৃতত্বাৎ পত্রসম্বন্ধিনী ঊর্ণা অত্রেতি পত্রোর্ণম্ পরিষ্কৃতকৌষেয়বস্ত্র তস্য তন্তুবৎ পাণ্ডুর। পত্রোর্ণ ধৌতকৌষেয মিত্যমর। ক্বচিৎ শ্বেতমৃত্তিকাস্থানে জরঠ পরিণতো যো মৃণাল দণ্ডস্তদ্বৎ ধবল। ক্বচিৎ পিঙ্গলবর্ণ মৃত্তিকাময়স্থানান্তরে জরত স্থবিরস্য কপের্বানরস্য কেশরবৎ কপিল

সহিত বিশাল বৃংহিতধ্বনিতে এবং তাহাদের কণ্ঠালঙ্কারের অন্তর্গত কিঙ্কিণীর শব্দমিশ্রিত গমনবেগে ভয়ঙ্করশব্দকারী ঘণ্টাসমূহের ট ট শব্দে মাঙ্গলিক শঙ্খের শব্দে পরিবর্দ্ধিত প্রয়াণ ঢক্কার শব্দে এবং সকল দিকে অনবরত বাদ্যমান ডিণ্ডিমের (ডঙ্কার) ধ্বনিতে লোকের কর্ণযুগল জর্জরিত করিয়াছিল এবং তাহাতেই যেন তাহাদের মূর্চ্ছা উপস্থিত হইয়াছিল।

(খ) সৈন্যগণের সম্মর্দ্দবশতঃ ভূতল হইতে ধূলি উঠিতে লাগিল ভূতল নানাবর্ণ বলিয়া কোন স্থলে সেই ধূলিগুলি বৃদ্ধ প্রোষ্ঠীমৎস্যের ক্রোড়ের ন্যায় ধূসরবর্ণ কোন স্থলে উষ্ট্রের জটার ন্যায় পিঙ্গলবর্ণ কোন স্থলে বৃদ্ধ হরিণবিশেষের লোমগুচ্ছের ন্যায় কৃষ্ণবর্ণ, কোন স্থানে পরিষ্কৃত পট্টবস্ত্রের সূতার ন্যায় পাণ্ডুবর্ণ কোন স্থানে পরিণত মৃণালের ন্যায় শুভ্রবর্ণ কোন

(১) অনুগৃহীতেন। (২) গতিবশবিষম্। (৩) হির ডিণ্ডিমানাম্। (৪) ভত্রপত্রোর্ণা।
(৫) কেশ। (৬) বর।

ইব হরিচরণপ্রভবঃ, (গ) কুপিত ইব মুঞ্চন্ ক্ষমাম্, (ঘ) আরব্ধ-পরিহাস ইব রুন্ধন্ নয়নানি, (ঙ) তৃষিত ইব পিবন্ করি কর শীকর জলানি, (চ) পক্ষবানিবোৎপতন্ গগনতলম্, (ছ) অলিনিবহ ইব চুম্বন্ মদলেখাম্, (জ) মৃগপতিরিব রচয়ন্ করিকুম্ভস্থলীষু পদম্, (ঝ) উপাত্ত বিজয় ইব গৃহ্লন্ পতাকা, (১) (ঞ) জরাগম

পিঙ্গলবর্ণঃ। কচিৎ পাণ্ডুবর্ণঃ মৃত্তিকাময়স্থানান্তরে হরবৃষভস্য শিববৃষস্য রোমন্থেন চর্বিতচর্বণেন যঃ ফেনপিণ্ডস্তদ্বৎ পাণ্ডুরঃ। এষু প্রত্যেকবাক্যং এব লুপ্তোপমালঙ্কারঃ। অবিশিষ্টে হরবৃষভেতি বিশেষোপাদানাদবিশিষ্টে বিশেষাখ্যদোষঃ বরবৃষভেতি পাঠেঽপি স এব হরপদপরিত্যাগে তু তদ্দোষাভাবঃ।

(গ) ত্রিপথগেতি। ত্রিপথগায়া গঙ্গায়া প্রবাহ ইব হরেশ্চরণম্বানাং চরণেভ্যঃ পক্ষে হরের্নারায়ণস্য চরণাৎ প্রভবতীতি সঃ। অত্র পূর্ণোপমালঙ্কারঃ।

(ঘ) কুপিত ইতি। কুপিতো জন ইব ক্ষমাং ভূতলং সহিষ্ণুতাঞ্চ মুঞ্চন্ পরিত্যজন। একত্র অধীরত্বাদন্যত্র উড্ডয়নাদিতি ভাবঃ। পূর্ণোপমা।

(ঙ) আরব্ধেতি। আরব্ধঃ পরিহাসঃ কশ্চিৎ সহ নর্ম্ম যেন স তাদৃশো জন ইব নয়নানি লোকানাং চক্ষূংষি পরিহাস্যজনানাং নয়নানি চ রুন্ধন আবৃণ্বন্। করৈঃ নয়নাবরণং লৌকিকপরিহাসে প্রচলিতম্। পূর্ণোপমা।

(চ) তৃষিত ইতি। তৃষিতঃ পিপাসার্ত্তো জন ইব করিকরশীকরজলানি হস্তিশুণ্ডানি সৃতজলবিন্দূন্ পিবন্ কর্দ্দমীভূয় শোষয়ন্ পীতানি কুর্ব্বংশ্চ। পূর্ণোপমা।

(ছ) পক্ষীতি। পক্ষবান পক্ষীব গগনতলম্ উৎপতন্ উড্ডয়মানঃ। পূর্ণোপমা।

(জ) অলীতি। অলিনিবহো ভ্রমরসমূহ ইব মদলেখাং হস্তিনাং মদজলশ্রেণীং চুম্বন্ স্পৃশন্ তত্সংযোগং কুর্ব্বংশ্চ। পূর্ণোপমা।

(ঝ) মৃগেতি। মৃগপতিঃ সিংহ ইব করিকুম্ভস্থলীষু পদং প্রতিষ্ঠাং পদক্ষেপঞ্চ রচয়ন্ কুর্ব্বন্ একত্র পতনাদন্যত্রাক্রমণাদিতি ভাবঃ। পূর্ণোপমা।

(ঞ) উপাত্তেতি। উপাত্তবিজয়ো যুদ্ধে লব্ধজয়ো রাজেব পতাকাং বৈজয়ন্তীং গৃহ্ণন্ স্পৃশন্ অপহরংশ্চ। জেতা হি বিজিতশত্রূণাং পতাকা হরতীতি প্রসিদ্ধম্। পূর্ণোপমা।

স্থানে বৃদ্ধ বানরের কেশরের ন্যায় পিঙ্গলবর্ণ আবার কোন স্থানে শিবের বৃষের চর্বিতচর্বণের সময় উৎপন্ন ফেনপুঞ্জের ন্যায় পাণ্ডুবর্ণ ছিল। (গ) নারায়ণের চরণকমল হইতে গঙ্গাপ্রবাহের ন্যায় অশ্বগণের খুর হইতে সেই ধূলিসমূহ উৎপন্ন হইতেছিল, (ঘ) ক্রুদ্ধ লোক যেমন সহিষ্ণুতা ত্যাগ করে, সেই ধূলিসমূহও তেমন ভূতল ত্যাগ করিতেছিল, (ঙ) পরিহাস আরম্ভ করিয়া কোন লোক যেমন হস্তদ্বারা অপর লোকের নয়ন আচ্ছাদন করে সেই ধূলিসমূহও তেমন লোকের নয়ন আচ্ছাদন করিতেছিল, (চ) পিপাসাতুর লোক যেমন জল পান করে, সেই ধূলিসমূহও তেমন হস্তিগণের শুণ্ড হইতে নিঃসৃত জলবিন্দুসকল পান (শোষণ) করিতেছিল, (ছ) সেই ধূলিগুলি পক্ষীর ন্যায় আকাশে উঠিতেছিল, (জ) ভ্রমরসমূহের ন্যায় হস্তিগণের মদধারাতে সংযুক্ত হইতেছিল (ঝ) সিংহের ন্যায় হস্তিগণের কুম্ভস্থলে অবস্থান করিতেছিল, (ঞ) বিজয়ী রাজা যেমন যুদ্ধে বিজিত শত্রুর পতাকা

(১) পতাকাম্।

इव पाण्डुरीकुर्वन् शिरांसि, (ट) मुद्रयन्निव पक्ष्माग्रसंस्थितो दृष्टिम्, (ठ) आजिघ्रन्निव मकरन्द-मधु-बिन्दुपङ्कलग्न (१) कर्णोत्पलानि, (ड) मदकल करि-कर्ण-ताल ताडन त्रस्त इव विशन् (२) कर्ण-(३) शङ्खोदर-विवराणि, (ढ) पीयमान इवोन्मुखीभिरवनिपति मुकुटमणि-भङ्ग (४) मकरिकाभि, (ण) अभ्यर्च्य मान इव तुरग-मुख-विक्षेप विप्लुतै फेन-पल्लव कुसुम-स्तवकै, (त) अनुगम्यमान इव मत्त गज-घटा-कुम्भ-भित्ति-सम्भवेन धातुधूलिवलयेन, (थ) आलिङ्ग्यमान इव

(ट) जरेति। जरागमो वार्द्धक्यमिव लोकानां शिरांसि पाण्डुरीकुर्वन् एकत्र केशव्यापनादन्यत्र केश पाकादिति भाव। पूर्णोपमा।

(ठ) मुद्रयन्निति। पक्ष्मणां नयनलोम्नाम् अग्रेषु संस्थित सन् दृष्टिं मुद्रयन् सङ्कोचयन्निव तत्पतनशङ्कया लोकानां नयनोन्मीलनासम्भवादिति भाव। अत्र क्रियोत्प्रेक्षालङ्कार।

(ड) मकेति। मकरन्देषु तेषां कर्णोत्पलानामेव किञ्जल्केषु ये मधुबिन्दुपङ्का गाढरसबिन्दवस्तेषु लग्न संसक्त सन् लोकानां कर्णोत्पलानि आजिघ्रन् तद्गन्धं गृह्णन्निव। अत्र मकरन्दमधुशब्दयो पर्य्यायतया आपाततः पुनरुक्तताप्रतीतावपि परं मकरन्दशब्दस्य किञ्जल्कार्थ पर्य्यवसानात् पुनरुक्तवदाभासोऽलङ्कार क्रियोत्प्रेक्षया सङ्कीर्य्यते। मकरन्द (पु) किञ्जल्क क्ली इति शब्दकल्पद्रुम।

(ढ) मदेति। मदकलानां मदमत्तानां करिणां कर्णतालाभ्यां तालपत्रवद्विशालकर्णाभ्यां यत्ताडनं प्रहार तस्मात् त्रस्तो भीत इव सन् कर्णयो शङ्खानां ललाटास्थ्नां उदरविवराणि अभ्यन्तरच्छिद्राणि विशन् प्रविशन्। क्रियोत्प्रेक्षा।

(ण) पीयेति। उन्मुखीभि ऊर्द्ध्ववदनाभि अवनिपतीनां राज्ञां मुकुटेषु या मणिभङ्गमकरिका रत्नखण्ड निर्म्मिता मकराकाराशास्ताभि पीयमान इव तदभ्यन्तरगतत्वादिति भाव। क्रियोत्प्रेक्षा।

(त) अभ्यर्च्येति। तुरगाणां मुखविक्षेपेण विप्लुतै विक्षिप्तै फेनपल्लवै विस्तृतफेनै एव कुसुमस्तवकैः अभ्यर्च्यमान पूज्यमान इव तदुपरि पतनादिति भाव। अत्र निरङ्गरूपकसङ्कीर्णा क्रियोत्प्रेक्षा।

(थ) अन्विति। मत्तगजघटाया कुम्भभित्तौ सम्भवति प्रसरतीति तेन धातुधूलिवलयेन गैरिकादिरेणुमण्डलेन अनुगम्यमान इव तस्यापि धूल्यनुसरणादिति भाव। क्रियोत्प्रेक्षा।

সকল গ্রহণ করেন সেই ধূলিসমূহও তেমন রথের পতাকা সকল গ্রহণ (স্পর্শ) করিতেছিল (ট) বার্দ্ধক্যের ন্যায় লোকের মস্তক শুভ্রবর্ণ করিতেছিল (ঠ) লোকের নয়নলোমের অগ্রে থাকিয়া যেন তাহাদের দৃষ্টি সঙ্কুচিত করিতেছিল, (ড) কর্ণোৎপলের কেশরস্থিত গাঢ় মধুবিন্দুতে সংলগ্ন হইয়া যেন সেই কর্ণোৎপলগুলির আঘ্রাণ করিতেছিল (ঢ) মদমত্ত হস্তিগণের বৃহৎ কর্ণের তাড়নের ভয়েই যেন তাহাদের কর্ণও ললাটাস্থির ভিতরের ছিদ্রে প্রবেশ করিতেছিল (ণ) রাজগণের মুকুটে মণিখণ্ডদ্বারা যে মকরাকার অংশ নির্ম্মিত ছিল, সেইগুলি উন্মুখ হইয়া যেন সেই ধূলিসমূহকে পান করিতেছিল, (ত) অশ্বগণের মুখবিক্ষেপে ইতস্তত বিক্ষিপ্ত বিস্তৃত ফেনরূপ পুষ্পগুচ্ছদ্বারা সেই ধূলি যেন পূজিত হইতেছিল (থ) মদমত্ত হস্তিগণের কুম্ভস্থল হইতে নির্গত গৈরিকাদিধাতুর রেণুগুলি যেন

(१) किञ्जल्क। (२) आविशन्। (३) करिकर्ण। (४) मणिपत्रभङ्ग।

चलच्चामर कलापविधुतेन (१) पटवासपांशुना, (द) प्रोत्साह्यमान इव (२) नरपति-शेखर-सहस्र-परिच्युतैः कुसुमकेशररजोभिः, (ध) उत्पातराहुरिव दिवस-करमण्डलमकाण्ड एव पिबन्, (न) नृप प्रस्थान मङ्गल प्रतिसर वलय मालिकासु (३) गोरोचनाचूर्णायमानः, (प) क्रकच कृत चन्दन चोद धूसरो रेणुरुत्पपात (फ)। अपरिमाण बल-सङ्घट्ट-समुपचीयमानश्च शनैः शनैः संहरन्निव विश्व-मशेषम्, अकाल काल मेघ पटल-मेदुरो विस्तारमुपगन्तुमारेभे (ब)।

(द) आलिङ्ग्येति। चलतां स्पन्दमानानां राज्ञां समीपे भृत्यैरान्दोलितानामित्यर्थः चामराणां कलापेन समूहेन विधुतः सञ्चालितस्तेन पटवासपांशुना पिष्टातकरेणुना आलिङ्ग्यमान इव परस्परसंयोगादिति भावः। क्रियोत्प्रेक्षा।

(ध) प्रोत्साह्येति। नरपतीनां शेखरसहस्रात् शिरोवेष्टनमालासमूहात् परिच्युतैः कुसुमकेशररजोभिः पुष्पकिञ्जल्कपरागैः प्रोत्साह्यमानः प्रसर्त्तुं प्रकृष्टमुद्यमं नीयमान इव तेषामपि प्रसरणेन पुष्टबलित्वादिति भावः। क्रियोत्प्रेक्षा।

(न) उत्पातेति। उत्पातराहुः असमयोदयात् लोकानामुत्पातसूचको राहुः स इव अकाण्ड एव असमय एव दिवसकरमण्डलं सूर्य्यबिम्बं पिबन् आवृण्वन् यस्य। अत्र पूर्णोपमालङ्कारः।

(प) नृपेति। नृपाणां प्रस्थाने प्रयाणवेलायां ये मङ्गलप्रतिसराः माङ्गलिकहस्तसूत्राणि त एव वलयानि तेषां मालिकासु राजिषु गोरोचनाचूर्णायमानः गोरोचनारेणुवदाचरन् दृश्यमान इत्यर्थः। अत्र कण्ठगतोपमालङ्कारः।

(फ) क्रकचेति। क्रकचेन करपत्रेण कृतश्छेदनवेलायां विक्षिप्तो यश्चन्दनचोदः चन्दनतरुकणस्तद्वत् धूसरः रेणुर्भूतलधूलिः। अत्र लुप्तोपमालङ्कारः।

(ब) अपरेति। किञ्च अपरिमाणबलस्य असंख्यसैन्यस्य सङ्घट्टेन पदसम्मर्द्देन समुपचीयमानो वर्द्धमानः अतएव अशेषं विश्वं सर्वं जगत् शनैः शनैः संहरन्निव व्याप्त्या सङ्कोचयन्निव अकाले यत् कालं कृष्णवर्णं मेघपटलं तद्वन्मेदुरः सान्द्रः स रेणुरिति शेषः। अत्र क्रियोत्प्रेक्षालुप्तोपमयोरङ्गाङ्गिभावेन सङ्करः।

সেই ধূলিসমূহের অনুগমন করিতেছিল। (দ) হস্তীর কুম্ভস্থিত আবীরের রেণুগুলি আন্দোলিত চামরসমূহদ্বারা সঞ্চালিত হইয়া সেই ধূলিসমূহকে যেন আলিঙ্গন করিতেছিল। (ধ) রাজগণের মস্তকমালা হইতে নির্গত পুষ্পের রেণুসকল, সেই ধূলিগুলিকে যেন বিস্তৃত হইয়া উড়িবার জন্য উৎসাহিত করিতেছিল, (ন) সেই ধূলিসমূহ ঔৎপাতিক রাহুর ন্যায় অসময়েই সূর্য্যমণ্ডলকে গ্রাস করিতেছিল, (প) যাত্রা করিবার সময়ে রাজগণ হস্তে যে মাঙ্গলিক সূত্র বন্ধন করিয়াছিলেন, তাহার উপরে সেই ধূলিসমূহকে গোরোচনাচূর্ণের ন্যায় দেখা যাইতেছিল (ফ) এবং করাত দিয়া চন্দনগাছ কাটিবার সময় যে গুড়া বাহির হয় তাহার মত ধূসরবর্ণ সেই ধূলিগুলি উড়িতে লাগিল। (ব) অকালসম্ভূত কৃষ্ণবর্ণ মেঘসমূহের ন্যায় ঘনীভূত সেই ধূলিসমূহ, অসংখ্য সৈন্যগণের পদসংঘর্ষে বৃদ্ধি পাইয়া ধীরে ধীরে সমগ্র ভূমণ্ডলকেই যেন সঙ্কুচিত করিতে করিতে ক্রমে বিস্তার পাইতে আরম্ভ করিল।

(१) विधूतेन। (२) प्रसार्य्यमाणः प्रोत्सार्य्यमाणः। (३) प्रतिसरमालिकासु।

तेन च क्रमेणोपचीयमानबहलमूर्त्तिना दिग्विजयमङ्गलध्वजेन, रिपु-कुल कमल प्रलय-नीहारेण, राजलक्ष्मी-विलास-पटवासचूर्णेन, अहितातपत्र पुण्डरीक षण्ड-तुषारेण, (१) सेनाभर-(२) पीड़ित-महीतल मूर्च्छान्धकारेण, चलद्बल-(३) जलद काल कदम्ब-कुसुमोद्गमेन, दिवसकर कर (४) कमल वनोद्दलन द्विपयूथेन, गगन महीतल प्लावन प्रलय पयोधिपूरेण, त्रिभुवन-लक्ष्मी शिरोऽवगुण्ठन-पटेन, (भ) महावराह केशर-निकर कर्बुरेण, प्रलयानल धूम राजि मांसलेन (म)

(भ) तेनेति। किञ्च तेन रजसा त्रिभुवनमलङ्क्रियत इत्यन्वय। अत्र तृतीयैकवचनान्तपदानि रजसेति वक्ष्यमाणस्य विशेषणानि। उपचीयमाना वर्द्धमाना बहला विशाला मूर्त्ति र्यस्य तेन। अतएव दिग्विजयस्य मङ्गल ध्वजेन माङ्गलिककेतुदण्डस्वरूपेण तद्वदुत्थानादिति भाव। अत्र निरङ्ग केवलरूपकमलङ्कार। रिपुकुलान्येव कमलानि पद्मानि तेषां प्रलये विनाशे नीहारेण तुषारस्वरूपेण तुषारपातेन पद्मानामिव तद्धूलिपातेन रिपुकुलानां विनाशसूचनादिति भाव। अत्र परम्परितरूपकमलङ्कार। राजलक्ष्म्या विलासस्य वेशविन्यासस्य पटवासचूर्ण पिष्टातकरेणु फल्गुरिति यावत् तेन। वीरभोग्या हि राजलक्ष्मीर्वीरभरोत्थितेनैव रेणुनात्मानमलङ्करोतीति भाव। अत्र रजसि पटवासचूर्णत्वारोप शाब्द राजसम्पत्त्यां विलासिस्त्रीत्वारोपस्तु आर्थ इत्येकदेशविवर्त्ति रूपकमलङ्कार। निरङ्गरूपकमिति केचित्। अहितानां शत्रूणाम् आतपत्राणि छत्राण्येव पुण्डरीकाणि श्वेतपद्मानि तेषां षण्डस्य समूहस्य तुषारो हिम तेन। अत्र परम्परितरूपकमलङ्कार। रिपुकुलेत्यादिना विनाशकत्वेन हिमत्वारोप अत्र तु आवरकत्वेनेति भेद। सेनाया भरेण पीड़ितस्य महीतलस्य मूर्च्छा मोहस्तस्य अन्धकारस्तिमिर तेन। अत्र निरङ्ग केवलरूपकमलङ्कार। चलत् बल सैन्यमेव जलदकाल प्रावृट तस्य कदम्बकुसुमोद्गमेन विषमत्वात्। अत्र परम्परित रूपकमलङ्कार। दिवसकरस्य सूर्य्यस्य करा किरणा एव कमलवनानि तेषाम् उद्दलने विनाशने द्विपयूथ हस्ति समूहस्तेन। द्विपयूथ यथा कमलवनानि विनाशयति तथासौ रजोराशिरपि सूर्य्यकिरणानदृश्यतानयनेन विनाशयति स्मेति भाव। अत्र पूर्व्ववदलङ्कार। गगनमेव महीतल तस्य प्लावने प्रलयपयोधिपूरस्तेन। अत्रापि पूर्व्ववदेवा लङ्कार। त्रिभुवनलक्ष्म्या अवगुण्ठनपटस्तेन। अत्र त्रिभुवनशोभायां स्त्रीत्वारोप आर्थ रजोराशौ तदवगुण्ठन पटत्वारोपस्तु शाब्द इत्येकदेशविवर्त्ति रूपकमलङ्कार। अत्रापि निरङ्ग रूपकमिति केचित्।

(म) महेति। महावराहस्य नारायणतृतीयावतारस्य केशरनिकरवत् कर्बुरेण विचित्रवर्णेन। प्रलयानलस्य धूमराजिवत् मांसलेन परिपुष्टेन। अनयोः प्रत्येक लुप्तोपमालङ्कार।

(ভ) এবং সেই ধূলিসমূহের বিশাল মূর্ত্তি ক্রমে বৃদ্ধি পাইতে লাগিলে, সেগুলিকে দিগ বিজয়ের মাঙ্গলিকধ্বজস্বরূপ দেখা যাইতে লাগিল, আর সেগুলি শত্রুগণরূপ পদ্মবনের তুষার রাজলক্ষ্মীর বেশবিন্যাসের আবীর শত্রুগণের ছত্ররূপ পদ্মবনের হিম সৈন্যগণের পদভরে পরিপীড়িত মহীতলের মূর্চ্ছার অন্ধকার প্রচলিত সৈন্যরূপ বর্ষাকালের কদম্বপুষ্প সূর্য্যকিরণরূপ পদ্মবন দলিত করিতে হস্তিসমূহ আকাশরূপ মহীতল প্লাবন করিতে প্রলয়কালীন সমুদ্রের প্রবাহ এবং ত্রিভুবনলক্ষ্মীর মস্তকাবগুণ্ঠন করিবার বস্ত্রস্বরূপ বিরাজ করিতেছিল, (ম) আর সেই ধূলিসমূহ আদিবরাহের কেশরসমূহের ন্যায় বিচিত্রবর্ণ এবং প্রলয়াগ্নির ধূমসমূহের ন্যায়

(१) षण्डनतुषारेण। (२) सैन्यभर। (३) चलद्दलबल। (४) दिवसकरकमल दिवसकर किरणकमल।

पातालतलादिवोत्तिष्ठता, चरणेभ्य इव निर्गच्छता, लोचनेभ्य इव निष्पतता, दिग्भ्य इवागच्छता, नभस्तलादिव पतता, पवनादिवोल्लसता रविकिरणेभ्य इव सम्भवता, (य) अनपहृतचेतनेन निद्रागमेन, अनवगणितसूर्य्येण (१) अन्धकारेण, अघर्म्मकालोपस्थितेन भूमिगृहेण, अनुदिततारागणनिवहेन बहुलनिशाप्रदोषेण, अपतित-सलिलेन (२) जलधरसमयेन, अभ्रान्तभुजङ्गेन (३) रसातलेन, (र) हरिचरणेनेव सवर्द्धमानेन त्रिभुवनमलङ्घयता रजसा (ल)।

(य) पातालेति। पातालतलादुत्तिष्ठतेव मूलादर्शनात् सैन्यानां चरणेभ्यो निर्गच्छतेव प्रत्येकचरणलग्नत्वात् सैनिकानां लोचनेभ्यो निष्पततेव तत्रापि लग्नत्वात् दिग्भ्य आगच्छतेव तासु सर्वास्वेव दर्शनात् नभस्तलात् पततेव तत्र दृष्टिपथं यावद्दर्शनात् पवनादुल्लसता वायुतः प्रादुर्भवतेव सर्ववायुप्रवहणात् तथा रविकिरणेभ्यः सम्भवतेव तत्रापि सर्वत्र दर्शनात्। एषु प्रत्येकवाक्ये क्रियोत्प्रेक्षालङ्कारः। तेन च सर्वतो विस्तारित्वं व्यज्यत इत्यलङ्कारेण वस्तुध्वनिः।

(र) अनपेति। अनपहृता न विलोपिता चेतना चैतन्यं येन तेन निद्रागमेन निद्राविर्भावस्वरूपेण। रजसो नेत्रनिमीलनहेतुतया निद्रासाम्यम् अथ च चेतनानपहरणात्ततो वैशिष्ट्यमिति भावः। अतएवात्र अधिकारूढ़वैशिष्ट्यरूपकमलङ्कारः। न अवगणितः अस्तगमनादवज्ञातः सूर्य्यो येन तेन अन्धकारेण तिमिररूपेण। सर्वपदार्थावरणहेतुत्वादन्धकारसाम्यम् अथ च सति सूर्ये प्रादुर्भावात्ततो वैषम्यमिति भावः। पूर्ववदलङ्कारः। अघर्म्मकाले अग्रीष्मकाले उपस्थितेन भूमिगृहेण भूगर्भान्तर्गतगृहस्वरूपेण। ग्रीष्मकाले हि लोकैः रविकिरणसन्तापशान्तये भूगर्भगृहमाश्रीयते रविकिरणनिवारणहेतुतया भूगर्भगृहसाम्यम् अथ च अग्रीष्मकाले उपस्थितत्वात्ततो वैषम्यमिति भावः। पूर्ववदलङ्कारः। न उदितस्तारागणानां निवहः यत्र तेन बहुलनिशाप्रदोषेण कृष्णपक्षरजनीमुखस्वरूपेण। निविड़ान्धकारोपगमात् कृष्णपक्षरजनीमुखसाम्यं तारागणानुदयाच्च तद्वैषम्यमिति भावः। पूर्ववदलङ्कारः। ताराणामतिप्राचुर्य्यद्योतनाय गणनिवहेति पर्य्यायशब्दद्वयोपादानम्। न पतितं सलिलं वर्षाजलं यत्र तेन जलधरसमयेन वर्षाकालेन। सूर्य्यावरणाद्वर्षाकालसाम्यं वृष्टिजलाभावाच्च तद्वैषम्यमिति भावः। पूर्ववदलङ्कारः। न भ्रान्ता विचारिता भुजङ्गाः सर्पा यत्र तेन रसातलेन पातालस्वरूपेण। गाढ़ान्धकारप्रादुर्भावात् पातालसाम्यं सर्पविचरणाभावाच्च ततो वैषम्यमिति भावः। पूर्ववदेवालङ्कारः।

পরিপুষ্ট দেখা যাইতেছিল (য) আর সেই ধূলিগুলি পাতাল হইতে যেন উঠিতেছিল সৈন্যগণের চরণ হইতে যেন নির্গত হইতেছিল তাহাদের নয়ন হইতে যেন নিঃসৃত হইতেছিল সকল দিক্ হইতে যেন আসিতেছিল, আকাশ হইতে যেন পড়িতেছিল বায়ু হইতে যেন আবির্ভূত হইতেছিল এবং সূর্য্যের কিরণ হইতে যেন উৎপন্ন হইতেছিল (র) এবং সেই ধূলিসমূহ সকলেরই নিদ্রাস্বরূপ হইয়াছিল বটে কিন্তু কাহারও চৈতন্য হরণ করে নাই, অন্ধকারস্বরূপ প্রাদুর্ভূত হইয়াছিল বটে কিন্তু সূর্য্যাস্তের পর প্রাদুর্ভূত হয় নাই, ভূতলের অভ্যন্তরস্থিত গৃহস্বরূপ হইয়াছিল বটে, কিন্তু গ্রীষ্মকালে উপস্থিত হয় নাই কৃষ্ণপক্ষের প্রদোষকালস্বরূপ দেখা যাইতেছিল বটে কিন্তু নক্ষত্রসমূহ উঠে নাই, বর্ষাকালস্বরূপ হইয়াছিল বটে, কিন্তু বৃষ্টি পড়ে নাই, পাতালস্বরূপ বোধ হইতেছিল বটে কিন্তু সর্পগণ ভ্রমণ করে

(१) अनपहृतलोचनेनानवगणितसूर्य्येण। (२) पतितसलिलेन। (३) भुजङ्गमेन।

विकचकुवलयवनमिव नवोदकेन गगनतलमवष्टभ्यमानमलक्ष्यत क्षीरोदफेनपाण्डुना (१) क्षितिक्षोदेन (व)। बहुलरजोधूसरितमशिशिरकिरणबिम्बमवचूलचामरमिव निष्प्रभमभवत् (श)। दुकूलपट (२) धवला कदलिकेव कलुषतामाजगाम गगनापगा (ष)। नरपाल-बलभरमतिगुरुमसहमाना (३) पुनरिव भारावतारणाय ममरलोकमारुरोह रजोमिषेण (४) मही (स)। निःशेषनिपीतातपम् (५) अन्तर्दह्यमानमिव जलधिजलेषु धूसरितरविरथध्वज-पटमपत-

(ल) हरीति। हरेर्वामनस्य चरणेनेव सवर्द्धमानेन रजसा भूरेणुना त्रिभुवनम् अलक्ष्यत व्याप्यत। अत्र त्रिभुवनलङ्घनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिः पूर्णोपमा चानयोरैकाश्रयानुप्रवेशरूपः सङ्करः।

(व) विकचेति। क्षीरोदस्य सागरस्य फेनवत् पाण्डुना नवोदकेन नूतनवृष्टिजलेन विकचकुवलयवनमिव प्रस्फुटितनीलोत्पलवनमिव क्षीरोदफेनपाण्डुना क्षितिक्षोदेन भूरेणुना गगनतलम् अवष्टभ्यमानम् आक्रम्यमाणम् व्याप्यमानम् अलक्ष्यत लोकैरिति शेषः। अत्र लुप्तोपमासङ्कीर्णा श्रौत्युपमालङ्कारः।

(श) बहुलेति। बहुलैः रजोभिः धूसरितं धूम्रवर्णीकृतम् अशिशिरकिरणबिम्बं सूर्यमण्डलम् अवचूलचामरमिव ध्वजाग्रलम्बितस्तबकचामरमिव। अत्रोपमालङ्कारः।

(ष) दुकूलेति। दुकूलपटवत् सूक्ष्मवसनवत् धवला गगनापगा स्वर्णदी मन्दाकिनी कदलिका तदीयपताकेव कलुषतामाविलताम् आजगाम प्राप तद्रजःसम्पातादिति भावः। अत्र मन्दाकिन्याः कालुष्यप्राप्त्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारो लुप्तोपमाश्रौतोपमाभ्यां सङ्कीर्यते।

(स) नरेति। अतिगुरुम् अत्यन्तविशालं नरपालबलभरं राजसैन्यभारम् असहमाना वोढुमशक्नुवती मही पृथिवी भारावतारणाय रजोमिषेण धूलिच्छलेन पुनरमरलोकं स्वर्गम् आरुरोहेव रावणकंसादिभारावतारणाय पूर्वारोहणवदिति भावः। अत्र सापह्नवा क्रियोत्प्रेक्षालङ्कारः।

(ह) निःशेषेति। धूसरितो धूम्रवर्णीकृतो रविरथस्य ध्वजपटः पताका येन तत् तथा निःशेषेण साकल्येन निपीतो यस्य आतपः सूर्यालोको येन तत् अतएवातपपानात् अन्तर्दह्यमानमिव अभ्यन्तरे सन्तप्यमानमिव सत् अवनिरजो भूतलधूलि जलधिजलेषु अपतत् सन्तप्तस्य शीतक्रियाया शान्तिकरत्वादिति भावः। अत्र तत्तूलिज लधि

নাই, (ল) এইরূপ সেই ধূলিসমূহ বামনদেবের চরণের ন্যায় বৃদ্ধি পাইতে পাইতে ত্রিভুবন ব্যাপ্ত করিয়াছিল।

(ব) নূতন বৃষ্টির জলে যেমন প্রস্ফুটিত নীলোৎপলবন আচ্ছন্ন করে সেইরূপ ক্ষীরোদ সাগরের ফেনের ন্যায় শুভ্রবর্ণ ভূতলের ধূলিসমূহ গগনতল আচ্ছন্ন করিয়াছে বলিয়া লোকে দেখিতেছিল। (শ) সেই ধূলিরাশিতে ধূসরবর্ণ সূর্য্যমণ্ডল, পতাকাবদ্ধ চামরের ন্যায় প্রভাশূন্য হইয়া গেল। (ষ) সূক্ষ্ম বস্ত্রের ন্যায় শুভ্রবর্ণ মন্দাকিনীর জল সেই সৈন্যগণের তাবার ন্যায় ধূলিরাশিতে মলিনতা প্রাপ্ত হইল। (স) বাহসৈন্যগণের গুরুতর ভার বহন করিতে অসমর্থ হইয়া পৃথিবী যেন সেই ভার নামাইবার জন্য ধূলিচ্ছলে পুনরায় স্বর্গে আরোহণ করিতে লাগিল। (হ) সেই ধূলিরাশি সূর্য্যরথের পতাকা ধূসরবর্ণ করিয়া সূর্য্যের সমস্ত কিরণ পান

(१) क्षीरोदपाण्डुना। (२) दुकूलपट्ट। (३) भरमसहमाना। (४) रजोनिभेन। (५) पीतातपम्।

दवनिरेज (ङ)। मुहूर्त्तेन च गर्भवासमिव, संहारसागरजलमिव, कृतान्तजठरमिव, महाकालमुखमिव, नारायणोदरमिव, ब्रह्माण्डमिव विवेश पृथिवी (च)। मृन्मय इव बभूव दिवस, पुस्तमय्य इव (१) चकाशिरे ककुभ (२) रेणुरूपेणेव परिणतमम्बरतलम्, (२) एकमहाभूतमयमिव त्रैलोक्यमासीत् (छ)।

अथ निजमदोष्मसन्तप्यमाना दन्तिनां (४) दिशि दिशि करविवरविनिःसृते (५) चरद्भि क्षीरोद क्षोद-धवले (६) शीकरासारे कर्णपल्लव प्रहति विसृतेन (७) च विसर्पता दानजलबिन्दुदुर्द्दिनेन, फेणारवविप्रकीर्णैश्च वाजिना लालाजल-लव-

जलेषु पतनाद्यसम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कार पदार्थ हेतुक काव्यलिङ्गम् क्रियोत्प्रेक्षा चैतेषां तेषा मङ्गाङ्गिभावेन सङ्कर ।

(च) मुहूर्त्तेनेति। किञ्च पृथिवी मुहूर्त्तेन अचिरेण गर्भ वास मातुर्गर्भाशय विवेशेव। इत्थं सर्वत्राक्षय तद्गतसान्धकारितत्वादिति च भाव। संहारे प्रलयसमये य सागरस्तज्जलम्। ब्रह्माण्ड ब्रह्मकोषम्। अत्र प्रत्येकवाक्ये क्रियोत्प्रेक्षालङ्कार।

(छ) मृन्मय इति। दिवसो मृन्मयो मृद्विकार इव बभूव ककुभो दिश पुस्तमय्यो मृल्लिप्तविकारा इव सत्य चकाशिरे विरेजिरे। अनयो प्रत्येक गुणोत्प्रेक्षालङ्कार। पुस्त (क्ली) लेप्यादिशिल्पकर्म्म। इति शब्दकल्पद्रुम। अम्बरतल कर्त्त रेणुरूपेण परिणतमिव। अत्र क्रियोत्प्रेक्षालङ्कार। तथा त्रैलोक्य कर्त्त एकमहाभूतमयमिव केवलक्षितिमयमिव आसीत् अन्येषां जलाकाशादीनां धूलिभिस्तिरोहितत्वादिति भाव। अत्रापि गुणोत्प्रेक्षालङ्कार।

अहो! धूलिवर्षणमपहाय यदि तु सेनाया प्रत्यक्षमवर्ष यिष्यत् तदा खल्वितोऽपि महामनोरमममभविष्यत्।

(ज) अथेति। निजमदोष्मणा स्वकीयतेजस्तापेन सन्तप्यमानाम् दन्तिनां हस्तिनाम्। करविवरविनिःसृतै शुण्डाच्छिद्रनिर्गतै चरद्भिर्गलद्भि क्षीरोदक्षोदधवलै क्षीरोदसागरजलबिन्दुवत् शुभ्रै शीकरासारैर्जलबिन्दुवृष्टिभि तथा कर्णपल्लवाभ्यां विस्तृतकर्णाभ्यां प्रहत्या ताडनेन विसृत विस्तृत तेन विसर्पता प्रसरता दानजलबिन्दूनां

---

করিয়াছিল বলিয়া অন্তরে যেন দগ্ধ হইতেছিল তাই সমুদ্রের জলে যাইয়া পড়িতেছিল (ঙ) এবং ক্ষণকালমধ্যে পৃথিবী যেন মাতার গর্ভে প্রলয়কালীন সমুদ্রের জলে যমের উদরে মহাকালের মুখে নারায়ণের উদরে এবং ব্রহ্মকোষের ভিতরে প্রবেশ করিল (চ) এবং দিনটা যেন মৃত্তিকাময় হইয়া গেল দিক্‌সমূহ যেন মৃত্তিকালেপময় হইয়া দীপ্তি পাইতে লাগিল আকাশ যেন ধূলিরূপে পরিণত হইল এবং ত্রিভুবন যেন কেবল পৃথিবীময় হইয়া গেল।

(জ) তদনন্তর স্বকীয় তেজের উত্তাপে উত্তপ্ত হস্তিগণের শুণ্ড হইতে, ক্ষীরোদসাগরের জল বিন্দুর ন্যায় শুভ্রবর্ণ জলবিন্দুসমূহ নির্গত হইয়া সকল দিকে পড়িতে লাগিল, বিশাল কর্ণ যুগলের তাড়নে বিক্ষিপ্ত হইয়া মদজলবৃষ্টি সকল দিকে ছড়াইয়া যাইতেছিল, আবার অশ্ব-

---

(१) पुस्तमय्य इव। (२) दिश। (३) अम्बरम्। (४) क्वचित् दन्तिनामिति पाठो नास्ति। (५) निःसृतै। (६) क्षीरोदधवलै। (७) विधुतेन।

जालके उपशमिते रजसि, पुनरपि जातालोकासु (१) दिक्षु सागरसलिलादिव (२) उन्मग्नमालोक्य तदपरिमाणं बलमुपजातविस्मयः सर्वतो दत्तदृष्टिर्वैशम्पायनश्चन्द्रापीडमाबभाषे—(ख)

"युवराज ! किं न जितं (३) देवेन महाराजाधिराजेन तारापीडेन यज्जेष्यसि, का दिशो न वशीकृता, या वशीकरिष्यसि, कानि दुर्गाणि न प्रसाधितानि, यानि प्रसाधयिष्यसि, कानि द्वीपान्तराणि नात्मीकृतानि यान्यात्मीकरिष्यसि, कानि रत्नानि नोपार्जितानि यान्युपार्जयिष्यसि, (ग) के वा न प्रणता राजानः, कैर्न विरचितः शिरसि बाल-कमल-कुट्मल-कोमलः सेवाञ्जलिः, कैर्न (४) मसृणीकृताः प्रतिबद्धहेमपट्टैर्ललाटैः सभाभुवः, कैर्न घृष्टाः पादपीठे चूडामणयः, कैर्न प्रतिपन्ना वेत्रयष्टयः, (५) कैर्नोद्धूतानि (६) चामराणि, कैर्नोच्चारिता जयशब्दाः,

---

हेषया तया हेषारवेण विप्रकीर्णानि विक्षिप्तानि ते वाजिनामश्वानां ये लालाजललवाः मुखनिर्गतजलबिन्दवः तेषां जालके समूहेन रजसि तस्मिन् धूलिराशौ उपशमिते निवारिते सति। अत्र लालाजलरजसामुपशमना सम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कारः। तथा दिक्षु पुनरपि जातः आलोकः प्रकाशो यासु तासु सतीषु तत् अपरिमाणम् असंख्यं बलं सैन्यम् सागरसलिलात् उन्मग्नम् उत्थितमिव आलोक्य उपजातविस्मयो वैशम्पायनः सर्वतो दत्तदृष्टिः सन् चन्द्रापीडमाबभाषे इत्यन्वयः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(ग) युवेति। प्रसाधितानि जयसाधनेनायत्तीकृतानि। प्रसाधयिष्यसि जयसाधनेनायत्तीकरिष्यसि। आत्मीकृतानि सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः। इत्यादिमनुवचनात् जयेन स्वीकृतानि स्वत्वास्पदीकृतानीत्यर्थः।

(घ) क इति। न प्रणताः देवतारापीडप्रभावादिति भावः। अपि तु सर्व एव प्रणता इत्यर्थः। एवमन्यत्रापि। एषु प्रश्नवाक्येषु अर्थापत्तिरलङ्कारः। बालः नूतनः यत् कमलस्य कुट्मलः पद्ममुकुलः तद्वत् कोमलः सेवा उपासना तदर्थमञ्जलिः सेवाञ्जलिः। अत्रार्थापत्तिलुप्तोपमयोरङ्गाङ्गिभावेन सङ्करः। प्रतिबद्धः अलङ्करणाय योजितः हेमपट्टः स्वर्णफलकः येषु तादृशैः ललाटैः सभाभुवः न मसृणीकृताः न श्लक्ष्णीकृताः। प्रतिपन्ना प्रतिहारि

गणের মুখ হইতে হ্রেষারবে বিক্ষিপ্ত হইয়া লালাময় জলবিন্দুসমূহ নির্গত হইতে লাগিল, তাহাতে সেই ধূলিরাশি নিবারিত হইলে এবং পুনরায় সকল দিকে আলোক প্রকাশ পাইলে সেই অসংখ্য সৈন্য যেন সমুদ্রের জল হইতে উঠিল এইরূপ দেখিয়া বৈশম্পায়নের বিস্ময় জন্মিল। তখন তিনি সকল দিকে দৃষ্টিপাত করিয়া চন্দ্রাপীড়কে বলিতে লাগিলেন—

(গ) যুবরাজ! মহারাজাধিরাজ তারাপীড কি জয় করেন নাই যাহা তুমি জয় করিবে কোন দিক্ অধিকার করেন নাই যাহা তুমি অধিকার করিবে, কোন্ দুর্গ আয়ত্ত করেন নাই যাহা তুমি আয়ত্ত করিবে, কোন্ দ্বীপান্তর আত্মসাৎ করেন নাই, যাহা তুমি আত্মসাৎ করিবে, কোন্ রত্ন উপার্জ্জন করেন নাই যাহা তুমি উপার্জ্জন করিবে (ঘ) এবং তাঁহার প্রতাপে কোন্ কোন্ রাজা বা অবনত হ'ন নাই, কোন্ কোন্ রাজা বা আপনার মস্তকে

---

(१) पुनरुपजातालोकासु। (२) सागरादिव। (३) किमजितं किं किमजितम्। (४) कैर्न।
(५) वेत्रलताः। (६) उद्धूतानि।

**कैषां न पीता किरीटपत्रमकरै: सलिलधारा इव निर्म्मलास्तच्चरण-(१) नख-मयूख राजय (घ)। एते हि (२) चतुरुदधिजलावगाहदुर्ललित बल-मदावलिप्ता दशरथ-भगीरथ भरत दिलीपालर्क-मान्धातृप्रतिमा कुलाभिमानशालिन सोम-पायिनो मूर्द्धाभिषिक्ता पृथिव्या सर्व्वपार्थिवा रक्षाभूतिमिवाभिषेक पय -पात पूतै स्वूडामणिपल्लवै रुद्वहन्ति मङ्गल्या भवच्चरणरज सहतिम (ङ)। एभिरियमादि-पर्व्वतैरिवापरैर्धृता धरित्री, एतानि चाप्यमीषामाप्लावितदशदिगन्तरालानि सैन्यानि**

भावेन गृहीता । उडू तानि चान्दोलितानि । किरीटेषु यानि पत्राणि पर्णाकाराश्चासानि मकरा स्वनामप्रसिद्धा जलजन्तुविशेषा इव त सलिलधारा इव निर्म्मला। तस्य तारापीडस्य चरणनखानां मयखराजय किरणश्रेणय न पीता नमस्कारकाले न ग्रस्ता अपि तु सर्व्व षामेवेत्यर्थ । अत्र लुप्तोपमा श्रौतीपमा अर्थापत्तिश्च त्वेतेषामङ्गाङ्गि भावेन सङ्कर ।

(ङ) देवतारापीडेन विजिता राजानो भवन्तमपि प्रणिपतन्तीत्याह एत इति। हि तथाहि। चतुर्णामुदधीनां समुद्राणां जलेषु य अवगाह द्वीपान्तरविजयगमनाय सन्तरण तदेव दुर्ललित हठकारिता येषा तेषां तथोक्तानां बलानां सैन्याना मदेन दर्प ण अवलिप्ता दर्पिता । दशरथादय प्रसिद्धा अलर्को नाम दानशौण्ड कश्चिद्राजर्षि महाभारताश्वमेधपर्व णि प्रसिद्ध तत्प्रतिमास्तत्तुल्या । कुलाभिमानशालिनो महाकुलोत्पत्त्यहङ्कारविशिष्टा । सोम पायिन सोमयाग विधाय सोमरसपायिना नियतयज्ञानुष्ठायिन इत्यर्थ । मूर्द्धसु अभिषिक्ता राज्यप्राप्तिकाले कृताभिषेका पृथिव्या सर्व्व पार्थि वा अभिषेकपय पातेन अभिषेकोदकजलसम्पर्के ण पूतै चूडामणिपल्लवै किसलयतुल्यचूडामणिभि रक्षाभूतिमिव रक्षार्थ कयज्ञीयभस्मेव मङ्गल्या कल्याणकारीम् भवतस्तव चरणयो रज सहतिं धूलिसमूहम् उद्वहन्ति नमस्कारकाले धारयन्ति। अत्र तेषां राज्ञां प्राधान्यप्रतिपादनकार्थ्यं प्रति बहुतरकारणोपन्यासात् समुच्चय श्रौतीपमा चानयोरङ्गाङ्गिभावेन सङ्कर ।

নূতন পদ্মকলিকার ন্যায় কোমল অঞ্জলিপুট স্থাপন করেন নাই, কোন কোন রাজা বা স্বর্ণ ফলকালঙ্কৃত নিজ নিজ ললাটদ্বারা (নমস্কার করিবার কালে) সভার ভূমিতল মসৃণ (পালিস) করেন নাই, কোন কোন রাজা বা নমস্কার করিবার সময় মহারাজ তারাপীড়ের পাদপীঠে আপনাদের চূড়ামণি ঘর্ষণ করেন নাই, কোন রাজা বা (প্রতীহারীর ন্যায়) বেত্রযষ্টি ধারণ করেন নাই, কোন কোন্ রাজা বা চামর আন্দোলন করেন নাই, কোন্ কোন রাজা বা জয়শব্দ উচ্চারণ করেন নাই এবং মকর যেমন সমুদ্রের জলধারা পান করে সেইরূপ কোন্ কোন রাজারই বা মুকুটের স্বর্ণপত্রনির্ম্মিত মকরাকার অংশগুলি মহারাজ তারাপীড়ের চরণনখের নির্ম্মল কিরণশ্রেণী পান করে নাই। (ঙ) যে সৈন্যগণ অন্যান্য দ্বীপ জয় করিতে যাইবার নিমিত্ত চারি সমুদ্রের জলে অবগাহন করিয়া অত্যন্ত সাহসিকতা প্রকাশ করিয়াছে, সেই সৈন্যগণের গর্ব্বে গর্ব্বান্বিত এবং দশরথ ভগীরথ ভরত দিলীপ অলর্ক ও মান্ধাতার তুল্য গুণবান্ কুলগৌরবসম্পন্ন সোমরসপায়ী ও রাজ্যে অভিষিক্ত পৃথিবীর এই সকল রাজগণ অভিষেক জল সম্পর্শে পবিত্র আপন আপন চূড়ামণিদ্বারা যজ্ঞীয় রক্ষাভস্মের ন্যায়

(১) लचरण । (२) एते हि ते।

ভবন্তমুপাসতে (চ)। তথাহি পশ্য—(১) 'যস্যাং যস্যাং দিশি বিক্ষিপ্যতে চক্ষুঃ, তস্যাং তস্যাং রসাতলমিবোদ্গিরতি বসুধেব সূতে, ককুভ ইব বমন্তি, গগনমিব বর্ষতি, দিবস ইব সৃজতি বলানি' (ছ)। অপরিমিতবলভরাক্রান্তা মন্যে স্মরতি মহাভারত সমর-সংক্ষোভস্য (২) অদ্য ক্ষিতিঃ (জ)। এষ শিখরদেশেষু (৩) পরিস্খলিত-(৪) মণ্ডলো ধ্বজান গণয়ন্নিব কুতূহলাদ্ভ্রমতি কদলিকাবনান্তরেষু ময়ূখমালী (ঝ)। সর্ব্বতশ্চ মদজলমুচা করিণামেলাপরিমল-সুরভিণি বীথিকা-

(চ) এভিরিতি। অপরৈঃ প্রকৃতিভিন্নৈঃ আদিপর্ব্বতৈঃ মহেন্দ্রাদিভিঃ কুলপর্ব্বতৈরিব এভির্ব্বর্ণিতপূর্ব্বৈঃ রাজভিরিয়ং ধরিত্রী পৃথিবী ধৃতা ধারিতা রক্ষিতা চ। অত্র জাত্যুৎপ্রেক্ষালঙ্কারঃ। আপ্লাবিতানি ব্যাপ্তানি দশানাং দিশাম্ অন্তরালানি মধ্যভাগা যৈস্তানি এতানি দৃশ্যমানানি অমীষাং রাজ্ঞাং সৈন্যানি চ ভবন্তম্ উপাসতে দিগ্বিজয়সাহায্যায় সহগমনেন সেবন্তে। এতদপি দেবস্য তারাপীড়স্য প্রভাবাদিতি ভাবঃ।

(ছ) তদেব দর্শয়তি তথাহীতি। রসাতলং পাতালং কর্ত্তৃ বলানি সৈন্যানি উদ্গিরতীব। সীমাদর্শনাভাবাদিতি ভাবঃ। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। এবমন্যত্রাপি। বসুধা বলানি সূতে প্রসবতীব। ককুভো দিশো বলানি বমন্তীব। গগনং কর্ত্তৃ বলানি বর্ষতীব। দিবসো বলানি সৃজতি উৎপাদয়তীব।

(জ) অপরীতি। অপরিমিতবলভারাক্রান্তা ক্ষিতিঃ অদ্য মহাভারতে গ্রন্থে ব্যাখ্যাতো যঃ সমরঃ কুরুপাণ্ডবযুদ্ধং স মহাভারতসমরঃ শাকপার্থিবাদিত্বান্মধ্যপদলোপী সমাসঃ তস্য সংক্ষোভঃ সম্মর্দ্দস্তস্য স্মরতি ইত্যহং মন্যে। তত্তুল্যভরাক্রান্তত্বাদিতি ভাবঃ। অত্র মন্য ইত্যুপাদানাদ্বাচ্যা ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। সংক্ষোভস্যেতি স্মৃত্যর্থকর্ম্মণি ইতি কর্ম্মণি ষষ্ঠী।

(ঝ) এষ ইতি। শিখরদেশেষু ধ্বজানামেবোপরিভাগেষু পরিস্খলিতঃ প্রতিবিম্বিতত্বাৎ পতিতঃ মণ্ডলং যস্য স এষ ময়ূখমালী সূর্য্যঃ কুতূহলাৎ গণয়ন্নিব ধ্বজানামেব সংখ্যাং কুর্ব্বন্নিব কদলিকাবনান্তরেষু পতাকাসমূহান্তরালেষু ধ্বজান্ স্বস্ববেষ্টিতাপরভাগান্ কেতূন্ বমতি উদ্গিরতীব। প্রত্যেকধ্বজোপরিভাগে সূর্য্যমণ্ডলস্য প্রতিবিম্বিতত্বাৎ তে ধ্বজাঃ সূর্য্যেণোদ্গীর্য্যমাণা ইব ভান্তীতি সরলার্থঃ। অত্র প্রথমা বাচ্যা ক্রিয়োৎপ্রেক্ষা দ্বিতীয়া চ প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা অনয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। কদলী বৈজয়ন্ত্যাঞ্চ রম্ভায়াং হরিণান্তরে। বিশ্বঃ।

মঙ্গলকর তোমার চরণধূলিসমূহ বহন করিতেছেন। (চ) অপর কুলপর্ব্বতগণের ন্যায় এই রাজগণই এই পৃথিবীকে রক্ষা করিয়াছে এবং ইঁহাদের এই সৈন্যগণ সকল দিক্ ব্যাপ্ত করিয়া আজ তোমার সেবা করিতেছে। (ছ) তাহাই দেখ—যে দিকে যে দিকে দৃষ্টিপাত করিবে সেই সেই দিকেই পাতাল যেন সৈন্য উদ্গিরণ করিতেছে, পৃথিবী যেন সৈন্য প্রসব করিতেছে, দিক্‌সমূহ যেন সৈন্য বমন করিতেছে, আকাশ যেন সৈন্য বর্ষা করিতেছে এবং দিনই যেন সৈন্য সৃষ্টি করিতেছে বলিয়া বোধ হইবে। (জ) আমি মনে করি—অদ্য পৃথিবী তোমার অসংখ্য সৈন্যের ভারে আক্রান্ত হইয়া মহাভারতবর্ণিত সেই কুরুপাণ্ডবের যুদ্ধসঙ্ঘর্ষ স্মরণ করিতেছে। (ঝ) ধ্বজসমূহের উপরিভাগে নিজের প্রতিবিম্ব পতিত হওয়ায় সূর্য্য যেন কৌতুকবশতঃ গণনা করিয়া করিয়া পতাকাসমূহের অভ্যন্তরে ধ্বজগুলি বমন

(১) পশ্য পশ্য। (২) মহাভারতসংক্ষোভস্য মহাভারতবলসমরসংক্ষোভস্য।
(৩) মত্তভঙ্কারে শিখরদেশেষু। (৪) স্খলিত।

वाहिनि मदवारिणि निरन्तरमग्ना (१) निपतित (२) मधुकर कुल-कलकल-कलिला-(३) कालिन्दी जल कल्लोल-कलितेव (४) भाति भूतधात्री (ञ)। सैन्यभर सङ्क्षोभभयात् (५) सरित इव गगनतलम् (६) उत्पतिता आच्छादयन्ति (७) एता दिक्चक्रवालमिन्दुधवला ध्वज-पङ्क्तय (८) (ट)। सर्वथा चित्रम्, यदद्य विघटित-सकल कुल-शैल सन्धि बन्धा (९) सहस्रधा शकली भवति बलभरेण धरित्री, यद्वा बलभर-पीडित वसुधा-धारणा विधुरा न चलन्ति (१०) फणिनां पत्यु फणाभित्तय" (ठ)।

(ञ) सर्वत इति। किञ्च सर्वत समन्तात् मदजलमुचा दानजलस्राविणां करिणाम् एलायाश्चन्द्रबालाया परिमलवत् सौरभवत् सुरभिणि सौरभवति वैणिकावाहिनि प्रवाहेण सञ्चारिणि मदवारिणि निरन्तरमग्ना निरवकाशं क्लिन्नत्यर्थ तथा निपतितस्य तन्मदजलोपरि गतस्य मधुकरकुलस्य भ्रमरसमूहस्य कलकल कोलाहलै कलिला गहना दुष्प्रवेशा भूतधात्री धरित्री कालिन्दीजलस्य यमुनाजलस्य कल्लोल महातरङ्गै कलिता व्याप्त व सती भाति करिणां मदजलप्रवाहस्य यमुनाजलतुल्यकृष्णवर्णत्वादिति भाव। अत्र एलत्यत्र लुप्तोपमा मदजले निरन्तरमग्नत्वा सम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्ति क्रियोत्प्रेक्षा चेत्येतेषामङ्गाङ्गिभावेन सङ्कर। कलिल गहन समे। इत्यमर।

(ट) सैन्येति। सैन्यभरसङ्क्षोभभयात् गगनतलमुत्पतिता उड्डीना सरितो नद्य इव एता इन्दुधवला ध्वज पङ्क्तय दिक्चक्रवाल दिङ्मण्डलम् आच्छादयन्ति। अत्र लुप्तोपमासङ्कीर्णा जात्युत्प्रेक्षालङ्कार।

(ठ) सर्वथेति। चित्रमाश्चर्य्यम् यदद्य धरित्री बलभरेण विघटिता विश्लेषिता सकलानां कुलशैलानां सन्धिबन्धा संयोगबन्धनानि यस्या सा तादृशी सती सहस्रधा न शकलीभवति न खण्डखण्डतां प्राप्नोति। अत्र शकलीभवनासम्बन्धेऽपि तत्सम्बन्धोक्तेरतिशयोक्तिरलङ्कार। बलभरेण पीडिताया वसुधाया धारणेन विधुरा विह्वला

করিতেছেন বলিয়া বোধ হইতেছে (ঞ) এবং সকল দিকে মদস্রাবী হস্তিগণের, এলাচীর সৌরভের ন্যায় সৌরভযুক্ত মদজল প্রবাহিত হইতেছে ভ্রমরগণ তাহার উপর পড়িয়া কোলাহল করিতেছে পৃথিবী সেই মদজলে ঘনভাবে নিমগ্ন হইয়া যমুনার জলতরঙ্গে ব্যাপ্ত হইয়াই যেন বিরাজ করিতেছে। (ট) চন্দ্রের ন্যায় শুভ্রবর্ণ এই সকল ধ্বজসমূহ দিঙ্মণ্ডল আচ্ছাদন করিয়াছে তাহাতে বোধ হইতেছে যে কতকগুলি নদী সৈন্যগণের পদভরে বেদনা পাইবার ভয়েই যেন আকাশে উঠিয়া অবস্থান করিতেছে। (ঠ) সর্ব্বপ্রকারে আশ্চর্য্যের বিষয় এই যে সৈন্যগণের পদভরে সমস্ত কুলপর্ব্বতগণের সন্ধিবন্ধন বিশ্লেষিত হওয়ায় পৃথিবী আজ সহস্র খণ্ডে বিভক্ত হইয়া যাইতেছে না এবং সৈন্যগণের পদভরে পরিপীড়িত পৃথিবীর ধারণে বিহ্বল হইয়া অনন্ত-নাগের ফণাগুলি স্থানচ্যুত হইতেছে না।

(१) मदवारिणि मग्ना। (२) निरन्तरनिपतित। (३) वलिता कलङ्ककालिका ललिता।
(४) कलिलेव कवलितेव। (५) सैन्यसङ्क्षोभभयात् धरणिमपहाय। (६) गगनम्।
(७) सञ्छादयन्ति। (८) हिमपङ्क्तय। (९) ०लबन्धा। (१ ) दलन्ति।

ইত্যেব বদত এব তস্য যুবরাজ সমুচ্ছ্রিতানেকতোরণাং তৃণময় প্রাকার মন্দির সহস্র-সম্বাধাম্, (১) উল্লাসিত ধবল-পট মণ্ডপ শোভিনীম্ (২) আবাসভূমিমবাপ (ড)। তস্যাঞ্চাবতীর্য্য রাজবৎ সর্বা ক্রিয়াশ্চকার। সর্বৈশ্চ তৈ সমেত্য নরপতিভিরমাত্যৈশ্চ বিবিধাভি কথাভির্বিনোদ্যমানস্তং দিবসমশেষমভিনবপিতৃবিয়োগজন্মনা শোকাবেগেনায়াস্যমানহৃদয়ো দুঃখেনাত্যবাহয়ৎ (ঢ)। অতিবাহিতদিবসশ্চ যামিনীমপি স্বশয়নীয়স্য নাতিদূরে নিহিতশয়ননিষণ্ণেন (৩) বৈশম্পায়নেন অন্যতশ্চ সমীপে (৪) ক্ষিতিতল বিন্যস্ত (৫) কুথপ্রসুপ্তয়া পত্রলেখয়া সহ, অন্তরা পিতৃসম্বদ্ধাম্ অন্তরা মাতৃসম্বদ্ধাম্ অন্তরা শুকনাসময়ং কুর্বন্নালাপ

ফণিনা পত্যু সর্পরাজস্য অনন্তস্য ফণাভিস্তথৌ বিরলতফণামণ্ডলানি ন চলন্তি ন স্খলন্তি তদপি চিত্রমিত্যর্থ। অত্রাপি পূর্ববদলঙ্কার।

(ড) ইতীতি। বদত এব তস্যেত্যনাদরে ষষ্ঠী। দিগ্বিজয়তো নিবৃত্তা তদ্বচনমনাদৃত্যেত্যর্থ। সমুচ্ছ্রিতানি অত্যুচ্চানি অনেকানি তোরণানি বহির্দ্বারাণি যস্যাস্তাম্ তৃণময়ে প্রাকারে তন্মধ্য ইত্যর্থ মন্দিরসহস্রেণ গৃহসমূহেন সম্বাধা ব্যাপ্তা তাম্ উল্লাসিতেন উত্থাপিতেন ধবলেন পটমণ্ডপশতেন বসনময়গৃহসমূহেন শোভত ইতি তাম্ আবাসভূমি পূর্বনির্ম্মিতনিবাসস্থানম্।

(ঢ) তস্যামিতি। সর্বা ক্রিয়া সন্ধ্যাপর্য্যবসানসেনাপতিসম্ভাষণনিয়োগাদী। সমেত্য মিলিত্বা। বিনোদ্যমান প্রসাদ্যমান। অভিনবাৎ পিতৃবিয়োগাৎ জন্ম যস্য তেন। আয়াস্যমান সন্তপ্যমান হৃদয় যস্য স চন্দ্রাপীড় অশেষ সকল ত দিবস দুঃখেনাত্যবাহয়ৎ।

(ণ) অতীতি। কিঞ্চ অতিবাহিতদিবসশ্চন্দ্রাপীড। স্বশয়নীয়স্য নিজশয্যায়া নাতিদূরে নিহিত স্থাপিত যৎ শয়ন শয্যা তত্র নিষণ্ণেন স্থিতেন। অন্যত স্বশয্যায়া অন্যস্মিন্ পার্শ্বে। ক্ষিতিতলে বিন্যস্ত যৎ কুথ বিচিত্রকম্বল তস্মিন্ প্রসুপ্তা শয়িতা তয়া পত্রলেখয়া চ সহ। অন্তরা মধ্যে মধ্যে। পিতরি তারাপীডে

(ড) বৈশম্পায়ন এইরূপ বলিতেছেন এই অবস্থায় যুবরাজ চন্দ্রাপীড় পূর্বনির্দিষ্ট বাসস্থানে যাইয়া উপস্থিত হইলেন। সে স্থানের বাহিরের দ্বারগুলি অত্যন্ত উচ্চ ছিল তৃণময় প্রাচীরের মধ্যস্থল বহুসংখ্যক মন্দিরে পরিপূর্ণ ছিল এবং উত্তোলিত বহুসংখ্যক শুভ্রবর্ণ পটমণ্ডপে (তাঁবুতে) সে স্থানটী শোভা পাইতেছিল। (ঢ) চন্দ্রাপীড় সেই বাসস্থানে হস্তিনীর পৃষ্ঠ হইতে অবতরণ করিয়া রাজার ন্যায় সকল কার্য্য সম্পাদন করিলেন এবং সেই সকল রাজগণ ও মন্ত্রিগণের সহিত মিলিত হইয়া নানাবিধ কথোপকথনে আনন্দ অনুভব করিতেছিলেন বটে, কিন্তু নূতন পিতৃবিয়োগবশত শোকাবেগে হৃদয় সন্তপ্তও হইতেছিল তাই তিনি দুঃখেতে সেই সমস্ত দিনটা অতিবাহিত করিলেন। (ণ) দিন অতিবাহিত করিলে পর রাত্রিতে নিজের শয্যার অনতিদূরে সংস্থাপিত একখানি শয্যার উপরে বৈশম্পায়ন অবস্থান করিতে লাগিলেন এবং নিকটেই অপর পার্শ্বে ভূতলে একখানি বিচিত্র কম্বল পাতা ছিল পত্রলেখা

(১) মন্দিরসম্বাধাম্। (২) সশোভিনীম্। (৩) নাতিদূরনিষণ্ণেন। (৪) শয়নীয়সমীপে।
(৫) ক্ষিতিতলে বিন্যস্ত।

বিগলিতাম্, (থ) শুক্লপক্ষপরম্পরামিব পুঞ্জীকৃতাম্, (দ) সর্বহংসৈরিব ধবলতয়া কৃতসংবিভাগাম্, (ধ) ধর্ম্মহৃদয়াদিব বিনির্গতাম, (১) শঙ্খাদিবোৎকীর্ণাম, মুক্তাফলাদিবাকৃষ্টাম মৃণালৈরিব বিরচিতাবয়বাম্, দন্তদলৈরিব ঘটিতাম, ইন্দুকরকূর্চকৈরিব প্রক্ষালিতা, (২) বর্ণসুধাচ্ছটাভিরিব চ্ছুরিতাম্, (২) অমৃতফেনপিণ্ডৈরিব পাণ্ডুরীকৃতাম্, পারদরসধারাভিরিব ধৌতম্, রজতদ্রবেণেব নির্ম্মৃষ্টাম্, চন্দ্রমণ্ডলাদিবোৎকীর্ণাম্, কুটজ কুন্দ সিন্ধুবার (৪) কুসুমচ্ছবিভিরিবোল্লাসিতাম্, (ন) ইয়ত্তামিব ধবলিম্ন, (প) স্কন্ধাবলম্বিনীভি-

(থ) মুষলীতি। মধুমদেন মদ্যপানজনিতমত্ততয়া যদিঘূর্ণন তদায়াসেন বিগলিতাং দেহাদ্বিচ্যুতাং মুষলায়ুধস্য বলরামস্য দেহপ্রভামিব তস্যা অপি শুভ্রত্বাৎ। গুণোৎপ্রেক্ষা।

(দ) শুক্লেতি। পুঞ্জীকৃতাং বিধাত্রা স্তূপীকৃতাং শুক্লপক্ষাণাং পরম্পরাং রাজিমিব। পক্ষাণাং কালত্বেন দ্রব্যত্বাদত্র জাত্যুৎপ্রেক্ষালঙ্কারঃ।

(ধ) সর্বেতি। সর্বৈর্হংসৈঃ ধবলতয়া স্বস্বশুভ্রতাগুণেন করণেন কৃতঃ সংবিভাগঃ বিভজ্য প্রতিপাদনং যস্যৈ তাং সর্বেষামপি তত্তৎশুভ্রতামিবত্যর্থঃ। অত্র বিভাগকরণোৎপ্রেক্ষণাৎ ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ন) ধর্ম্মেতি। ধর্ম্মস্য হৃদয়াদ্বিনির্গতামিব। শঙ্খাদুৎকীর্ণামিব। শঙ্খং নিষ্কৃষ্য বহিষ্কৃতামিব। মুক্তাফলান্মৌক্তিকাৎ আকৃষ্টামাবির্ভাবিতামিব। মৃণালৈর্বিরচিতাবয়বাং নির্ম্মিতাঙ্গীমিব। দন্তদলৈর্হস্তিদন্তখণ্ডৈর্ঘটিতাং নির্ম্মিতামিব। ইন্দুকরাশ্চন্দ্ররশ্ময় এব কূর্চকাস্তূলিকাস্তৈঃ প্রক্ষালিতাং পরিষ্কৃত্য ধৌতামিব। অত্র নিরঙ্গকেবলরূপকক্রিয়োৎপ্রেক্ষয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। বর্ণসুধানাং শুক্লতাবিধায়কসুধাখ্যলেপনদ্রব্যাণাং ছটাভিঃ সমূহৈঃ ছুরিতাং লিপ্তামিব। পারদরসস্য পারদদ্রব্যস্য ধারাভির্ধৌতামিব। অত্র পারদরসশব্দয়োঃ পর্য্যায়তয়া আপাততঃ পুনরুক্ততাপ্রতীতৌ পরশ্চ রসশব্দস্য দ্রবার্থে পর্য্যবসানাৎ পুনরুক্তবদাভাসঃ ক্রিয়োৎপ্রেক্ষা চানয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। রজতদ্রবেণ রৌপ্যরসেন নির্ম্মৃষ্টাং পরিমৃষ্টামিব। উল্লাসিতাং পরিশোভিতাম্। এষামুক্ততরং প্রত্যেকবিশেষণং ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(প) ইয়ত্তামিতি। ধবলিম্নঃ শুভ্রতায়া ইয়ত্তাং চরমসীমামিব। গুণোৎপ্রেক্ষা।

গিয়াছিল, (দ) বিধাতা শুক্লপক্ষশ্রেণীকে যেন পুঞ্জীভূত করিয়া রাখিয়াছিলেন (ধ) সকল হংস যেন স্ব স্ব ধবলগুণ তাহাকে বিভক্ত করিয়া দিয়াছিল (ন) সে যেন ধর্ম্মের হৃদয় হইতে নির্গত হইয়াছিল বিধাতা যেন তাহাকে শঙ্খ খোদিত করিয়া বাহির করিয়াছিলেন, মুক্তা হইতেই যেন নিষ্কাশিত করিয়াছিলেন মৃণালদ্বারাই যেন তাহার অঙ্গগুলি নির্ম্মাণ করিয়াছিলেন গজদন্তখণ্ডদ্বারাই যেন গড়াইয়াছিলেন, চন্দ্রকিরণরূপ কুচীদ্বারাই যেন প্রক্ষালন করিয়া পরিষ্কার করিয়া দিয়াছিলেন চূর্ণলেপদ্বারাই যেন লেপিয়া দিয়াছিলেন, অমৃতের ফেনপুঞ্জদ্বারাই যেন শুভ্রবর্ণ করিয়াছিলেন, পারার রসের ধারাতেই যেন ধুইয়া দিয়াছিলেন রূপার রসেই যেন মাজিত করিয়াছিলেন চন্দ্রমণ্ডল হইতেই যেন খোদিত করিয়া বাহির করিয়াছিলেন এবং কুটজ কুন্দ ও নিসিন্দা ফুলের প্রভাদ্বারাই যেন শোভিত করিয়া

(১) নির্গতাম্ উদ্গতাম্। (২) আক্ষালিতাম্। (৩) আচ্ছুরিতাম্। (৪) সিন্দুবার।

उदयतटगतादर्क-(१) बिम्बादुद्धृत्य बालरश्मिप्रभाभिरिव निर्म्मिताभिरुन्मिष-त्तडित्तरल (२) तेजस्ताम्राभिरचिरस्नानावस्थित विरल-वारि कणतया प्रणाम-लग्न-पशुपति चरण भस्म चूर्णाभिरिव जटाभिरुद्भासितशिरोभागाम्, (फ) जटापाश-ग्रथितमुत्तमाङ्गेन मणिमय नामाङ्कमीश्वर चरणद्वयमुद्वहन्तीम, (ब) रवि रथ-तुरग खुर मुख क्षुण्ण-(३) नक्षत्र क्षोद विशदेन भस्मनालङ्कृत (४) ललाटपट्टिकाम्, शिखर शिलाश्लिष्ट शशाङ्ककलामिव शैलराजमेखलाम, (भ) अतुलभक्तिप्रसाधितया लक्ष्यीकृतलिङ्गया द्वितीययेव (५) पुण्डरीकमालया दृष्ट्या सम्भावयन्ती भूत

(फ) उदयेति। उदयतटगतादुदयाचलप्रदेशस्थितात् अर्कबिम्बात् सूर्य्यमण्डलात् उद्धृत्य बालरश्मिप्रभा एव उत्तोल्य ताभिर्बालरश्मिप्रभाभिर्नवकिरणदीप्तिभि करणै विधात्रा निर्म्मिताभिरिव स्थिताभि उन्मिषन्ती प्रकाश माना या तडित् विद्युत् तस्या यत्तरल तेजस्तद्वत्ताम्राभिस्ताम्रवर्णाभि तथा अचिरस्नानेन अवस्थिता विरला अल्पाल्पा वारिकणा यासु तासां भावस्तया हेतुना प्रणामे नमस्कारसमये लग्नानि पशुपते शिवस्य चरणभस्मचूर्णानि यासु ताभि रिव स्थिताभिर्जटाभि उद्भासित शोभित शिरोभागो यस्यास्ताम्। अत्र उद्धृत्येत्यादौ क्रियोत्प्रेक्षा उन्मिषदित्यादौ लुप्तोपमा प्रणामेत्यादौ च क्रियोत्प्रेक्षा इत्यासामङ्गाङ्गिभावेन सङ्कर ।

(ब) जटेति। उत्तमाङ्गेन मस्तकेन जटापाशग्रथित मणिमय मणिनिर्म्मित नाम्ना शिवनाम्ना अङ्कचिह्न यत्र तादृशम् ईश्वरस्य शिवस्य चरणद्वय पदद्वयप्रतिमाम् उद्वहन्ती भक्तिभरेण धारयन्तीम्।

(भ) रवीति। रविरथस्य तुरगाणामश्वाना खुरमुखै खुराग्रभागै क्षुण्णानां विदारितानां नक्षत्राणां क्षोदैव चूर्णवत् विशदेन शुभ्रेण भस्मना भस्मकृततिलकेन अलङ्कृत ललाटपट्टो भालफलक यस्यास्ताम् अतएव शिखरशिलाया मध्यभागग्रस्तरप्रस्तरेण आश्लिष्टा धृता शशाङ्ककला चन्द्ररेखा यस्यास्तां शैलराजस्य हिमालयस्य मेखला नितम्ब मध्य भागमिव स्थिताम्। अत्र पदार्थहेतुक काव्यलिङ्ग तथा चन्द्रकलया सह भस्मतिलकस्य शुभ्रत्वलया सह ललाट पट्टस्य मेखलया च सह कन्याया साम्यमिति द्रव्योत्प्रेक्षा चानयारङ्गाङ्गिभावेन सङ्कर ।

(म) अतुलेति। अतुलया निरुपमया भक्त्या प्रसाधिता प्रसन्नताजननेनालङ्कृता तया लक्ष्यीकृत विषयीकृत

দিয়াছিলেন, (প) আর তাহাকে যেন শুভ্রবর্ণের চর্ম্মসীমা বলিয়া বোধ হইতেছিল (ফ) দেদীপ্যমান বিদ্যুতের তরল তেজের ন্যায় তাম্রবর্ণ এবং স্কন্ধপর্য্যন্ত পতিত কতকগুলি জটাদ্বারা তাহার মস্তক পরিশোভিত ছিল বিধাতা উদয়াচলগত সূর্য্যমণ্ডল হইতে নূতন কিরণ বাহির করিয়া তাহার দীপ্তিদ্বারাই যেন সেই জটাগুলিকে নির্ম্মাণ করিয়াছিলেন এবং অনতিপূর্ব্বে স্নান করায় তখনও জটাগুলির উপরে অল্প অল্প জলবিন্দু ছিল, সুতরাং প্রতীত হইতেছিল যেন সে প্রণাম করিবার সময়ে শিবের চরণের ভস্মরেণুগুলি জটার উপরে লাগিয়া রহিয়াছে (ব) এবং সে মস্তকে শিবনামাঙ্কিত মণিময় দুখানি শিবের চরণ, জটাতে বন্ধন করিয়া ধারণ করিতেছিল (ভ) সূর্য্যের রথে নিযুক্ত ঘোটকগণের খুরাগ্রের আঘাতে চূর্ণীকৃত নক্ষত্রচূর্ণের ন্যায় শুভ্রবর্ণ ভস্মের তিলকে তাহার ললাটদেশ অলঙ্কৃত ছিল, সুতরাং শৃঙ্গের প্রস্তরের উপরে চন্দ্রকলা সংলগ্ন হইলে হিমালয়ের মেখলার ন্যায় তাহাকে দেখা যাইতেছিল

(१) गताद्र्क । (२) तडिन्मनुसरल । (३) तुरङ्गखुरक्षुण्ण । (४) कृत । (५) अपरयेव ।

नाथम्, (य) अनवरत-गीत परिस्फुरिताधरपुटवशात् (१) अतिशुचिभि शुद्ध-हृदयमयूखैरिव गीतगुणैरिव स्वरैरिव स्तुतिवर्णैरिव मूर्त्तिमद्भिर्मुखान्निष्पतद्भि दशनांशुभि पुनरपि स्नपयन्तीं गौरीपतिम्, (२) (र) अतिविमलै वेदार्थैरिव साक्षात् पितामहमुखादाकृष्टै, गायत्रीवर्णैरिव ग्रथितताम् ( ) उपगतै, नारायण नाभिपुण्डरीक-वीजैरिवोद्धृतै, सप्तर्षिभिरिव कर (४) स्पर्शपूतमात्मानमिच्छद्भि स्तारकारूपेणागतै आमलकीफलस्थूलैर्मुक्ताफलैरुपरचितेनाक्षवलयेनाधिष्ठित-

लिङ्ग शिवमूर्त्ति य या तया द्वितीयया पुण्डरीकमालयेव श्वेतपद्मश्रेण्येव स्थितया दृष्ट्यापि स्वतत्वादिति भाव दृश्यां भूतनाथ शिव सम्भावयन्तीं सादरमवलोकयन्तीम्। अत्र जात्युत्प्रेक्षालङ्कार।

(य) अनेति। अनवरत गीतेन परिस्फुरित प्रस्पन्दित यदधरपुटमोष्ठयुगल तद्वशात् मुखात् निष्पतद्भि निर्गच्छद्भि अतिशुचिभिरत्यन्तशुभ्र शुद्धहृदयस्य पवित्रचित्तस्य मयूखै किरणैरिव मूर्त्तिमद्भि गीतगुणै गान माधुर्य्यैरिव स्वरै तानवादादिध्वनिभिरिव स्तुतिवर्णै शिवस्तवाक्षरैरिव स्थितै दशनांशुभिर्दन्तरश्मिभि गौरीपति शिव पुन स्नपयन्तीमिव स्थिताम्। मूर्त्तिमद्भिरिति गीतगुणैरित्यादौ त्रयाणामेव विशेषणम्। पूजारम्भे सकृत् स्नपनाच्च पुन पदमिति बोध्यम्। अत्र प्रथमास्वतस्रो गुणोत्प्रेक्षा शेषा च क्रियोत्प्रेक्षा इत्येतासामङ्गाङ्गिभावेन सङ्कर।

(र) अतीत। किञ्च अतिविमलैरिति मुक्ताफलैरिति वक्ष्यमाणस्य विशेषणम्। पितामहस्य ब्रह्मणो मुखादाकृष्टैराकृष्यानीतै साक्षाद्वेदार्थैरिव निरतिशयसत्यतया तेषामप्यतिविमलत्वादिति भाव। ग्रथितता संयोजनमुपगतै गायत्र्या स्वनामख्यातस्य वैदिकमन्त्रविशेषस्य वर्णै रक्षरैरिव तेषामपि ब्रह्मरूपतया निर्मलत्वादिति भाव। उद्धृतैरुत्तोलितै नारायणस्य नाभिपुण्डरीकवीजैरिव। तथा आत्मान स्वस्वदेह करस्पर्शेन जपकाले तस्या कन्यकाया पाणिस्पर्शेन पूत पवित्र कर्त्तुमिच्छद्भि तारकारूपेण नक्षत्रभावेनागतै मुक्तानां नक्षत्रवदुज्ज्वलत्वादिति भाव सप्तर्षिभिर्मरीच्यादिभिरिव स्थितै तथा आमलकीफलवत् स्थूलै मुक्ताफलैर्मौक्तिकै उपरचितेन विहितेन अक्षवलयेन जपमालया अधिष्ठित आश्रित कण्ठभागो यस्यास्ताम् अतएव परिवेशेन परिधिना परिगत

(ল) অতুলনীয় ভক্তিতে পবিত্রাভিত ও দ্বিতীয় শ্বেতপদ্মমালার ন্যায় নির্ম্মল দৃষ্টিদ্বারা সে শিবমূর্ত্তিকে লক্ষ্য করিয়া আদরের সহিত শিবকে দেখিতেছিল (য) অনবরত গান করায় কন্যাটীর ওষ্ঠযুগল স্পন্দিত হইতেছিল, সুতরাং মুখ হইতে নির্গত অত্যন্ত নির্ম্মল দন্ত রশ্মিদ্বারা সে যেন পুনরায় শিবকে স্নান করাইতেছে বলিয়া বোধ হইতেছিল সেই দন্ত রশ্মিগুলিকে তাহার পবিত্র হৃদয়ের কিরণের ন্যায় এবং মূর্ত্তিমান্ গানের মাধুর্য্যের ন্যায়, মূর্ত্তিমান্ স্বরলহরীর ন্যায় ও মূর্ত্তিমান স্তবের অক্ষরের ন্যায় দেখা যাইতেছিল (র) আমলকী ফলের ন্যায় বড় বড় ও অত্যন্ত নির্ম্মল মুক্তাদ্বারা গ্রথিত একছড়া জপের মালা তাহার কণ্ঠদেশে লম্বিত ছিল ব্রহ্মার মুখ হইতে আকর্ষণ করিয়া আনীত সাক্ষাৎ বেদার্থের ন্যায় গ্রথিত গায়ত্রীর অক্ষরের ন্যায় নারায়ণের নাভিস্থিত শ্বেত পদ্ম হইতে উত্তোলিত বীজের

(१) गीतस्फुरित। (२) पुनरपि गौरीनाथम्। (३) ग्रथनताम् ग्रथनाम् दर्शनस्तीमताम्। (४) करतल।

कण्ठभागाम् परिवेश(१)परिगतचन्द्रमण्डलामिव पौर्णमासीनिशाम्, (२) (ख) अधोमुखहरशिरःकपाल-मण्डलाकारेण मोक्षपुरद्वारकलस(३)कान्तिना स्तनयुगलेन, एक-हंसमिथुन(४)सनाथामिव गङ्गाम्, (५) (ग) गौरीसिंहसटामयेनेव चामररुचिराकृतिना (६) स्तनयुगलमध्यनिबद्धग्रन्थिना कल्पतरुलता-वल्कलेन कृतोत्तरीयकृत्याम्, (घ) अयुग्मलोचनसकाशात् प्रसादलब्धेन चूडामणि-चन्द्र-मयूखजालेनेव मण्डलीकृतेन ब्रह्मसूत्रेण पवित्रीकृतकायाम्, (७) (ङ)

परिवेष्टितं चन्द्रमण्डलं यस्याः तां पौर्णमासीनिशामिव स्थिताम्। अत्र प्रथमाद्यन्तयो र्जात्युत्प्रेक्षा आमलकीति लुप्तोपमा परस्परहेतुकं काव्यलिङ्गम् तथा परिवेशेन सह मुक्तामालायाः चन्द्रमण्डलेन तन्मुखस्य पौर्णमासीनिशया च तस्याः साहृश्यमिति श्रौत्युपमा चेत्येतासामङ्गाङ्गिभावेन सङ्करः।

(ख) अध इति। अधोमुखं हरस्य शिवस्य शिरसि यत् कपालं नरशिरोऽस्थि तद्वन्मण्डलाकारेण वर्तुलाकृतिना तथा मोक्षस्य यत् पुरं ब्रह्मभवनं तस्य द्वारकलसवत् द्वारस्थापितकुम्भवत् कान्तिर्यस्य तेन तादृशेन स्तनयुगलेन उपलक्षितामित्यर्थः अतएव एकेन हंसयोर्मिथुनेन युगलेन सनाथा संयुक्ता तां गङ्गामिव स्थिताम्। अत्र लुप्तोपमा द्वयम् परस्परहेतुकं काव्यलिङ्गम् तथा हंसयुगलेन स्तनयुगलस्य गङ्गया च कन्यायाः साहृश्यमिति श्रौत्युपमा चैतासामङ्गाङ्गिभावेन सङ्करः। कपालस्य उन्मुखत्वे तदुपरिभागस्य उच्चावचत्वान्मण्डलाकारो न स्यात् कपालस्याधोमुखत्वे तु तत्पृष्ठभागस्य दृष्टिगोचरस्य मण्डलाकारः स्यादित्येतत्प्रतिपादनायाधोमुखपदमिति बोध्यम्।

(ग) गौरीति। गौर्याः सिंहस्य दुर्गाया वाहनीभूतस्य सिंहस्य सटामयेनेव जटानिर्मितेनेव चामरवत् रुचिरा आकृतिर्यस्य तेन तथा स्तनयुगलस्य मध्ये निबद्धो ग्रन्थिर्यस्य तेन कल्पतरुलतावल्कलेन कृतम् उत्तरीयस्य कृत्यं कार्यं यया तां। अत्र क्रियोत्प्रेक्षालुप्तोपमयोर्मिथो निरपेक्षतया संसृष्टिः।

(घ) अयुग्मेति। अयुग्मलोचनस्य त्रिलोचनस्य शिवस्य सकाशात् प्रसादलब्धेन अनुग्रहात् प्राप्तेन चूडामणेः शिवस्यैव चूडामणीभूतस्य चन्द्रस्य मयूखजालेनेव किरणकलापेनेव स्थितेन शुभ्रत्वादिति भावः मण्डलीकृतेन

न्याय এবং সেই কন্যাটীর করস্পর্শে আপনাদিগকে পবিত্র করিতে ইচ্ছা করিয়া নক্ষত্ররূপে আগত সপ্তর্ষিগণের ন্যায় সেই মুক্তাগুলিকে দেখা যাইতেছিল এবং ঐরূপ মুক্তামালায় কণ্ঠদেশ পরিবেষ্টিত ছিল বলিয়া পরিবেশদ্বারা চন্দ্রমণ্ডল পরিবেষ্টিত হইলে পূর্ণিমার রাত্রির ন্যায় সেই কন্যাটীকে দেখা যাইতেছিল, (খ) মহাদেবের মস্তকস্থিত অধোমুখ নরমুণ্ডের ন্যায় বর্তুলাকার এবং ব্রহ্মভবনের দ্বারস্থিত কলসদ্বয়ের ন্যায় কান্তিসম্পন্ন দুইটী স্তন, সেই কন্যাটীর বক্ষঃস্থলে বিরাজ করিতেছিল, সুতরাং কেবল দুইটী হংসসংযুক্ত গঙ্গার ন্যায় তাহাকে দেখা যাইতেছিল (গ) চামরের ন্যায় সুন্দর আকৃতি একখানা কল্পতরুর বল্কল তাহার স্তনযুগলের মধ্যস্থানে বদ্ধ থাকিয়া তাহার উত্তরীয় বস্ত্রের কার্য্য করিতেছিল, সেখানা যেন দুর্গার সিংহের জটাদ্বারা নির্ম্মিত বলিয়া বোধ হইতেছিল (ঘ) কণ্ঠদেশে মণ্ডলীকৃত একটী যজ্ঞসূত্রে তাহার দেহ পবিত্র করিয়াছিল মহাদেবের নিকট হইতে অনুগ্রহে লব্ধ তাঁহারই চূড়ামণি

(१) परिवेष। (२) पौर्णमासीम्। (३) मोक्षद्वारकलश मोक्षद्वारनियुक्तकलश।
(४) एकगतहंस। (५) श्वेतगङ्गाम्। (६) चीराकृतिना। (७) पवित्रतरीकृतकायाम्।

আপ্রপদীনেন চ স্বভাবসিতেনাপি ব্রহ্মাসনবন্ধোত্তান চরণতল-প্রভা-পরিষ্বঙ্গা লোহিতায়মানেন দুকূলপটেন প্রাবৃতনিতম্বাম্, (ঘ) যৌবনেনাপি স্বকালোপসর্পিণা নির্বিকার-বিনীতেন (১) শিষ্যেণেবোপাস্যমানাম্ (ঙ) লাবণ্যেনাপি কৃতপুণ্যেনেব স্বচ্ছাত্মনা পরিগৃহীতাম্, (চ) রূপেণাপি রুচিরলোচনেন বিগতচাপলেন আয়তন মৃগীণেব নিষেবিতাম্, ( ) (ছ) ভতসঙ্ক তাম্বস্বসুতামিব সূক্ষ্ম-মঙ্ক খণ্ডিকাঙ্ক

ব্রহ্মসূত্রেণ যজ্ঞোপবীতেন পবিত্রীকৃত কায়ো দেহো যস্যাস্তাম্ অত্র জাত্যুৎপ্রেক্ষালঙ্কার। অস্যাস্তু ন। ব্রহ্মবাদিন্যা যজ্ঞোপবীতধারণং শাস্ত্রীয়মেব। তথা চ হারীত — দ্বিবিধা স্ত্রিয়ো ব্রহ্মবাদিন্যঃ সদ্যোবধ্বশ্চ। তত্র ব্রহ্মবাদিনীনামুপনয়নমগ্নীন্ধনং বেদাধ্যয়নং স্বগৃহে চ ভৈক্ষচর্য্যা। তদেতৎ প্রপঞ্চিতমস্মাভিরুত্তররামচরিতটীকায়ামনুসন্ধেয়ম্।

(ঘ) আপ্র তি। কিঞ্চ প্রপদং পাদাগ্রং মর্য্যাদাভূতমিত্যাপ্রপদং তৎ প্রাপ্নোতীত্যাপ্রপদীনং পাদতলপর্য্যন্তব্যাপিনা স্বাভিব্যাপ্রপদীন তৎ প্রাপ্নোত্যাপ্রপদং হি যৎ ইত্যমরঃ স্বভাবেন সিতো ধবলস্তেনাপি সতা ব্রহ্মাসনবন্ধেন পদ্মাসনকরণেন উত্তানে উন্মুখে যে চরণতলে তয়ো প্রভায়া অর্থাল্লোহিতায়াঃ পরিষ্বঙ্গাৎ সংসর্গাৎ লোহিতায়মানেন দুকূলপটেন সূক্ষ্মবসনেন প্রাবৃতাবাচ্ছাদিতৌ নিতম্বৌ যস্যাস্তাম্। অত্র সিতদুকূলস্য লৌহিত্যগুণগ্রহণাত্তদ্গুণো ঽলঙ্কার।

(ঙ) যৌবনেনেতি। অপি সমুচ্চয়ে। স্বকালে উপযুক্তবয়সি স্বকীয়সেবাবসরে চ উপসর্পতি আগচ্ছতীতি তেন তথা নির্বিকারং কামবিকাররহিতং ক্রোধাদিবিকাররহিতঞ্চ যথা স্যাত্তথা বিনীতেন শিক্ষিতেন যৌবনেন শিষ্যেণেব উপাস্যমানাম্ আশ্রীয়মাণাং সেব্যমানাঞ্চ। অত্র পূর্ণোপমালঙ্কার।

(চ) লাবণ্যেনেতি। কৃতপুণ্যেনেব সতা স্বচ্ছাত্মনা নির্মলেন কামমলহীনস্বরূপেণ চ লাবণ্যেন পরিগৃহীতামাশ্রিতাম্। অত্র পুণ্যকরণোৎপ্রেক্ষণাৎ ক্রিয়োৎপ্রেক্ষালঙ্কার।

(ছ) রূপেণেত। রুচিরে সুন্দরে লোচনে যস্য যত্র চ তেন তথা বিগতং চাপলং স্বাভাবিকং চাঞ্চল্যং মদনোদ্গমশ্চ যস্য যত্র চ তেন আয়তনমৃগীণেব তৎসিদ্ধায়তনহরিণ্যেব রূপেণ সৌন্দর্য্যেণ নিষেবিতামাশ্রিতাম্। অত্রাপি পূর্ণোপমালঙ্কার।

(জ) ভতসঙ্কেতি। সূক্ষ্মাণাং মঙ্কখণ্ডিকানাং মঙ্কখণ্ডানাম্ অঙ্কগৌরবে পূরিতা অঙ্গুলয়ো যস্য তেন

রূপ চন্দ্রের কিরণসমূহের ন্যায় সেই যজ্ঞসূত্রটী বিরাজ করিতেছিল (ঘ) চরণের অগ্রপর্য্যন্তব্যাপী সূক্ষ্মবস্ত্রে তাহার নিতম্বদেশ আবৃত ছিল, সেই বস্ত্রখানা স্বভাবতই শুক্লবর্ণ হইলেও সে পদ্মাসন করিয়া বসিয়া থাকায় উত্তানীকৃত (চিৎ করা) চরণতলের প্রভা তাহাতে পতিত হওয়ায় বস্ত্রখানার সেই অংশটা রক্তবর্ণ হইয়াছিল (ঙ) অবসরক্রমে উপস্থিত ও ক্রোধাদি বিকারবিহীন শিক্ষিত শিষ্যের ন্যায় উপযুক্ত বয়সে উপস্থিত ও কামবিকার বিহীন বশ্য যৌবনকাল তাহাকে আশ্রয় করিয়াছিল (চ) লাবণ্যও যেন পুণ্যোপার্জ্জন করিয়াই নির্ম্মল হইয়া তাহাকে অবলম্বন করিয়াছিল (ছ) সেই সিদ্ধায়তনের হরিণের ন্যায় সুন্দর নয়ন সম্পন্ন ও চাঞ্চল্যবিহীন রূপও, তাহাকে আশ্রয় করিয়াছিল। (জ) আর সে নিজ কন্যার ন্যায় হস্তিদন্ত ভূষিত একটী বীণা ক্রোড়ে স্থাপন করিয়া দক্ষিণহস্তদ্বারা

(১) নির্বিকারেণ বিনীতেন। (২) সেবিতাম্।

रीयक-पूरिताङ्गुलिना (१) त्रिपुण्ड्रकावशिष्ट-भस्म पाण्डुरेण (२) प्रकोष्ठ बद्ध शङ्ख खण्डकेन नख मयूख-दन्तुरतया गृहीतदन्तकोणेनेव दन्तमयीं दक्षिणकरेण वीणामास्फालयन्तीम, प्रत्यक्षामिव गन्धर्वविद्याम, (क) मणिमण्डपिकास्तम्भ लग्नाभिरात्मानुरूपाभि सहचरीभिरिव सवीणाभिर्विलासवतीभि (३) प्रतिमाभि रुपेताम, (ख) स्नपनार्द्रलिङ्ग सङ्क्रान्त प्रतिबिम्बतया अतिप्रबलभक्त्याराधितस्य हृदयमिव प्रविष्टा हरस्य, (ग) हारलतयेव (४) प्राप्तकण्ठयोगया ग्रहपङ्क्त्येव ध्रुवप्रतिबद्धया क्रुद्धयेव रक्त (५) मुखवर्णया मत्तयेव घूर्णित-मन्द (६) तारया

---

त्रिपुण्ड्र कात्तदाख्यतिलककरणादवशिष्टेन भस्मना पाण्डुरेण शुभ्रेण तथा प्रकोष्ठे मणिबन्धदेशे बद्धो धृत शङ्खखण्ड शङ्खवलय यस्य तेन नखानां मयूख दन्तुरतया तुङ्गतया दीर्घतया हेतुना गृहीतो दन्तकोणो गजदन्तनिर्म्मितवीणा वादनसाधन येन तादृशनेव प्रतीयमानेन दक्षिणकरेण उत्सङ्गगता क्रोडस्थिताम् दन्तमयीं गजदन्तभूषणप्रचुरां वीणां स्वसुतां निजकन्यामिव आस्फालयन्ती वादयन्तीं सवात्सल्यमुन्मिष्योन्मिष्यलालयन्तीञ्च अतएव प्रत्यक्षां गन्धर्व विद्यां गानशास्त्रविद्यामिव विद्यमानाम्। अत्र पूर्णोपमालङ्कार तथा दन्तकोणग्रहणोत्प्रेक्षणात् क्रियोत्प्रेक्षा पदार्थ हेतुकं काव्यलिङ्गम् प्रत्यक्षां गन्धर्वविद्यामिवेति गुणोत्प्रेक्षा चेत्य तासामङ्गाङ्गिभावेन सङ्कर। शङ्खमयाङ्गुरीयकवलयाभ्यां शैवधर्म्म व्यज्यत इति वस्तुना वस्तुध्वनि। कोणो वीणादिवादन मित्यमर।

(ख) मणीति। विलासवतीभि विभ्रमशोभाशालिनीभि। सहचरीभिरिव स्थिताभि प्रतिमाभिरात्मप्रतिबिम्बैरुपेताम्। अत्र श्रौतोपमालङ्कार।

(ग) स्नपनेति। स्नपनेन आर्द्रे क्लिन्ने लिङ्गे शिवमूर्त्तौ सङ्क्रान्त प्रतिबिम्ब यस्यास्तस्या भावस्तया हेतुना अतिप्रबल भक्त्या आराधितस्य हरस्य हृदय प्रविष्टामिव स्थिताम्। अत्र क्रियोत्प्रेक्षालङ्कार।

(घ) हारेति। हारलतयेव प्राप्तकण्ठयोगया लब्धगलसम्बन्धया इदमुभयत्रापि समानम्। ग्रहाणां रव्यादीनां पङ्क्त्या श्रेण्येव ध्रुवेण गानाङ्गविशेषेण प्रतिबद्धया नियमितया अन्यत्र तु ध्रुवाभ्यां तदाख्यनक्षत्राभ्यां प्रतिबद्धया सम्बद्धया। गानाङ्गध्रुवलक्षणमुक्तं सङ्गीतदामोदरे— उत्तम षट्पद प्रोक्तो मध्यम पञ्चम स्मृत। कनिष्ठश्च

বাজাইতেছিল। তাহার সেই দক্ষিণ হস্তের অঙ্গুলিগুলি ক্ষুদ্র ক্ষুদ্র শঙ্খখণ্ডের অঙ্গুরীদ্বারা পরিপূর্ণ ছিল ত্রিপুণ্ড্র ধারণ করায় অবশিষ্ট ভস্মে সেই দক্ষিণহস্ত শুভ্রবর্ণ হইয়াছিল তাহার মণিবন্ধ দেশ শঙ্খবলয়ে পরিবেষ্টিত ছিল এবং নখের কিরণে সেই দক্ষিণহস্ত লম্বা বলিয়া বোধ হওয়ায় হস্তিদন্তের ছড়ি ধারণ করিয়াছে বলিয়া বোধ হইতেছিল ইহাতে তাহাকে সাক্ষাৎ গন্ধর্ব্ববিদ্যার ন্যায় দেখা যাইতেছিল। (খ) মণ্ডপের মণিময় স্তম্ভগুলিতে লীলাবিলাসসংযুক্ত, বীণার সহিত তাহার দেহের অনুরূপ প্রতিবিম্ব পড়িয়াছিল সেগুলিকে তাহার সহচরীদিগের ন্যায় দেখা যাইতেছিল (গ) স্নান করাইয়াছিল বলিয়া আর্দ্র শিবমূর্ত্তিতে তাহার প্রতিবিম্ব পড়িয়াছিল, সুতরাং বোধ হইতেছিল যেন বিশেষ ভক্তিসহকারে আরাধনা করায় সে, শিবের হৃদয়ে প্রবেশ করিয়াছে (ঘ) বীণার ধ্বনির সহিত গান মিশাইয়া সে মহাদেবের স্তব করিতেছিল সেই গানটী মুক্তাময় হারের ন্যায় তাহার কণ্ঠসংলগ্ন ছিল গ্রহচক্র যেমন

---

(१) सूक्ष्मशङ्खखण्डिकाङ्गुलीयकापूरिताङ्गुलिना। (२) पाण्डरेण। (३) सवीणाभि प्रतिमाभि।
(४) हारलतयेव। (५) रागरक्त। (६) मन्द।

उन्मत्तयेव अनेककृततालया मीमांसयेव अनेकभावनानुविद्धया गीत्या देवं विरूपाक्षमुपवीणयन्तीम्, (घ) अतिमधुरगीतावकृष्टैर्ध्यानमिवाभ्यस्यद्भिर्निश्चलकर्णपुटैर्मृग वराह वानर-वारण-शरभ-सिंहप्रभृतिभिर्वनचरैराबद्धमण्डलैराकर्ण्यमान गीतानुविद्धविपञ्चीघोषाम्, (१) (ङ) अमरापगामिव नभसोऽवतीर्णाम्, (च) दीक्षितवाचमिवाप्राकृताम्, (छ) त्रिपुरारिशरशलाकामिव तेजोमयीम्, (२) (ज)

चतुर्भिः स्यादध्रुवकोऽयं मयोदितः ॥ इत्यादि। यद्वचक्रस्य ध्रुवनक्षत्रयोगः स्वनमुक्तः सूर्यसिद्धान्ते— भचक्रं ध्रुवयोर्बद्धमाक्षिप्तं प्रवहानिलैः। पर्येत्यजस्रं तन्नद्धा ग्रहकक्षा यथाक्रमम् ॥ क्रुद्धया स्त्रियेव रक्ता शोरागादियुक्ता मुखवर्णा मुखोच्चारितान्यक्षराणि यस्यां तया अन्यत्र तु रक्तो लोहितो मुखवर्णो यस्यास्तया। मत्तया मद्यादिपानजनितमदया स्त्रियेव घूर्णितौ मण्डपिकामध्ये विचरितं मन्द्रो मृदु तार उच्चश्च स्वरौ यस्यास्तया अन्यत्र तु घूर्णिते मदवशाच्चलिते मन्दे अलसे तारे कनीनिकाद्वय यस्यास्तया। उन्मत्तया स्त्रियेव अनेके कृतास्ताला कालक्रियामानरूपा करतलध्वनयश्च यस्यां यया च तया। मीमांसया जैमिनिप्रणीतपूर्वमीमांसाशास्त्रेणेव अनेकाभिर्विविधाभिर्भावनाभिर्मूर्च्छनाभिः अनुविद्धया विशिष्टया पक्षे अनेकया द्विविधया भावनया भावयितुर्व्यापारेण तन्निरूपणेनेत्यर्थः अनुविद्धया ग्रथितया। भावना नाम भवितुर्भवनानुकूलो भावयितुर्व्यापारविशेषः सा च द्विविधा शाब्दी भावना आर्थी भवना चेति लौगाक्षिभास्करः। विस्तरस्तु तत्र व द्रष्टव्यः। एवम्भूतया गीत्या गानेन विरूपाक्षि चन्द्रसूर्याग्निरूपतया विसदृशानि अक्षीणि नेत्राणि यस्य तं देवं शिवम् उपवीणयन्ती वीणया उपगायन्तीम्। अत्र पूर्णा मालोपमालङ्कारः।

(ङ) अतीति। अतिमधुरेण गीतेन अवकृष्टैराकृष्य आनीतैः निश्चलकर्णपुटैः अतएव ध्यानम् अभ्यस्यद्भिः शिक्षमाणैरिव स्थितैः आबद्धं मण्डलं मण्डलाकारेणावस्थानं यस्तैः। वारणो हस्ती। शरभः सिंहघाती अष्टपदो जन्तुविशेषः। आकर्ण्यमानः श्रूयमाणः गीतानुविद्धो गानानुसृतो विपञ्चीघोषः सप्ततन्त्रीविशिष्टवीणाध्वनिर्यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(च) अमरेति। नभस आकाशादवतीर्णाम् अमरापगां मन्दाकिनीमिव स्थिताम्। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(छ) दीक्षितेति। दीक्षितस्य यज्ञादौ व्रतिनः वाचं वाक्यमिव अप्राकृताम् अमानुषीं दिव्याम् अन्यत्र तु

ধ্রুবনক্ষত্রসংযুক্ত থাকে সেই গানটীও তেমন ধ্রুবাসংযুক্ত ছিল এবং ক্রুদ্ধা রমণীর মুখ যেমন রক্তবর্ণ হয় সেই গানটীতেও তেমন মুখ হইতে নানাবিধ রাগ রাগিণীযুক্ত অক্ষর উচ্চারিত হইতেছিল মত্তা রমণীর যেমন নয়নের তারা অলস হইয়া ঘুরিতে থাকে সেই গানের স্বরও তেমন মৃদু ও উচ্চ হইয়া ঘুরিতেছিল, উন্মত্তা রমণী যেমন বহুতর করতলধ্বনি করে সেই গানেও তেমন বহুতর তাল করা হইতেছিল এবং মীমাংসাদর্শন যেমন শাব্দী ও আর্থীনামে দ্বিবিধ ভাবনাবিশিষ্ট সেই গানটীও তেমন বহুতর মূর্চ্ছনাবিশিষ্ট ছিল। (ঙ) অতি মধুর গানে আকৃষ্ট হইয়া হরিণ শূকর বানর হস্তী শরভ ও সিংহপ্রভৃতি বন্য পশুগণ নিশ্চল কর্ণপুটে ও মণ্ডলাকারে অবস্থান করিয়া তাহার গীতসংযুক্ত বীণার ধ্বনি শুনিতেছিল, তাহাতে বোধ হইতেছিল যেন তাহারাও ধ্যান অভ্যাস করিতেছে। (চ) আর সেই কন্যাটীকে, আকাশ হইতে অবতীর্ণ মন্দাকিনীর ন্যায় দেখা যাইতেছিল (ছ) যজ্ঞে দীক্ষিত ব্যক্তির

(१) निर्घोषाम्। (२) तपोमयीम्।

**पीतामृतामिव विगततृष्णाम्, (झ) ईशानशिरःशशिकलामिवानुपजातरागाम्, (ञ) अमथितोदधिजलसम्पदमिवान्तःप्रसन्नाम्, (ट) असमस्तपदवृत्तिमिवाद्वन्द्वाम् (ठ) बौद्धबुद्धिमिव निरालम्बनाम्, (ड) वैदेहीमिव प्राप्तज्योतिःप्रवेशाम्, (ढ) द्यूतकलाकुशलामिव वशीकृताक्षहृदयाम्, (ण) महीमिव जलभृतदेहाम्, (त) हिमसमय-**

प्राकृतादिभाषाभिज्ञां संस्कृतात्मिकामित्यर्थः । नापभाषितवै न म्लेच्छितवै इति श्रुत्या व्रतिनोऽपभ्रंशभाषाव्यवहारनिषेधादिति भावः । अत्र पूर्णोपमालङ्कारः ।

(ज) त्रिपुरेति । त्रिपुरारेः शिवस्य शरशलाकां त्रिपुरासुरवधकाले नारायणात्मिकां बाणशलाकामिव तेजोमयीं तेजःप्रचुराम् । पूर्णोपमा ।

(झ) पीतेति । पीतममृतं यया तां स्त्रियमिव विगता तृष्णा विषयलोभो जलपिपासा च यस्यास्ताम् । पूर्णोपमा ।

(ञ) ईशानेति । ईशानस्य शिवस्य शिरसः शशिकलामिव अनुपजातो रागो कामानुरागो रक्तिमा च यस्यास्ताम् । पूर्णोपमा । तच्चन्द्रकलाया उदयास्ताभावादेव रागो न जायत इति बोध्यम् ।

(ट) अमथितेति । अमथितस्य उदधेः समुद्रस्य जलसम्पदमिव अन्तःप्रसन्नां चित्ते शुद्धां कामादिरहितचित्तामित्यर्थः अन्यत्र तु अभ्यन्तरनिर्मलाम् । पूर्णोपमा ।

(ठ) असमस्तेति । असमस्तानां समासरहितानां पदानां सुबन्तरूपाणां वृत्तिमवस्थितिमिव अद्वन्द्वां शीतातपशीतोष्णादिद्वन्द्वदुःखरहिताम् अन्यत्र तु द्वन्द्वाख्यसमासरहितां युग्ममेलनरहितां वा । पूर्णोपमा ।

(ड) बौद्धेति । बौद्धानां माध्यमिकयोगाचारसाम्प्रदायिकानामित्यर्थः बुद्धिं ज्ञानमिव निरालम्बनां सर्वत्र वासक्तिरहिताम् अन्यत्र तु निर्विषयाम् । पूर्णोपमा । बौद्धानां माध्यमिका योगाचाराश्च सम्प्रदाया विज्ञानातिरिक्तपदार्थं न मन्यन्ते वदन्ति च तत्तज्ज्ञानमेव घटादिरूपेणावभासते भेदस्तु भ्रान्तिरेवेति । तथा च— सहोपलम्भनियमादभेदो नीलतद्धियोः । भेदश्च भ्रान्तिविज्ञानैर्दृश्येतेन्दाविवाद्वये ।

(ढ) वैदेहीमिति । वैदेहीं सीतामिव प्राप्तो ज्योतिषि परब्रह्मणि प्रवेशो ध्यानगोचरता यया ताम् अन्यत्र तु प्राप्तो ज्योतिषि परीक्षार्थं प्रज्वालितवह्नौ प्रवेशो यया ताम् । पूर्णोपमा ।

(ण) द्यूतेति । द्यूतकलायां पाशक्रीडायां कुशलां निपुणां स्त्रियमिव वशीकृतानि अक्षाणि इन्द्रियाणि हृदयं चित्तञ्च यया ताम् अन्यत्र तु वशीकृतम् अक्षहृदयं पाशकविद्यारहस्यं यया ताम् । पूर्णोपमा ।

যেমন প্রাকৃতভাষা বলিতে নাই সেই কন্যাটীও তেমন প্রাকৃত (মনুষ্য) ছিল না, (জ) ত্রিপুরাসুরের বধের সময়ে শিবের বাণের ন্যায় সেও তেজোময়ী ছিল (ঝ) অমৃতপানকারিণীর যেমন পিপাসা থাকে না তাহারও তেমন বিষয়লালসা ছিল না (ঞ) শিবের মস্তকস্থিত চন্দ্রকলার যেমন রাগ (রক্তিমা) জন্মে না তাহারও তেমন রাগ (কামানুরাগ) জন্মিয়াছিল না, (ট) অনালোড়িত সমুদ্রের জলের ভিতর যেমন নির্ম্মল তাহার অন্তঃকরণও তেমন নির্ম্মল ছিল (ঠ) সমাসহীন পদসমূহের যেমন পরস্পর মিলন থাকে না তাহারও তেমন শীতোষ্ণাদি দ্বন্দ্বদুঃখ ছিল না (ড) বৌদ্ধদিগের সম্প্রদায়বিশেষের মতে জ্ঞানের যেমন বিষয় নাই, তাহারও তেমন আসক্তি ছিল না (ঢ) সীতা যেমন অগ্নিতে প্রবেশ করিয়াছিলেন, সেও তেমন পরব্রহ্মে প্রবেশ করিয়াছিল (ণ) দ্যূতক্রীড়ায় নিপুণ স্ত্রীলোক যেমন পাশক বিদ্যার

दिवस (१) मुखलक्ष्मीमिव परिगृहीत (२) भास्करातपाम (थ) आर्य्यामिव समुपात्त (३) यतिगणोचितमात्राम (द) आलिखितामिवाचलावस्थानाम, (ध) अमृमयीमिव तच्छायानुलिप्तभूतलाम, (न) निर्म्ममाम, (४) निरहङ्काराम निर्म्मत्सराम, अमानुषाकृतिम, दिव्यत्वादपरिज्ञायमान वय-परिमाणाम् (५) अप्यष्टादशवर्षदेशीयामिवोपलक्ष्यमाणाम प्रतिपन्नपाशुपतव्रता कन्यका ददर्श (प)।

(त) महीमिति। मही पृथिवीमिव जलेन जलमात्रपानेन भृतो धृतो देहो यया ताम् अन्यत्र तु जलेन भृतो वष्टितो देहो यस्यास्ताम्। पूर्णोपमा।

(थ) हिमेति। हिमसमयस्य माघफाल्गुनात्मकतुषारपातकालस्य दिवसमुखलक्ष्मीमिव प्रत्यषश्रियमिव परिगृहीत पञ्चाग्निसाधनात् शरीरे स्वीकृत भास्करातप सूर्य्यालोको यया ताम् अन्यत्र तु परिगृहीतस्तुषार निवर्त्ती भास्करातपो यया ताम्। पूर्णोपमा।

(द) आर्य्यामिति। आर्य्या स्वनामप्रसिद्ध छन्दोविशेषमिव समुपात्ता गृहीता यतिगणस्य जितेन्द्रियजन समूहस्य मुनिगणस्येत्यथ उचिता योग्या मात्रा दण्डकमण्डल्वाद्य पकरण यया ताम् अन्यत्र तु समुपात्ता गृहीता यतिर्जि ह्वाविश्रामस्थानम् गणा मगणनगणादय उचिता योग्या तत्तल्लक्षणोक्ता मात्रा उच्चारणकालश्च यया ताम्। पूर्णोपमा। लक्ष्म तत् सप्तगणा गोपेता भवति नेह विषमे ज । षष्ठो जश्च न लघु वा प्रथमेऽर्द्धे नियतमार्य्यायाः॥ इत्यादिच्छन्दोमञ्जरी।

(ध) आलीति। आलिखितां चित्रितामिव अचले पर्वते अवस्थान यस्यास्ताम् अन्यत्र तु अचल स्थिर मवस्थान यस्यास्ताम्। पूर्णोपमा।

(न) अ मृति। अ मृमयी तेजोमयी देवीमिव तनुच्छायया देहस्य प्रतिविम्बेन कान्त्या च अनुलिप्त भूतल यया ताम्। पूर्णोपमा।

(प) निर्म्ममामिति। ममतार्थे ममशब्दोऽयमव्यय निर्ममा ममतारहिताम्। निर्मत्सरामन्यविद्वेष हीनाम्। दिव्यत्वात् गन्धर्व कन्यात्वेन निज रत्नादित्यथ अपरिज्ञायमान मानुषवदाकृतिदर्शनमात्रेणाबुध्यमान वयस परिमाण यस्यास्तामपि अष्टादशवर्ष देशीयामिव अष्टादशवर्षात् किञ्चिन्यूनवयस्कामिव। ईषदसमाप्तौ विल्यादिना देशीयप्रत्यय। प्रतिपन्न गृहीत पशुपति शिवो देवता अस्य ति पाशुपत व्रत शिवपूजारूपो नियमो यया ताम्।

রহস্য আয়ত্ত করিয়া থাকে সেও তেমন ইন্দ্রিয়সমূহ এবং চিত্তকে আয়ত্ত করিয়াছিল (ত) পৃথিবী যেমন জলে পরিবেষ্টিতদেহা সেও তেমন কেবল জলপানে ধৃ দেহা ছিল (থ) শীতকালের প্রভাতসময়ের শোভা যেমন হিমদ্বারা সূর্য্যের আলোক আবৃত করে সেও তেমন শরীরে সূর্য্যের আলোক ধারণ করিতেছিল (দ) আর্য্যাছন্দের যেমন যতি গণ ও উপযুক্ত মাত্রা থাকে তাহারও তেমন মুনিগণের উপযুক্ত দণ্ড ও কমণ্ডলুপ্রভৃতি উপকরণ ছিল (ধ) চিত্রিত প্রতিমূর্ত্তি যেমন নিশ্চলভাবে অবস্থান করে সেও তেমন পর্ব্বতে অবস্থান করিতেছিল (ন) তেজোময়ী দেবী যেমন শরীরের কান্তিদ্বারা ভূতল লিপ্ত করেন সেও তেমন শরীরের প্রতিবিম্বদ্বারা ভূতল লিপ্ত করিতেছিল (প) এবং তার মমতা ছিল না অহঙ্কার ছিল না, বিদ্বেষ ছিল না ছিল—অমানুষী আকৃতি, আর স্বর্গীয় বলিয়া তাহার বয়সের

(१) दिन। (२) परिपीत। (३) उपात्त। (४) निर्म्मलाम्। (५) प्रमाणाम्।

ततोऽवतीर्य्य तरुशाखायां बद्धा तुरङ्गम (१) उपसृत्य भगवते भक्त्या (२) प्रणम्य त्रिलोचनाय, (३) तामेव दिव्ययोषितमनिमिष-(४) पक्ष्मणा निश्चल निबद्ध-लक्ष्येण चक्षुषा पुनर्निरूपयामास (फ)। उदपादि चास्य तस्या रूपसम्पदा कान्त्या प्रशान्त्या चाविर्भूतविस्मयस्य मनसि—(ब) 'अहो। जगति जन्तूनामसमर्थितोप नतान्यापतन्ति वृत्तान्तान्तराणि (भ)। तथाहि, मया मृगयायां यदृच्छया निरर्थकमनुबध्नता तुरङ्गमुख (५) मिथुनम, अयमतिमनोहरो मानवानामगम्यो दिव्यजनसञ्चरणोचित प्रदेशो वीक्षित (६) (म)। अत्र च सलिलमन्वेषमाणेन हृदयहारि सिद्धजनोपस्पृष्टजल (७) सरो दृष्टम। तत्तीरलेखाविश्रान्तेन चामानुष गीतमाकर्णितम्। तच्चानुसरता मानुषदुर्लभदर्शना दिव्यकन्यकेयमालोकिता (य)।

(फ) तत इति। त्रिलोचनाय शिवाय। दिव्ययोषित स्वर्गीयस्त्रियम्। अनिमिषाणि निस्पन्दानि पक्ष्माणि लोमानि यस्य तेन निश्चल यथा तथा निबद्ध कृत लक्ष्य दृष्टिर्येन तेन।

(ब) उदपादीति। किञ्च तिचास्य। रूपसम्पदा सौन्दर्य्यातशयेन कान्त्या देहद्युत्या प्रशान्त्या प्रशमेन च करणेन आविर्भूती विस्मयो यस्य तस्य अस्य चन्द्रापीडस्य मनसि उदपादि। इय वृत्तिरुत्पन्ना।

(भ) कातौ वृत्तिरित्याह अहो इति। जन्तूनां प्राणिनाम् वृत्तान्तान्तराणि व्यापारविशेषा असमर्थितोप नतानि अतर्कितोपस्थितानि सन्ति आपतन्ति मनसि आगच्छन्ति अनुभवविषयीभवन्तीत्यर्थ।

(म) उक्तमर्थ समर्थयितुमाह तथाहीति। यदृच्छया स्वेच्छया। अनुबध्नता अनुसरता। तुरङ्गमुख मिथुन किन्नरद्वयम्। दिव्यजनसञ्चरणोचितो देवजनविचरणयोग्य।

(य) अत्रेति। हृदयहारि मनोहरम् सिद्धजनैर्योगिविशेष उपस्पृष्ट व्यवहृत जल यस्य तत् सर अच्छोदसरोवर। तस्य अच्छोदस्य तीरलेखायां तत्वीथ्यां विश्रान्तेन कृतविश्रामेण मर्त्ति सम्बन्ध।

যথার্থ পরিমাণ জানিতে না পারিলেও তাহাকে অষ্টাদশবর্ষের কিঞ্চিৎ ন্যূনবয়স্ক বলিয়া বোধ হইতেছিল এবং সে শিবের উপাসনারূপ ব্রত অবলম্বন করিয়াছিল।

(ফ) তদনন্তর চন্দ্রাপীড় অশ্ব হইতে অবতরণ করিয়া কোন বৃক্ষের শাখাতে অশ্বটীকে বন্ধন করিলেন, পরে নিকটে যাইয়া ভক্তিসহকারে ভগবান্ মহাদেবকে নমস্কার করিয়া পুনর্বার স্থিরদৃষ্টিতে সেই স্বর্গীয় রমণীকেই দেখিতে লাগিলেন, তখন তাহার নয়নের লোমগুলি নিস্পন্দ হইয়াছিল। (ব) তাহার অলোকিক সৌন্দর্য্যে শরীরের আলোকে এবং শান্তির পথ অবলম্বন করায় চন্দ্রাপীড়ের বিস্ময় জন্মিল এবং মনে হইতে লাগিল—(ভ) কি আশ্চর্য্য। জগতে প্রাণিগণের সমক্ষে বিশেষ বিশেষ ঘটনা অতর্কিতভাবেই উপস্থিত হইয়া থাকে। (ম) কারণ আমি ইচ্ছানুসারে মৃগয়ায় আসিলাম অনর্থক কিন্নর দুইটার অনুসরণ করিলাম পরে মানুষের অগম্য স্বর্গবাসীদিগের বিচরণের যোগ্য অত্যন্ত মনোহর এই স্থানটী দেখিতে পাইলাম। (য) এখানে আবার জলের অন্বেষণ করিতে করিতে সিদ্ধজনসেবিত সুন্দর

(१) तुरगम्। (२) महाभक्त्या। (३) पार्वतीपतये। (४) अनिमेष।

(५) तुरगमुख। (६) वीक्षित स्थिते। (७) उपस्पृष्टजल।

নহি মে সম্প্রীতিরস্যা দিব্যতাং প্রতি, আকৃতিরেবানুমাপয়ত্যমানুষতাম, কুতশ্চ মর্ত্ত্যলোকে সম্ভূতিরেবংবিধানাং গন্ধর্ব্ব (১) ধ্বনিবিশেষাণাম (ক)। তদ্যদি মে সহসা দর্শনপথান্নাপয়াতি, নারোহতি বা কৈলাসশিখরম, নোৎপততি বা গগনতলম্, তত 'কা ত্বম কিমভিধানা বা কিমর্থং বা প্রথমে বয়সি প্রতিপন্না ব্রতম' (২) ইতি সর্ব্বমেবৈতত এনামুপসৃত্য পৃচ্ছামি, অতিমহানয়মবকাশ আশ্চর্য্যাণাম।' ইত্যবধার্য্য তস্যামেব স্ফটিকমণ্ডপিকায়ামন্যতম স্তম্ভমাশ্রিত্য সমুপবিষ্টো গীতসমাপ্ত্যবসর প্রতীক্ষমাণস্তস্থৌ (খ)।

অথ গীতাবসানে মূকীভূতবীণা প্রশান্তমধুকররুতেব কুমুদিনী সা কন্যকা সমুত্থায় প্রদক্ষিণীকৃত্য কৃতহরপ্রণামা পরিবৃত্য স্বভাবধবলয়া তপ প্রভাবপ্রগল্ভয়া দৃষ্ট্যা সমাশ্বাসয়ন্তীব, পুণ্যৈরিব স্পৃশন্তী তীর্থজলৈরিব প্রক্ষালয়ন্তী, তপোভিরিব

(ক) ননু কথমিয় দিব্যকন্যকেতি নিশ্চীয়ত ইত্যাহ নহীতি। অস্যা দৃশ্যমানায়া কন্যকায়া দিব্যতা প্রতি স্বর্গীয়তাবিষয়ে নহি মে সম্প্রীতি সংশয়া বর্ত্ত তে। আকৃতিরেব অমানুষীতি শেষ। অমানুষতা দিব্যতাম্। ন খলু মানুষীণামেবমাকৃতির্ভবতীতি ভাব। সম্ভূতিরুৎপত্তি। সুতরামস্যা দিব্যতা প্রতি নহি সম্প্রীতিরিতি ভাব। সম্প্রীতিরিতি সপূর্ব্ব শীঙ ধাতো ক্তি।

(গ) তদিতি। নাপয়াতি নাপসরতি। নোৎপততি নোদ্গচ্ছতি। ততস্তদা। কিমভিধানা কিন্নাম্নী। প্রতিপন্না আরব্ধবতী। আশ্চর্য্যাণা শ্রবণনাশ্চর্য্যানুভবানাম্ অয়মবকাশ সময়।

(খ) অথেতি। মূকীভূতা নি শব্দা জাতা বীণা যস্যা সা অতএব প্রশান্ত বিরত মধুকররুত ভ্রমর ধ্বনির্যস্যা সা কুমুদিনীব বিদ্যমানা। শ্রৌতোপমালঙ্কার। প্র দক্ষিণীকৃত্য শিবমূর্ত্তিমিতি শেষ। কৃতো হরায় শিবায় প্রণামো যয়া সা। তপ প্রভাবেণ প্রগল্ভা দৃষ্টা ভাবনিকযনিপুণত্যর্থ তয়া। সম শ্বাসয়ন্তীব সান্ত্বনা

সরোবরটী দেখিলাম তাহার তীরে আবার বিশ্রাম করিতে থাকিয়া অলৌকিক গান শুনিলাম আবার সেই গীতধ্বনির অনুসরণ করিয়া এই স্বর্গীয় কন্যাটীকে দেখিতে পাইলাম কিন্তু ইহার দর্শন পাওয়া মানুষের পক্ষে দুর্লভ। (ক) এ যে স্বর্গীয় সে বিষয়ে আমার কোনই সংশয় নাই কারণ ইহার আকৃতিই 'এ মানবী নহে' বলিয়া আমাকে অনুমান করাইতেছে, বিশেষত মর্ত্ত্যলোকে এইরূপ গন্ধর্ব্বের গীতধ্বনির সম্ভব হইবে কিরূপ? (গ) অতএব যদি সহসাই আমার দৃষ্টিপথ হইতে সরিয়া না যায় কিংবা কৈলাসপর্ব্বতের শৃঙ্গ আরোহণ না করে অথবা আকাশে উঠিয়া না যায় তাহা হইলে তুমি কে? তোমার নামই বা কি? কি জন্যই বা এই নবীন বয়সে তপস্যা আরম্ভ করিয়াছ? এইভাবে এই সমস্ত বিষয়ই নিকটবর্ত্তী হইয়া ইঁহাকে জিজ্ঞাসা করিব কারণ আশ্চর্য্য শুনিবার এই ই অত্যন্ত উপযুক্ত অবসর।' চন্দ্রাপীড় এইরূপ মনে মনে স্থির করিয়া সেই স্ফটিকমণ্ডপের ভিতরেই কোন একটী স্তম্ভ অবলম্বনপূর্ব্বক উপবেশন করিয়া গানসমাপ্তির অবসর প্রতীক্ষা করত অবস্থান করিতে লাগিলেন।

(১) গান্ধর্ব্ব। (২) পাশুপতব্রতম্।

पावयन्ती, शुद्धिमिव कुर्वाणा, वरदानम (१) इवोपपादयन्ती पवित्रतामिव (२) नयन्ती, चन्द्रापीडमाबभाषे—(ब) स्वागतमतिथये कथमिमा भूमिमनुप्राप्तो महाभाग ( ) तदुत्तिष्ठ, आगम्यताम (४) अनुभूयतामतिथिसत्कार" इति (य)। एवमुक्तस्तु तया सम्भाषण-(५) मात्रेणैवानुगृहीतमात्मानं मन्यमान उत्थाय (६) भक्त्या कृतप्रणामो 'भगवति। यथाज्ञापयसि' इत्यभिधाय दर्शितविनय शिष्य इव तां व्रजन्तीमनुवव्राज (ष)।

व्रजंश्च समर्थयामास— हन्त! तावन्नेयं मां दृष्ट्वा तिरोभूता ( )। कृतं हि मे कुतूहलेन प्रश्नाशया हृदि पदम्। यथा चेयमस्यास्तपस्विजनदुर्लभदिव्यरूपाया अपि दाक्षिण्यातिशया प्रतिपत्तिरभिजाता विभाव्यते, तथा सम्भावयामि नियतमियं

कुर्वतीव अभयं ददतीवेत्यर्थ। शुद्धिं पापक्षयम्। उपपादयन्ती सम्पादयन्ती कुर्वती। नयन्ती प्रापयन्ती। अत्र सर्वत्रामेव क्रियोत्प्रेक्षा परस्परनिरपेक्षतया संसृष्टिः।

(य) स्वागतमिति। महान् भागो भाग्यं यस्य स। अनुप्राप्त आगत।

(ष) एवमिति। या कन्यकया एवमुक्तस्तु चन्द्रापीड इति सम्बन्ध। शिष्य इव दर्शितविनय सन्। अनुवव्राज अनुजगाम। अत्र पूर्णोपमालङ्कार।

(स) व्रजन्निति। किञ्च व्रजन् तां कन्यकामनुगच्छन् चन्द्रापीड समर्थयामास मनसि निर्द्धारयामास। किं समर्थयामासेत्याह हन्तेति। हन्त हर्षे। इयं कन्या। हि तस्मादेव मे मम हृदि कुतूहलेन प्रश्नाशया पूर्वोक्तरूपजिज्ञासाशया पदं प्रतिष्ठा कृतम्। तपस्विजनानां दुर्लभं दिव्यं रूपं यस्यास्तस्या अपि अस्या कन्यकाया

(ब) তাহার পর গান সমাপ্ত হইলে বীণাটীও নীরব হইল তখন ভ্রমরের রব বিরত হইলে কুমুদিনীর ন্যায় সে বিরাজ করিতে লাগিল, পরে সেই কন্যাটী উঠিয়া প্রদক্ষিণ করিয়া মহাদেবকে নমস্কার করিল এবং ফিরিয়া স্বভাবতই ধবলবর্ণ এবং তপস্যার প্রভাবে সর্ব্ব বিষয় নির্ণয়ে নিপুণ দৃষ্টিদ্বারা চন্দ্রাপীডকে যেন আশ্বস্ত করিতেছিল পুণ্যদ্বারাই যেন স্পর্শ করিতেছিল তীর্থজলেই যেন প্রক্ষালন করিতেছিল তপস্যাতেই যেন পবিত্র করিতেছিল যেন পাপক্ষয় জন্মাইতেছিল যেন বরদান করিতেছিল এবং যেন পবিত্রতা জন্মাইতেছিল— এই অবস্থায় বলিল—(য) অতিথির শুভাগমন ত? কি করিয়া মহাশয় এখানে আসিলেন? অতএব উঠুন আসুন আমার অতিথিসৎকার গ্রহণ করুন। (ষ) সে এইরূপ বলিলে চন্দ্রাপীড সেই সম্ভাষণমাত্রেই আপনাকে অনুগৃহীত মনে করিয়া উঠিয়া ভক্তিসহকারে তাহাকে প্রণাম করিয়া দেবি! আপনি যেরূপ আদেশ করেন (তাহাই করিব) এই কথা বলিয়া শিষ্যের ন্যায় বিনয়প্রদর্শনপূর্ব্বক তাঁহার পশ্চাৎ পশ্চাৎ চলিলেন সেও চলিল।

(স) চন্দ্রাপীড় যাইবার সময়ে মনে মনে এইরূপ স্থির করিলেন যে— ভাল! এ ত

(१) वरप्रदानम्। (२) पवित्रिताम्। (३) महाभाग।। (४) अनुगम्यताम्।
(५) सम्भाषित। (६) समुत्थाय। (७) अहो ताक्त्वतिस्तिरोभूता।

मखिलमात्मोदन्तम् (१) अभ्यर्थ्यमाना कथयिष्यतीति (ख)। एवञ्च कृतमति पद-शतमात्रमिव गत्वा, निरन्तरै र्दिवापि रजनीसमयमिव दर्शयद्भिस्तमालतरुभिरन्ध-कारितपुरोभागाम, (ङ) उतफुल्लकुसुमेषु लतानिकुञ्जेषु कूजता मन्दं मन्दं मद मत्त-(२) मधुलिहां विरुतिभिर्मुखरीकृतपर्य्यन्ताम (च) अतिदूरपातिनाञ्च धवल शिलातल प्रतिघातोत्पतनफेनिलानामपां प्रस्रवणै रुत्कोटि-ग्राव विटङ्क विपाट्य-

यथा इयम् दाक्षिण्यस्य औदार्य्यस्य अतिशयोऽतिरेको यस्यां सा तादृशी प्रतिपन्न स्वागतमधितये इत्यादिव्यवहार अभिजाता उत्पन्ना विभाव्यते लक्ष्यते। अभ्यर्थ्य माना मया वक्तु मनुरुध्यमाना सती नियत निश्चितम्। आत्मोदन्त स्वकीयवृत्तान्तम्। इति सम्भावयामीत्यन्वय।

(ङ) एवमिति। किञ्च एव कृतमति इत्य कृतनिश्चयश्चन्द्रापीड प शतमात्रमिव गत्वा गुहामद्राक्षीदिति वक्ष्यमाणक्रियया न्वय। अत्र स्त्रिया द्वितीय कवचनान्तपदानि गुहामिति वक्ष्यमाणस्य विशेषणानि। निरन्तरैघ नै अतएव दिवापि रजनीसमय दर्शयद्भिरिव स्थित तमालतरुभि करण अन्धकारित सञ्जातान्धकार पुरोभाग सम्मुखदेशो यस्यास्ताम्। अत्र क्रियोत्प्रेक्षालङ्कार।

(च) उतफुल्लेति। उतफुल्लानि विकसितानि कुसुमानि येषु तेषु। मदमत्ता ये मधुलिहो भ्रमरास्तेषां विरुतिभिर्झङ्कारै मुखरीकृत शब्दित पर्य्यन्त प्रान्तभागो यस्यास्ताम्।

(छ) अतीति। किञ्च अतिदूरात् पतितु शील यासा तासाम् धवलेषु शिलातलेषु प्रतिघातेन यदुत्पतन मूर्द्ध गमन तेन फेनिलाना फनवतीनाम् अपां जलानाम् उत्कोटय उन्नताग्रा ये ग्रावाण पाषाणास्तेषां विटङ्क ऊपरि भाग विपाट्यमानानि विच्छिद्यमानानि त उच्चरन्तो घातप्रतिघातजनितरुत्पद्यमाना ध्वनय शब्दा येषु त तथा अत्र शीर्य्यमाणा पाषाणेषु पतनात् जर्जरीभवन्त तुषारवत् शिशिरा हिमवत् शीतला शीकरासारा जलबिन्दुधारा येषां तै प्रस्रवणै पाव त्यनिर्झ र बध्यमाना उत्पाद्यमाना नीहारा हिमवज्जलबिन्दवो यस्यां ताम्। अत्र स्वभावोक्ति रलङ्कार तुषारशिशिरशब्दयो पर्य्यायतया आपातत पुनरुक्ततापततीते परञ्च तुषारवत् शिशिरा इति भदावगमात् पुन

আমাকে দেখিয়া অন্তর্হিত হইল না, সুতরা এখন আমার চিত্তে কৌতুকবশে সেই প্রশ্ন করিবার আশা প্রতিষ্ঠা লাভ করিল। ইহার এই দিব্যরূপ তপস্বীদিগেরও দুর্লভ, তথাপি আমার প্রতি ইহার যখন এইরূপ অত্যন্ত ঔদার্য্য সম্পন্ন ব্যবহার জন্মিয়াছে—দেখিতেছি তখন আমি ইহা স্থির করিতে পারি যে আমি ইহাকে বলিবার জন্য অনুরোধ করিলে এ নিশ্চয়ই আপনার সমস্ত বৃত্তান্ত বলিবে। (ঙ) চন্দ্রাপীড মনে মনে এ রূপ কৃতনিশ্চয় হইয়া একশত-পদমাত্র গমন করিয়া একটী গুহা দেখিতে পাইলেন তাহার সম্মুখভাগ কতকগুলি তমালবৃক্ষে অন্ধকার করিয়া রাখিয়াছিল, সেই তমালবৃক্ষগুলি অত্যন্ত ঘন ছিল বলিয়া দিনের বেলায়ও যেন রাত্রিকাল বলিয়া ভ্রম জন্মাইতেছিল, (চ) লতাকুঞ্জের ভিতরে নানাবিধ ফুল ফুটিয়াছিল তাহাতে মন্দ মন্দ রবকারী মদমত্ত ভ্রমরগণের ঝঙ্কারে সেই গুহাটীর প্রান্তভাগ মুখরিত হইয়াছিল। (ছ) পার্ব্বত্যনির্ঝরের জল অতিদূর হইতে ধবল শিলাখণ্ডের উপরে পড়িতেছিল সুতরাং সেই শিলাখণ্ডের প্রতিঘাতে সেই জলের ক ক অংশ পুনরায় উৎক্ষিপ্ত হইতেছিল এই ঘাত-প্রতিঘাতে সেই জলে বহুতর ফেন জন্মিতেছিল

(১) স্বয়মাত্মোদন্তম্। (২) গুঞ্জতা মন্দ মধুমত্ত ।

मानै रुच्चरद्भिर्निर्भिरवशीर्य्यमाण तुषार शिशिर शीकरासारैरावध्यमाननीहाराम्, (क) हिम-हार हर-हास-धवलैरुभयत उच्चरद्भिर्निर्झरैर्द्वारावलम्बित-चलच्चामर-(१) कलापामिवोपलक्ष्यमाणाम (ख) अन्त स्थापित मणि-कमण्डलु मण्डलाम (ग) एकान्तावलम्बित योग पट्टिकाम (घ) विशाखिका-शिखर निबद्ध-(२) नारिकेल-(३) फल वल्कलमय-धौतोपानद्युगलोपेताम, (४) (ङ) अवशीर्णाङ्ग भस्म-धूसर वल्कल शयनीय सनाथैकदेशाम (च) इन्दुमण्डलेनेव टङ्कोत्कीर्णेन शङ्खमयेन भिक्षा कपालेनाधिष्ठिताम (छ) सन्निहितभस्मालावुका गुहामद्राक्षीत् (ज)।

रूक्तवदाभासस्थानयोरङ्गाङ्गिभावेन सङ्कर। तथा धवलशिलातलमिति धवलपद वर्ण नीयार्थस्य न किञ्चिदुपकुरुत इति विलोक्य वितते व्योम्नि इत्यादिदपणोदाहृतवत् अपुष्टार्थत्वदोष स तु धवलपदपरित्यागेनैव समाधेय।

(ख) हिमेति। किञ्च हिम तुषार हारो मुक्तामाला हरहास शिवहास्य तद्वत् धवलास्तै उभयतो द्वार पार्श्वद्वये उच्चरद्भि स्रवद्भि निर्झरैर्हेतुभि द्वारे अवलम्बित सन् चलन चामराणां कलापो यस्यास्तामिवोपलक्ष्यमाणाम्। अत्र चलच्चामरकलापोत्प्रेक्षणाज्जात्युत्प्रेक्षालङ्कार।

(ग) अन्तरिति। अन्तरभ्यन्तरे स्थापित मणिमयकमण्डलूनां मण्डल समूहो यस्यास्ताम्।

(घ) एकान्तेति। एकान्ते एकपार्श्वे अवलम्बिता योगसाधनसमयपरिधानाय क्षुद्रपट्टवस्त्र यस्यास्ताम्।

(ङ) विशाखिकेति। विशाखिकायाः शिक्याया शिखरे उपरिभागे निबद्ध सयत नारिकेलीफलस्य वल्कल मय धौत यदुपानद्युगल पादुकाद्वय तेनोपेता विशिष्टाम्।

(च) अवेति। अवशीर्ण पार्श्वपरिवर्त्तनादौ गलित यदङ्गभस्म तेन धूसर यत् वल्कलशयनीय तद्वल्कमयी शय्या तेन सनाथ सयुक्त एकदेशो यस्यास्ताम्।

(छ) इन्द्विति। इन्दुमण्डलेनेव चन्द्रबिम्बेनेव स्थितेन टङ्केन पाषाणदारणास्त्रेण उत्कीर्ण सन्तक्ष्य निर्म्मित तेन शङ्खमयेन भिक्षाया कपालेन पात्रेण अधिष्ठितामाश्रिताम्। अत्रोपमालङ्कार।

কোন স্থানে উন্নত পাষাণের অগ্রভাগে সেই জল বিচ্ছিন্ন করিয়া দিতেছিল তাহাতে শব্দ হইতেছিল এবং হিমের ন্যায় শীতল জলবিন্দুধারা আরও ক্ষুদ্র ক্ষুদ্র হইয়া সেই গুহার ভিতরে নীহারের ন্যায় ছড়াইয়া পড়িতেছিল। (খ) সেই গুহাদ্বারের উভয়পার্শ্বে হিম মুক্তার মালা ও শিবের হাস্যের ন্যায় ধবলবর্ণ নির্ঝরের জল পড়িতেছিল, তাহাতে বোধ হইতেছিল যেন দ্বারের দুই দিকে ঝুলান কতকগুলি চামর দুলিতেছে। (গ) সেই গুহার ভিতরে কতকগুলি মণিময় কমণ্ডলু স্থাপিত ছিল (ঘ) যোগসাধন করিবার সময়ে পরিধান করিবার উপযুক্ত ক্ষুদ্র একখানি পট্টবস্ত্র একদিকে ঝুলান ছিল (ঙ) নারিকেলফলের বল্কলদ্বারা নির্ম্মিত পরিষ্কৃত দুইখানা পাদুকা শিকার উপরে বাধা ছিল (চ) একদিকে বল্কলময় একখানি শয্যা ছিল সে শয্যাখানি গাত্র হইতে নিপতিত ভস্মে ধূসরবর্ণ হইয়াছিল (ছ) টঙ্ক (সাবল) দ্বারা নির্ম্মিত শঙ্খময় একটী ভিক্ষাপাত্র ছিল, সেই ভিক্ষাপাত্রটীকে চন্দ্রমণ্ডলের ন্যায় দেখা যাইতেছিল। (জ) আর ভস্ম রাখিবার জন্য একটী অলাবুপাত্রও সেই গুহার ভিতরে ছিল।

(१) आद्यचलच्चामर। (२) विशाखिकानिबद्ध। (३) नारिकेरी। (४) युगोपेताम्।

তস্যাশ্চ দ্বারি শিলাতলে সমুপবিষ্টো বল্কল-শয়ন শিরোভাগ বিন্যস্তবীণা ততঃ পর্ণপুটেন নির্ঝরাদাগৃহীতমর্ঘ্যসলিলম্ (১) আদায় তাং কন্যকা সমুপস্থিতাম্ "অলমলমতিযন্ত্রণয়া (২) কৃতমতিপ্রসাদেন, ভগবতি! প্রসীদ, বিমুচ্যতামযমত্যাদর, ত্বদীয়মালোকনমপি সর্বপাপপ্রশমনমঘমর্ষণমিব পবিত্রীকরণায়ালম্, আস্যতাম্" ইত্যব্রবীৎ (ঝ)। অনুবধ্যমানশ্চ (৩) তয়া তাং সর্বামতিথিসপর্য্যামতিদূরাবনতেন শিরসা সপ্রশ্রয় প্রতিজগ্রাহ (ঞ)।

কৃতাতিথ্যয়া চ তয়া দ্বিতীয়শিলাতলোপবিষ্টয়া ক্ষণমিব তূষ্ণীং স্থিত্বা ক্রমেণ পরিপৃষ্টো দিগ বিজয়াদারভ্য কিন্নরমিথুনানুসরণপ্রসঙ্গেনাগমনমাত্মন সর্বমাচচক্ষে (ট)। বিদিতসকলবৃত্তান্তা চোত্থায় সা কন্যকা ভিক্ষাকপালমাদায় তেষামায়তনতরুণাং তলেষু বিচচার। অচিরেণ চ তস্যাঃ স্বয় পতিতৈ ফলৈ

(ঞ) তস্যাং ইতি। সন্নিহিতা সংস্থাপিতা ভস্মন ভস্মরক্ষণার্থা অলাবু শূন্যান্তরা তুম্বী যস্যাং তাম্।

(ঝ) তস্যা ইতি। কিঞ্চ তস্যা গুহায়া দ্বারি শিলাতলে সমুপবিষ্টশ্চন্দ্রাপীডস্তাং কন্যকামিত্যব্রবীদিতি সম্বন্ধ। বল্কলশয়নস্য বল্কলময়শয্যায়া শিরোভাগ বিন্যস্তা বীণা যয়া তাম্। অতিযন্ত্রণয়া মদর্থ অত্যন্তক্লেশকরণেন। অতিপ্রসাদেন কৃতম্ অত্যন্তানুগ্রহেণালম্। অঘং পাপং মৃষ্যতে প্রোজ্ঝ্যতেঽনেনেতি অঘমর্ষণ ঋতঞ্চ সত্যঞ্চাভিদ্ধা দিত্যাদি সূক্তম্। অলং সমর্থম্। অলোপমালঙ্কার। আস্যতামুপবিশ্যতাম্।

(ঞ) অনুবিতি। কিঞ্চ তয়া কন্যকয়া অনুবধ্যমানশ্চন্দ্রাপীড়। অতিদূরমত্যন্তমবনতং তেন। অতিথিসপর্য্যা সৎকারম্। সপ্রশ্রয় প্রণয়সহিতম্।

(ট) কৃতেতি। কিঞ্চ তয়া কন্যকায়া পরিপৃষ্টশ্চন্দ্রাপীড। আচচক্ষে উক্তবান।

(ঝ) তাহার পর চন্দ্রাপীড় সেই গুহার দ্বারদেশে একখানি পাষাণের উপরে উপবেশন করিলেন, এদিকে সেই কন্যাটিও সেই বল্কলময় শয্যার শিয়রে বীণাটী রাখিয়া পত্রপুটকে করিয়া সেই নির্ঝর হইতে অর্ঘ্যের জল লইয়া উপস্থিত হইল, তখন চন্দ্রাপীড় বলিলেন—থাক্ থাক্ আপনি আমার নিমিত্ত অধিক কষ্ট করিবেন না অত্যন্ত অনুগ্রহ করিবার প্রয়োজন নাই। দেবি! আপনি প্রসন্ন হউন, এই অতিরিক্ত আদর পরিত্যাগ করুন, আপনার দর্শনও সকল পাপ বিনষ্ট করে এবং অঘমর্ষণ সূক্তের ন্যায় পবিত্র করিতে সমর্থ, অতএব আপনি উপবেশন করুন। (ঞ) তাহার পর সেই কন্যাটী অনুরোধ করিলে চন্দ্রাপীড় অত্যন্ত অবনত মস্তকে সেই সকল অতিথিসৎকার প্রণয়ের সহিত গ্রহণ করিলেন।

(ট) তখন সেই কন্যাটী অতিথিসৎকার সম্পন্ন করিয়া দ্বিতীয় পাষাণখণ্ডের উপরে উপবেশন করিল এবং কিছুকাল নীরবে থাকিয়া, ক্রমে সমস্ত বিষয় জিজ্ঞাসা করিল, তখন চন্দ্রাপীড় দিগ্বিজয় হইতে আরম্ভ করিয়া কিন্নরদ্বয়ের অনুসরণপ্রসঙ্গে আগমনপর্য্যন্ত আপনার সমস্ত বৃত্তান্ত বলিলেন। (ঠ) সমস্ত বৃত্তান্ত অবগত হইয়া সেই কন্যাটী উঠিয়া, ভিক্ষার পাত্রটী লইয়া আয়তনস্থ বৃক্ষের তলে বিচরণ করিতে লাগিল অচিরকালমধ্যেই তাহার সেই

(১) অর্ঘজলম্। (২) অলমতিযন্ত্রণয়া। (৩) অনুবধ্যমানশ্চ।

রপূর্য্যত ভিক্ষাভাজনম্। আগত্য চ তয়া ফলানামুপযোগায় নিযুক্তবতী চন্দ্রাপীডম্ (ঠ)।

আসীচ্চ তস্য চেতসি—'নাস্তি খল্বসাধ্যং নাম তপসাম। কিমতঃ পরমাশ্চর্য্যম, যদত্র (১) অপগতচেতনা অপি (২) সচেতনা ইবাস্যৈ ভগবত্যৈ সমতিসৃজন্ত ফলান্যাত্মানুগ্রহমুপপাদয়ন্তি বনস্পতয় (ড)। চিত্রমিদমালোকিতমস্মাভিরদৃষ্টপূর্ব্বম' ইত্যধিকতরোপজাতবিস্ময়শ্চোত্থায় তমেব প্রদেশমিন্দ্রায়ুধমানীয় অপনীতপর্য্যাণং নাতিদূরে স যস্য নির্ঝরজলনির্ব্বর্ত্তিত (৩) স্নানবিধিস্তান্যমৃতস্বাদূনি (৪) উপযুজ্য ফলানি, পীত্বা চ তুষারশিশির প্রস্রবণজলমুপস্পৃশ্য চকান্তে তাবদবতস্থে, যাবত্তয়াপি কন্যকয়া (৫) কৃতো জল ফল-মূলময়েষ্বাহারেষু প্রণয় (ঢ)।

(ঠ) বিদিতেতি। কিঞ্চ তয়া কন্যকয়া ভিক্ষাভাজনমিতি সম্বন্ধ। উপযোগায় ভক্ষণায়।

(ড) আসীদিতি। তস্য চন্দ্রাপীডস্য। তপসা খল্বসাধ্যং নাম নাস্তি। তথা চ নিয়িতত্ত্বধৃত — তপোভিঃ প্রাপ্যতেঽভীষ্টং নাসাধ্যং হি তপস্যত। দুর্ভগত্ব তথা লোকো বহত সতি সাধনে॥ অপগতচেতনাশ্চ তন্মহীনা অপি। ফলানি সমতিসৃজন্ত সমপয়ন্ত। বনস্পতয়ো বৃক্ষা। এতত্ খলু তপস এব ফলমিতি ভাব। অতএবাত্র বিশেষণ সামান্যসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কার।

(ঢ) চিত্রমিতি। চিত্রমাশ্চর্য্যম্। অপনীতপর্য্যাণম্ অপসারিতপল্যয়নম্। সযস্য বদ্ধা। নির্ঝরজলেন নির্বর্ত্তিতো নিষ্পাদিত স্নানবিধির্যেন স তাদৃশশ্চন্দ্রাপীড। অমৃতস্বাদূনি পীযূষবত্ সুরসানি তানি ফলানি উপযুজ্য ভুক্ত্বা তুষারবত্ শিশির শীতল প্রস্রবণজল পীত্বা চ। অত্রাপি তুষারশিশিরপদয়ো পর্য্যায়তয়া আপাতত পুনরুক্ততাপ্রতীতৌ পরঞ্চ তুষারবত্ শিশির শীতলমিতি পর্য্যবসানাত্ পুনরুক্তবদাভাসোঽলঙ্কার। উপস্পৃশ্য আচম্য। প্রণয় আদর কৃত আহার কৃত ইত্যর্থ।

ভিক্ষাপাত্রটী, আপনা আপনি পতিত ফলে পরিপূর্ণ হইয়া গেল। তাহার পর সে আসিয়া সেই সমস্ত ফল ভক্ষণ করিবার নিমিত্ত চন্দ্রাপীডকে অনুরোধ করিল।

(ড) তখন চন্দ্রাপীডের মনে হইতে লাগিল যে—এই জগতে তপস্যার অসাধ্য কার্য্য নাই। ইহা অপেক্ষা অধিক আর কি আশ্চর্য্য হইতে পারে? যে চেতনাবিহীন বৃক্ষসমূহও আজ সচেতনের ন্যায় এই দেবীকে ফল সমর্পণ করিয়া আপনাদিগের প্রতি ইঁহার অনুগ্রহ জন্মাইল। (ঢ) আমি আজ এই আশ্চর্য্য বৃত্তান্ত দেখিলাম, এরূপ পূর্ব্বে কখনও দেখি নাই' এইভাবে চন্দ্রাপীডের আরও অধিক বিস্ময় জন্মিল। তখন তিনি উঠিয়া ইন্দ্রায়ুধকে সেই স্থানে আনয়ন করিয়া পালানটী খুলিয়া রাখিয়া অনতিদূরে তাহাকে বন্ধন করিলেন, পরে সেই ঝরণার জলে স্নানকার্য্য সম্পাদন করিয়া অমৃতের ন্যায় সুস্বাদু সেই সকল ফল ভক্ষণ করিয়া, হিমের ন্যায় শীতল সেই ঝরণার জল পান করিয়া এবং আচমন করিয়া এক দিকে তত কাল অবস্থান করিতে লাগিলেন যত কাল সেই কন্যাটীও ফল মূল ও জল আহার করিল।

(১) যত্র। (২) বিগতচেতনা অপি। (৩) নিবর্ত্তিত। (৪) অমৃতরসস্বাদূনি। (৫) কন্যয়া।

ইতি পরিসমাপিতাহারা নির্ব্বর্ত্তিতসন্ধ্যোচিতাচারা শিলাতলে বিস্রব্ধমুপবিষ্টা নিভৃতমুপসৃত্য নাতিদূরে সমুপবিশ্য চন্দ্রাপীড়ঃ সবিনয়মবাদীৎ—(ণ) "ভগবতি! ত্বৎপ্রসাদ-প্রাপ্তি-প্রোৎসাহিতেন কুতূহলেনাকুলীক্রিয়মাণো মানুষতাসুলভো লঘিমা বলাদনিচ্ছন্তমপি মাং প্রশ্নকর্ম্মণি নিয়োজয়তি (ত)। জনয়তি (১) হি প্রভুপ্রসাদলবোঽপি প্রাগল্ভ্যমধীরপ্রকৃতেঃ (থ)। স্বল্পাপ্যেকদেশাবস্থানে কালকলা (২) পরিচয়মুৎপাদয়তি (দ)। অণুরপ্যুপচারপরিগ্রহঃ প্রণয়মারোপয়তি (ধ)। তদ্যদি নাতিখেদকরমিব ততঃ কথনেনাত্মানমনুগ্রাহ্যম (৩) ইচ্ছামি (ন)। অতিমহৎ

(ণ) ইতীতি। নির্ব্বর্ত্তিতো নিষ্পাদিতঃ সন্ধ্যোচিতাচারঃ সায়ংকালযোগ্যো বিধিঃ সন্ধ্যাবন্দনাদির্যয়া তাম্। বিস্রব্ধং সবিশ্বাসং নিশ্চিন্তং যথা তথা। নিভৃতং নিঃশব্দং যথা তথা।

(ত) ভগবতীতি। ত্বৎপ্রসাদপ্রাপ্ত্যা তবানুগ্রহলাভেন প্রোৎসাহিতঃ প্রবর্দ্ধিতঃ তেন কুতূহলেন আকুলীক্রিয়মাণঃ অধীরীক্রিয়মাণঃ মানুষতাসুলভো মাদৃশেষু মানুষেষু নিতান্তসম্ভবপরঃ ইত্যর্থঃ লঘিমা লঘুত্বং চঞ্চলস্বভাব ইতি তাৎপর্য্যম্।

(থ) নন্বপরিচিতস্য সহসা প্রশ্নে প্রগল্ভতাপ্রতীতিরিতি চেত্তত্রাহ জনয়তীতি। হি তথাহি। প্রভুপ্রসাদলবোঽপি স্বাম্যনুগ্রহলেশোঽপি অধীরপ্রকৃতের্জনস্য প্রাগল্ভ্যং ধৃষ্টতাং জনয়তি। তথা চ তপস্বিতয়া প্রভুরূপায়াস্তবাতিথ্যসৎকারাদেবানুগ্রহলাভো মম তাং প্রগল্ভতাং জনয়তীতি স্বীক্রিয়ত এবেতি ভাবঃ। অতএবাত্র সামান্যাদপ্রস্তুতাৎ প্রস্তুতস্য বিশেষস্য প্রতীতেরপ্রস্তুতপ্রশংসালঙ্কারঃ।

(দ) ননু তথাপ্যপরিচিতস্য প্রশ্নো নোপপদ্যত ইত্যাহ স্বল্পাপীতি। কালকলা সময়াংশঃ। তথা চ ইয়ন্তং কালমেকত্রাবস্থানাত্ত্বং মে পরিচিতাসীতি ভাবঃ।

(ধ) অথ তথাপি প্রণয়াভাবেনেষ্টানিষ্টসম্বন্ধাভাবাৎ কথং প্রশ্ন ইত্যাহ অণুরিতি। অণুরপি স্বল্পোঽপি উপচার পরিগ্রহঃ সদ্ব্যবহারস্বীকারঃ প্রণয়ং সৌহার্দ্দম্ আরোপয়তি উপস্থাপয়তি। তথা চ তবাতিথিসৎকারস্বীকার এব প্রণয়ারোপিতবানিতি ভাবঃ। অতএবাত্রাপি পূর্ব্ববদপ্রস্তুতপ্রশংসালঙ্কারঃ।

(ণ) সেই কন্যাটী এইভাবে আহার শেষ করিয়া সন্ধ্যাকালের উপযুক্ত কার্য্যগুলি সম্পাদন করিয়া একখানি পাষাণের উপরে নিশ্চিন্তভাবে উপবেশন করিল, তখন চন্দ্রাপীড় নিঃশব্দে তাহার নিকটে উপস্থিত হইয়া অনতিদূরে উপবেশন করিয়া বিনয়ের সহিত বলিতে লাগিলেন—(ত) দেবি! আপনার অনুগ্রহলাভেই আমার কৌতুক জন্মাইয়াছে সেই কৌতুকই আবার মনুষ্যোচিত চপলস্বভাবকে আকুল করিয়া তুলিয়াছে, তাই আমি ইচ্ছা না করিলেও সেই চপলস্বভাবই আমাকে বলপূর্ব্বক প্রশ্নকার্য্যে নিযুক্ত করিতেছে। (থ) কারণ প্রভুর অনুগ্রহের লেশও, চপলস্বভাব মনুষ্যের প্রগল্ভতা জন্মাইয়া থাকে (দ) এবং এক জায়গায় অল্পকাল অবস্থান করাও পরস্পরের পরিচয় জন্মাইয়া থাকে। (ধ) বিশেষত পরস্পরের সদ্ব্যবহার অল্প হইলেও সে প্রণয় জন্মায়। (ন) অতএব যদি আপনার বিশেষ ক্লেশজনক না হয় তাহা হইলে আপনার বৃত্তান্ত বলুন তাহা শুনিয়া আমি আত্মাকে অনু

(১) উপজনয়তি। (২) একাবস্থানে কালকলা একদেশস্থানকালকলা। (৩) অনুগৃহ্যমাণম্।

खलु भवद्दर्शनात् प्रभृति मे कौतुकमस्मिन् विषये (प)। कतरस्मरुतामृषीणां गन्धर्वाणां गुह्यकानामप्सरसां वा कुलमनुगृहीत भगवत्या जन्मना ?। किमर्थं वास्मिन् कुसुमसुकुमारे नवे वयसि व्रतग्रहणम् (फ) ?। क्वेद वय, क्वेद तप, क्वेयमाकृति, क्व चाय लावण्यातिशय क्वेयमिन्द्रियाणामुपशान्ति (ब)। तदद्भुत मिव मे प्रतिभाति। किं निमित्त वा (१) अनेक-सिद्ध-साध्य-सबाधानि (२) सुरलोकसुभगानि (३) अपहाय दिव्याश्रमपदानि एकाकिनी वनमिदममानुष मधिवससि (भ)?। कश्चाय प्रकार, यत्तैरेव पञ्चभिर्महाभूतैरारब्धमीदृशी (४) धवलता धत्ते शरीरम् ? नेदमस्माभिरन्यत्र दृष्टश्रुतपूर्वं वा (५) (म)। अप

(न) तदित। तत्स्मात्। नातिखेदकर न विशषक्लेशजनकम् ततस्तदा कथनेन मज्जिज्ञास्यविषय भाषणेन।

(प) भतीति। सव नाम्नो वृत्तिमात्रे पु वद्भाव इति वचनात् भवदिति पु वद्भाव।

(फ) अथ कस्ते जिज्ञास्यविषय इत्याह कतरदिति। बहूना प्रकर्षेऽपि तर इति कलापटीकायां दुर्गसिंहाभिप्रायात् कतरदिति तरप्रत्यय। मरुतां देवानाम्।

(ब) क्वेति। इद वयो नवयौवनमिति भाव। इद तपो वार्द्धक्य एवाचरणीयमिति भाव। इयमाकृति रसाधारणसुन्दरीत्याशय। उपशान्ति स्वस्वभोग नवृत्ति। निरुपमसौन्दर्य्यवन्यौवनात्मकप्रवृत्तिकाले वार्द्धकात्मक निवृत्तिकालावलम्बनीयव्रतावलम्बनदर्शनमेव मे प्रश्नकारणमिति भाव। अनेनोभयाशेऽपि विरूपयो सघटनया विषमालङ्कार।

(भ) तदिति। प्रतिभाति प्रतीतिविषयीभवति। अनेक सिद्ध साध्यश्च देवयानिविशेष सबाधानि सङ्कुलानि व्याप्तानि सुरलोकदेवगणस्तेषां विचरण रित्यर्थ। सुभगानि मनोहराणि दिव्याश्रमपदानि स्वर्गीयतपस्थानानि।

(म) कश्चेति। प्रकारो विशेष। यैरेव सर्वेषां शरीराण्यारब्धानि तैरेवेत्यर्थ। महाभूत क्षित्यप्तेजो

গৃহীত মনে করিতে ইচ্ছা করি। (প) আপনার দর্শন হইতে আরম্ভ করিয়া, এই বিষয়ে আমার অত্যন্ত কৌতুক জন্মিয়াছে। (ফ) আপনি জন্মগ্রহণ করিয়া কোন দেবতার বংশ, কোন ঋষির বংশ কোন গন্ধর্ববংশ কোন গুহ্যকবংশ কিংবা কোন অপ্সরার বংশ অনুগৃহীত করিয়াছেন? কি জন্যই বা কুসুমের ন্যায় কোমল এই নবীন বয়সে তপস্যা আরম্ভ করিয়াছেন?। (ব) এই বয়সই বা কোথায় আর এই তপস্যাই বা কোথায়? এই আকৃতি বা কোথায় এবং এই অসাধারণ লাবণ্যই বা কোথায় আর এই ইন্দ্রিয়গণের ভোগনিবৃত্তিই বা কোথায়? (ভ) অতএব এই সকল আমার নিকট অদ্ভুত বলিয়া বোধ হইতেছে। আর কি নিমিত্তই বা আপনি বহুতর সিদ্ধ ও সাধ্যগণে পরিপূর্ণ এবং দেবগণের বিচরণে মনোহর স্বর্গীয় আশ্রমসমূহ পরিত্যাগ করিয়া একাকিনী এই মানুষবিহীন বনে বাস করিতেছেন? (ম) আর এই রকমটাই বা কি যে পৃথিবীপ্রভৃতি সেই পঞ্চ মহাভূতেরই নির্ম্মিত আপনার এই শরীর, এইরূপ ধবলতা ধারণ করিতেছে? আমি পূর্ব্বে অন্য স্থানে এরূপ দেখি নাই

(१) किं वा। (२) सबाधानि। (३) सुलभानि। (४) ईदृश। (५) क्वचित् वाशब्दो नास्ति।

नयतु न कौतुकम्, आवेदयतु भवती सर्वमिदम् (य)। इत्येवमभिहिता सा किमप्यन्तर्ध्यायन्ती तूष्णीं मुहूर्त्तमिव स्थित्वा निःश्वस्य स्थूलस्थूलैरन्तर्गतां हृदयशुद्धिमिवादाय निर्गच्छद्भिः, इन्द्रियप्रसादमिव वर्षद्भिः, तपोरसनिस्यन्दमिव स्रवद्भिः लोचनविषयं धवलिमानमिव द्रवीकृत्य पातयद्भिः, अच्छाच्छैः, अमलकपोलस्थलस्खलितैः, अवशीर्णहार-मुक्त-मुक्ताफल-तरलपातैः, अनुबद्धविन्दुभिः, वल्कलावृत-कुच-शिखर-जर्जरित-शीकरैः, अश्रुभिरामीलितलोचना निःशब्दं रोदितुमारेभे (र)।

तां च प्ररुदितां दृष्ट्वा चन्द्रापीडस्तत्क्षणमचिन्तयत—'अहो! दुर्निवारता व्यसनोपनिपातानाम्, यदीदृशीमप्याकृतिमनभिभवनीयामात्मीयां कुर्वन्ति (ल)।

महदाश्चर्य्यात्मके आरब्धं जनितम् शरीरं तदेव वपुः। इदं वैलक्षण्यम्। दृष्टपूर्वं श्रुतपूर्वं वत्यर्थः। अतएव महदाश्चर्य्यमिति भावः।

(य) अपेति। अपनयतु दूरीकरोतु।

(र) इतीति। स्थूलस्थूलैरित्यादिकम् अनुबद्धविन्दुभिरश्रुभिरित्यस्य विशेषणम्। हृदयशुद्धिं चित्तस्य पवित्रतामादायेव निर्गच्छद्भिः। सर्वत्राश्रूणां विशुद्धत्वादिति भावः। इन्द्रियाणां नयनादीनां प्रसादं निर्म्मलतां सकामदृष्टिप्रभृतिदोषहीनतां वर्षद्भिरिव। तपसो रसा द्रवास्तेषां निस्यन्दं धारां स्रवद्भिः क्षरद्भिरिव। अत्र निरङ्गकेवलरूपकयोगः। लोचनविषयं दृश्यमानं धवलिमानं श्वेतत्वं द्रवीकृत्य पातयद्भिरिव। अत्र प्रत्येकं वाक्य एव क्रियोत्प्रेक्षालङ्कारः। अच्छाच्छैरतीवनिर्म्मलैः। अवशीर्णात् छिन्नात् हारात् मुक्तानां स्खलितानां मुक्ताफलानामिव तरलपातश्चञ्चलभावेन पतनं येषां तैः। अत्र लुप्तोपमालङ्कारः। अनुबद्धा अविच्छिन्नभावेनोत्पादिता विन्दवो यैस्तैः। वल्कलावृतयोः कुचयोः स्तनयोः शिखराभ्याम् उन्नताग्राभ्यां जर्जरिताः चूर्णीकृताः शीकराः कणा येषां तैः। एतेन स्तनयोरत्यौन्नत्यं काठिन्यञ्च व्यज्यते। अश्रुभिरुपलक्षिता आमीलितलोचना मुद्रितनयना।

(ल) तामिति। किञ्च तां चाथ। प्ररुदितामतीवरुदतीं गत्यर्थ त्यादिना कर्त्तरि क्तः। व्यसनोपनिपातानां विपदुपस्थितीनाम् दुर्निवारता निवारयितुमशक्यता। यद्यस्मात् अनभिभवनीयां तपस्वितया अभिभवितु

বা শুনিও নাই। (য) আপনি আমার কৌতুকনিবৃত্তি করুন, এই সমস্ত বিষয় বলুন। (র) চন্দ্রাপীড় এইরূপ বলিলে সেই কন্যাটী মনে মনে কোন বিষয় চিন্তা করত কিছু কাল নীরবে থাকিয়া, নিশ্বাস পরিত্যাগপূর্ব্বক মুদ্রিতনয়নে নিঃশব্দে রোদন করিতে লাগিল, তখন অত্যন্তনির্ম্মল বড় বড় অশ্রুবিন্দু তাহার নির্ম্মল গণ্ডস্থল বাহিয়া পড়িতে লাগিল, সেই অশ্রুবিন্দুগুলি যেন অন্তর্গত চিত্তশুদ্ধি লইয়া নির্গত হইতেছিল, ইন্দ্রিয়সমূহের নির্ম্মলতাই যেন বর্ষণ করিতেছিল, তপস্যারসের ধারাই যেন সৃষ্টি করিতেছিল এবং দৃষ্টিগোচর ধবলগুণকেই যেন তরল করিয়া নিপাতিত করিতেছিল, ছিন্ন হার হইতে বিগলিত মুক্তার ন্যায় চঞ্চলভাবে পড়িতেছিল, আর বল্কলাবৃত স্তনযুগলের উপরে পড়িয়া ক্ষুদ্র ক্ষুদ্র বিন্দুতে পরিণত হইয়া যাইতেছিল।

(ল) তখন চন্দ্রাপীড় তাহাকে রোদন করিতে দেখিয়া চিন্তা করিতে লাগিলেন—কি

मन्यमाना (ख)। अचिरेण च सत्वरतरलिकोपनीताभिश्चन्दनचर्चाभिस्ताल-वृन्तानिलैश्चोपलब्धसंज्ञा तामेवाकुलाकुलां मूर्त्तेनेवाधिष्ठितां विषादेन, मल्ललाट-विधृत स्रवच्चन्द्रकान्तमणिशलाकाम्, अविच्छिन्न-बाष्पजलधारान्धकारितमुखीं रुदतीं तरलिकामपश्यम् (ङ)। उन्मीलितलोचनाञ्च मां सा कृतपादप्रणामा चन्दनपङ्कार्द्रेण करयुगलेन बद्धाञ्जलिरवादीत्—'भर्त्तृदारिके! किं लज्जया गुरुजनापेक्षया वा। प्रसीद, प्रेषय माम् आनयामि ते हृदयदयितं जनम्, उत्तिष्ठ स्वयं वा तत्र गम्यताम्, अतः परमसमर्थास्मि सोढुमिमं प्रबलचन्द्रोदय विजृम्भ-माणोत्कलिकाशतमुदधिमिव मकरचिह्नम्" इत्येवंवादिनीं तामहमवोचम्—( )

(ङ) अचिरेणेति। किञ्च सत्वरया सत्वरया तरलिकया उपनीताभिः ताभिः चन्दनस्य चर्चाभिर्लेपनैः तरलिकाकृतैः तालवृन्तानिलैश्च अचिरेणाहम् उपलब्धसंज्ञा सती आकुलाकुलां ममावस्थादर्शनेन अतीवविह्वलाम् मूर्त्तेनेव मूर्त्तिमतेव विषादेन अधिष्ठितामाश्रिताम् मम ललाटे विधृता शान्त्यर्थं स्थापिता स्रवन्ती चन्द्रकरस्पर्शात् जलं क्षरन्ती चन्द्रकान्तमणिशलाका यया तां तथा अविच्छिन्नया बाष्पजलधारया अन्धकारितं सञ्जातान्धकारं मलिनमित्यर्थः मुखं यस्यास्ताम्। अत्र मूर्त्तेनेवेति मूर्त्तिमत्त्वाभिलोत्प्रेक्षा गुणोत्प्रेक्षालङ्कारः।

(च) उन्मीलितेति। किञ्च कृतः पादयोर्मम चरणयोः प्रणामो यया सा सा तरलिका। चन्दनस्य पङ्केन मदङ्गलेपनकाललग्नेन गाढद्रवेण आर्द्रं तेन। प्रबलः प्रकृष्टो यश्चन्द्रोदयस्तेन विजृम्भमाणं वर्द्धमानम् उत्कलिकाशतम् उत्कण्ठासमूहस्तरङ्गसमूहश्च यस्मिन् तं तादृशम् उदधिं समुद्रमिव मकरचिह्नं ध्वजरूपलक्षणं यस्य तं मकरकेतुं त्वयि समुत्पन्नं कामम् सोढुम् असमर्थास्मि। अतएव स्वयं वा तत्र गम्यतामिति भावः। अत्र पूर्णोपमालङ्कारः।

সময়ে চন্দ্রোদয়নিবন্ধন পদ্মবনের সঙ্কোচনিদ্রার ন্যায় মূর্চ্ছা আসিয়া আমার নয়নযুগল মুদ্রিত করিয়া ফেলিল। (ঙ) তখন তরলিকা সত্বর হইয়া আমার অঙ্গে চন্দন লেপন ও তাল-বৃন্তের বায়ু সঞ্চালন করিতে লাগিল তাহাতে আমি অচিরকালমধ্যে সংজ্ঞালাভ করিয়া সেই তরলিকাকেই রোদন করিতে দেখিলাম তখন সে আমার অবস্থা দেখিয়া অত্যন্ত বিহ্বল হইয়া পড়িয়াছিল বিষাদ যেন মূর্ত্তিমান্ হইয়া তাহার উপরে অধিষ্ঠান করিতেছিল আমার ললাটের উপরিভাগে জলস্রাবী একটী চন্দ্রকান্তমণির শলাকা ধারণ করিয়াছিল এবং অবিচ্ছিন্ন অশ্রুজলের ধারাতে তাহার মুখমণ্ডল মলিন করিয়াছিল। (চ) আমি নয়নযুগল উন্মীলন করিলাম তখন তরলিকা আমার চরণে প্রণাম করিয়া চন্দনের রসে আর্দ্র স্বকীয় হস্তযুগল-দ্বারা অঞ্জলি বন্ধন করিয়া আমাকে বলিল— রাজকন্যে। লজ্জা কিংবা গুরুজনের অপেক্ষা করিয়া ফল কি? আপনি প্রসন্ন হউন, আমাকে পাঠাইয়া দিন আমি আপনার প্রাণবল্লভকে আনয়ন করি অথবা উঠুন আপনি নিজেই সেইস্থানে গমন করুন ইহার পর আপনার এই কামবেদনা আমি আর সহ্য করিতে পারিব না, কারণ সুস্পষ্ট চন্দ্রোদয়ে সমুদ্রের তরঙ্গের ন্যায় আপনারও উৎকণ্ঠা শতগুণ বৃদ্ধি পাইতেছে তরলিকা এইরূপ বলিতেছিল

(१) तामवोचम्।

(च) "उन्मत्ते । किं मन्मथेन । नन्वयं सर्वविकल्पानपहरन्, (१) सर्वोपायदर्शनान्युत्सारयन्, सर्वानन्तरायान् (२) अन्तरयन्, सर्वशङ्कास्तिरस्कुर्वन्, लज्जामुन्मूलयन्, स्वयमभिगमनलाघवदोषमावृण्वन् कालातिपातं परिहरन्, आगत एव मृत्योस्तस्यैव वा सकाशं नेता कुमुदबान्धवः (क)। तदुत्तिष्ठ यथाकथञ्चिदनुगमनेन जीविता (३) सम्भावयामि हृदयदयितमायासकारिणं जनम्" इत्यभिदधाना मदनमूर्च्छास्वेदविह्वलैरङ्गैः कथञ्चिदवलम्ब्य तामेवोदतिष्ठम् (ख)। उच्चलितायाश्च मे दुर्निमित्तनिवेदकमस्पन्दत दक्षिणं लोचनम्। उपजातशङ्का चाचिन्तयम्— इदमपरं किमप्युपक्षिप्तं दैवेन" इति (ग)।

(क) उन्मत्त इति। हे उन्मत्ते ! नानाविधप्रलापादस्य च वास्तविकार्थानवबोधादिति भावः। मन्मथेन किम् एकेन कन्दर्पेण किं कृतमित्यर्थः। नन्वित्यामन्त्रणे। येन हि मृत्योः सकाशं तत्सन्निगमने मदनात्याचारात् मृत्योरन्तिकम् वा अथवा स ते सम्भवे तस्य कुमारस्य च सकाशं नेता मां प्रापयिता अयं कुमुदानां बान्धवश्चन्द्रः सर्वान् विकल्पान् उत्कल्पान् वितर्कान् अपहरन् दूरीकुर्वन् कामिकासह्यताप्रतिपादनेन अवसरप्रदानादिति भावः सर्वेषामुपायानां मदनवेदनानिवृत्तिहेतुभूतानां चन्दनरसलेपनादीनां दर्शनानि तद्वेदनानिवर्त्तकत्वेन ज्ञानानि उत्सारयन् विनाशयन् आत्मप्रभावेण तत्सन्निवृत्त्यसम्भवात् सर्वान् अन्तरायान् लोकसाक्षात्कारादीन् विघ्नान् अन्तरयन् व्यवधापयन् स्वजनितोत्कण्ठाया प्रबलत्वात् सर्वशङ्काः पित्राद्यनपेक्षानिबन्धनास्तङ्काः तिरस्कुर्वन् न्यक्कुर्वन् इदानीन्तनीत्कण्ठातस्तादृशाशङ्कानां सर्वथा दुर्बलत्वात् लज्जामुन्मूलयन् एतदुत्कण्ठान्तिके लज्जायास्तुच्छत्वात् स्वयमभिगमनेन यः आत्मनो लाघवः लघुतारूपो दोषस्तम् आवृण्वन् आच्छादयन् इदानीन्तनीत्कण्ठाया सर्वापरिवर्त्तित्वात् कालातिपातं परिहरन् मदनवेदनाया सर्वथा असह्यत्वात् आगत एव मां तत्र नेतुमुपस्थित एव। सुतरां नास्ति विविधकल्पप्रकाशप्रयोजनमिति भावः।

(ख) तदिति। तत्तस्मात्हेतोः। यथाकथञ्चित् कष्टेनापीत्यर्थः दारुणमदनवेदनावशादसारशरीरतयेति भावः अनु तं कुमारं लक्ष्यीकृत्य गमनेन जीविता अहम् आयासकारिणं तदुद्देशेनैव तावत्क्लेशोत्पादकं शश्वदायिनं हृदयदयितं तं जनं सम्भावयामि उच्छ्वासयामि। एतेन सम्मेलनाभावे स चाहञ्च मरिष्याव इति सूचितम्। मदनमूर्च्छया कामवृत्त्या यः स्वेदो घर्मस्तेन विह्वलैरङ्गैरुपलक्षिता तामेव तरलिकां कथञ्चिदवलम्ब्य कष्टेन विधृत्य।

তখন আমি তাহাকে বলিলাম—(ক) "উন্মত্তে। কন্দর্প একাকী কি করিয়াছেন, দেখ যিনি মৃত্যু কিংবা সেই কুমারেরই নিকট আমাকে নিয়া যাইবেন এই সেই চন্দ্র উপস্থিতই হইয়াছেন, ইনি সকল বিতর্ক খণ্ডন করিতেছেন, সকল প্রকার উপায় নিশ্চয় করা দূর করিয়াছেন সকল প্রতিবন্ধক সরাইয়া দিয়াছেন সকল আশঙ্কা নীচে ফেলিয়াছেন লজ্জা বিনষ্ট করিয়াছেন, আপনা আপনিই তাঁহার নিকট গমন করায় যে লঘুতা প্রকাশ পায় সে দোষ ঢাকিয়া ফেলিয়াছেন এবং কালক্ষেপ করা দূর করিয়াছেন (খ) অতএব উঠ জীবিত থাকিতে থাকিতে যে কোন প্রকারে তাঁহার নিকট গমন করিয়া, ক্লেশদায়ক সেই প্রাণবল্লভকে জীবিত রাখি, এই কথা বলিতে বলিতে কামপীড়া বৃদ্ধি পাওয়ায় ঘর্ম নির্গত

(१) अपाहरन्। (२) क्वचित् सर्वानिति नास्ति। (३) अनुद्गतजीविता।

अथ नातिदूरोद्गतेन त्रिभुवनप्रासादमहाप्रणालानुकारिणा सुधासलिलप्रवाहानिव (१) वहता चन्दनरसनिर्झरनिकरानिव क्षरता अमृतसागरपूरानिवोद्गिरता श्वेतगङ्गाप्रवाहसहस्राणीव वमता चन्द्रमण्डलेन प्लाव्यमाने (२) ज्योत्स्नया भुवनान्तराले (घ) श्वेतद्वीपनिवासमिव सोमलोकदर्शनसुखमिवानुभवति जने, (ङ) महावराहदंष्ट्रामण्डलनिभेन शशिना क्षीरसागरोदरादिवोद्ध्रियमाणे महीमण्डले, (च) प्रतिभवनमङ्गनाजनेन विकचकुमुदगन्धैश्चन्दनो

(ग) उच्चलिताया इति। किञ्च उच्चलितायास्तु प्रति प्रस्थिताया मे दक्षिणं लोचनं दुर्निमित्तनिवेदकम् अशुभसूचकं यथा स्यात्तथा अस्पन्दत। किमपि अशुभमित्यर्थः उपक्षिप्तम् उपस्थापितम्। स्त्रीणां दक्षिणनयनस्पन्दनस्य अनिष्टसूचकत्वादिति भावः।

(घ) अथेति। अथानन्तरं प्रदोषसमय एव तस्मात् प्रासादशिखरान्नातिदूरमिति दूरेणान्वयः। त्रिभुवनमेव प्रासादस्तस्य महाप्रणालं विशालजलनिर्गमनमार्गम् अनुकरोतीति तेन। सलिलतुल्यशीतलकिरणनिःसारणात् वर्तुलत्वाच्च सौधोपरिप्रान्तवर्त्ति वर्तुलाकारप्रणालानुकारित्वं चन्द्रस्येति बोध्यम्। अत्र निरङ्गकेवलरूपकार्थोपमयोरैकाश्रयानुप्रवेशरूपः सङ्करः। सुधा सौधलेपनद्रव्यं तद्युक्तं सलिलमिति सुधासलिलं तस्य प्रवाहान् वहतेव तादृशश्वेतकिरणादिति सर्वत्र भावः। चन्दनरसस्य निर्झरनिकरान् धारासमूहान् क्षरतेव। अमृतसागरस्य सुधासमुद्रस्य पूरानोघान् उद्गिरतेव। तथा श्वेतगङ्गायाः प्रवाहाणां सहस्राणि वमतेव। चन्द्रमण्डलेन कर्त्रा ज्योत्स्नया करणेन भुवनान्तराले प्लाव्यमाने सति। अत्र उक्तसङ्करस्य चतसृणां क्रियोत्प्रेक्षाणाञ्च परस्परनिरपेक्षतया संसृष्टिः। केवलशुभ्रताद्योतनाय यमुनाजलाद्यसम्पृक्तभागबोधनाय श्वेतगङ्गेति श्वेतपदम्।

(ङ) श्वेतेति। जने लोके श्वेतद्वीपे निवासमवस्थितिमिव तथा सोमलोकस्य दर्शनसुखमिव अनुभवति सति सर्वत्र श्वेतानुभवादिति भावः। अत्र क्रियोत्प्रेक्षागुणोत्प्रेक्षयोर्मिथो निरपेक्षतया संसृष्टिः।

(च) महीति। महीमण्डले महावराहस्य नारायणतृतीयावतारस्य दंष्ट्रामण्डलनिभेन शुभ्रत्वादिति भावः शशिना क्षीरसागरस्य उदरादभ्यन्तरादुद्ध्रियमाण इव सति क्षीरक्षरणवत् सर्वतः श्वेतकिरणप्रसरणादिति भावः। अत्रार्थोपमाक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

হইয়া আমার সকল অঙ্গ বিকল করিয়া ফেলিল, এই অবস্থায় আমি সেই তরলিকাকেই অবলম্বন করিয়া কোন প্রকারে গাত্রোত্থান করিলাম। (গ) উঠিয়া সেই দিকেই চলিলাম, তখন আমার দক্ষিণ নয়ন স্পন্দিত হইয়া অমঙ্গল সূচনা করিল তাহাতে আশঙ্কা জন্মিল, তাই চিন্তা করিলাম যে "বিধাতা এই আর একটী কিছু উপস্থিত করিলেন।

(ঘ) তদনন্তর চন্দ্রমণ্ডল আকাশের অনতিদূরে উঠিয়া জ্যোৎস্নাদ্বারা সমস্ত জগতের মধ্যস্থান প্লাবিত করিল, তখন সেই চন্দ্রমণ্ডলটী, ত্রিভুবনরূপ অট্টালিকার উপরিভাগের নর্দামার নলের অনুকরণ করিতেছিল চূর্ণযুক্ত জলধারা যেন বহন করিতেছিল চন্দনরসের প্রবাহসমূহ যেন নিঃসারণ করিতেছিল অমৃতসমুদ্রের জলরাশি যেন উদ্গিরণ করিতেছিল এবং শ্বেতগঙ্গার অসংখ্য প্রবাহ যেন বমন করিতেছিল। (ঙ) জগতের লোক যেন শ্বেতদ্বীপে বাস করিতেছিল এবং চন্দ্রলোকদর্শনের সুখ যেন অনুভব করিতেছিল। (চ) আদিবরাহের

(१) पूरानिव। (२) अप्लाव्यमाने।

दर्घेष्वपक्रियमाणेषु चन्द्रोदयार्घेषु, (छ) कामिनी प्रहित सुरत दूती सहस्र सङ्कुलेषु राजमार्गेषु, (ज) नीलांशुकावगुण्ठनासु चन्द्रालोकभयचकितासु कमलवनलक्ष्मीष्विव नीलोत्पलप्रभापिहितासु इतस्ततः पलायमानास्वभिसारिकासु, (झ) प्रतिकुमुद-मावद्धमधुकरमण्डलासु प्रबुध्यमानासु भवनदीर्घिकाकुमुदिनीषु, (ञ) स्फुटित कुमुदवन बहल धूलि धवलितोदरे निम्ना-नदी-पुलिनायमाने अम्बरीचे, (१) (ट) चन्द्रोदयानन्दनिर्भरे महोदधाविव रतिरसमय इव उत्सवमय इव विलासमय इव

(छ) प्रतीति। प्रतिभवनं प्रत्येकगृहे अङ्गनाजनेन कर्त्रा विकचानां प्रस्फुटितानां कुमुदानां गन्धो येषु तत्ताहृशैश्चन्दनोदकैः करणैः चन्द्रोदयार्घेषु उपक्रियमाणेषु दीयमानेषु सत्सु।

(ज) कामिनीति। राजमार्गेषु कामिनीभिः प्रहिताः प्रियतमान्तिकेषु प्रेरिता याः सुरतदूत्यस्तासां सहस्रेण समूहेन सङ्कुलेषु सत्सु।

(झ) नीलेति। नीलांशुकं कृष्णवर्णं वसनं अवगुण्ठनम् अन्धकारसाम्येन तत्र लोकानामदर्शनार्थं शरीरवेष्टनं यासां तासु अतएव नीलोत्पलानां प्रभाभिः पिहितासु आच्छादितासु कमलवनलक्ष्मीष्विव अभिसारिकासु नायिकाविशेषेषु चन्द्रस्य आलोकेन प्रकाशेन यद्भयं लोककर्तृकदर्शनाद्भयं तेन चकितासु उद्विग्नासु सतीषु इतस्ततः पलायमानासु सतीषु। अत्र पदार्थहेतुककाव्यलिङ्गसङ्कीर्णा श्रौतोपमालङ्कारः। अभिसारिकालक्षणमुक्तं साहित्यदर्पणे—

अभिसारयते कान्तं या मन्मथवशंवदा। स्वयं वाभिसरत्येषा धीरैरुक्ताभिसारिका॥

(ञ) प्रतीति। कुमुदं कुमुदं प्रतीति प्रतिकुमुदम् आवद्धं धृतं मधुकरमण्डलं भ्रमरसमूहो याभिस्तासु भवनदीर्घिकायाः कुमुदिनीषु प्रबुध्यमानासु प्रकाशमानासु सतीषु। अत्र चन्द्रोदयेन समस्तकुमुदिनीनामेव प्रकाशात् भवनदीर्घिकापदोपादानेन अविशेषे विशेषाख्यदोषः स च भवनदीर्घिकापदपरिहारेणैव परिहरणीयः।

(ट) स्फुटितेति। अम्बरीचे आकाशे स्फुटितस्य कुमुदवनस्य बहलधूलिभिः प्रचुरपरागैः धवलिः शुभ्रीकृतम् उदरमभ्यन्तरं यस्य तस्मिन् ताहृशे सति अतएव निम्नैव नदी नीलत्वसाम्यादिति भावः तस्याः पुलिनायमाने तीरोत्थवालुकामयदेशवदाचरति सति परागाणां वालुकावज्ज्वलत्वादिति भावः। अत्र पदार्थहेतुकं काव्यलिङ्गं निरङ्गकेवलरूपकाख्यङ्ग गतोपमयोरेकाश्रयानुप्रवेशरूपः सङ्करः त्वनयोः पुनरङ्गाङ्गिभावेन सङ्करः।

দন্তমণ্ডলের তুল্য চন্দ্রমণ্ডল যেন পৃথিবীমণ্ডলকে ক্ষীরোদসাগরের ভিতর হইতে উত্তোলন করিতেছিল। (ছ) প্রত্যেক গৃহে রমণীগণ প্রস্ফুটিত কুমুমযুক্ত চন্দনজলদ্বারা চন্দ্রোদয়ের উদ্দেশে অর্ঘ দান করিতেছিল। (জ) রাজপথগুলি কামিনীগণের প্রেরিত রতিদূতীগণে ব্যাপ্ত হইয়াছিল। (ঝ) অভিসারিকা নায়িকাগণ নীলবর্ণ বসনে সমস্ত শরীর আবৃত করিয়া, নীলোৎপলের প্রভায় আচ্ছাদিত পদ্মবনের শোভার ন্যায় বিরাজ করিতে থাকিয়া, চন্দ্রের আলোকমধ্যে লোকের দর্শনের ভয়ে উদ্বিগ্ন হইয়া চারিদিকে পলায়ন করিতে লাগিল। (ঞ) বাটীস্থিত দীর্ঘিকার কুমুদিনীগুলি প্রস্ফুটিত হইল তাহাতে প্রত্যেক কুমুদের উপর ভ্রমরগণ আসিয়া বসিতে লাগিল। (ট) প্রস্ফুটিত কুমুদের রেণুতে আকাশের মধ্যস্থান ধবলবর্ণ করিয়া তুলিল তাহাতে আকাশটী রাত্রিরূপ নদীর পুলিনের ন্যায় বিরাজ করিতে

(१) अम्बरीचे।

श्रृङ्गारमय इव जीवलोके, (ठ) शशिमणिप्रणालनिर्झरे प्रमोदमुखरमयूररवरम्ये प्रदोषसमये, (ड) गृहीत-विविधकुसुम-ताम्बूलाङ्गराग पटवासचूर्णया तरलिकयानुगम्यमाना, तेनैव मूर्च्छानिहितेन किञ्चिदाश्यान चन्दनललाटिका लग्न धूसरा कुलालकेन चन्दनरसचर्च्चाङ्गरागवेशेनार्द्रेण (१) तथैव च तया कण्ठस्थितयाक्षमालया श्रवणशिखरचुम्बिन्या च पारिजातमञ्जर्य्या, पद्मरागरत्नरश्मिनिर्म्मितेनेव रक्तांशुकेन कृतशिरोऽवगुण्ठना केनचिदालोकयेनापि परिजनेनानुपलक्ष्यमाणा तस्मात् प्रासादशिखरादवातरम् (ढ)।

(ठ) चन्द्रोदयेति। चन्द्रस्य उदयेन आनन्दनिर्भरः प्रमोदातिशयो यस्मिन् तादृशे अतएव महोदधाविव स्फीते इति शेषः जीवलोके प्राणिगणे रतिरसमये इव शृङ्गारमये इव उत्सवमये इव विलासमये इव तथा प्रीतिमये इव च सति। अत्र पदार्थहेतुककाव्यलिङ्गोपमयोरङ्गाङ्गिभावेन सङ्करः अनयोः गुणोत्प्रेक्षायाश्च इत्य तासां मिथो निरपेक्षतया पुनः संसृष्टिः तथा रतिरसेति स्थायिभावस्य स्वशब्दोक्तिदोषः रसस्य स्वशब्दोक्तिदोषश्च तौ च उत्कण्ठामय इवेति पाठेन समाधेयौ।

(ड) शशीति। शशिमणयश्चन्द्रकिरणस्पर्शेन जलस्राविणश्चन्द्रकान्ता एव प्रणाला जलनिर्गमनालानि तेषां निर्झरो यस्मिन् तादृशे तथा प्रमोदेन मुखराणां शब्दायमानानां मयूराणां रवैः रम्ये मनोहरे प्रदोषसमये जाते सति। अत्र निरङ्गकेवलरूपकमलङ्कारः।

(ढ) गृहीतेति। गृहीतानि विविधानि कुसुमानि ताम्बूलानि अङ्गराग पटवासचूर्णानि च यया तया। मूर्च्छानिहितेन मूर्च्छाकाले तरलिकया दत्तेन। किञ्चिदाश्याना कालेन शुष्कतया ईषद्घनीभूता या चन्दनस्य ललाटिका ललाटे तिलकविशेषस्तत्र लग्ना अतएव धूसरा आकुला विकीर्णा अलका स्खलितकुन्तला यत्र तेन। आर्द्रेण तदानीमपि किञ्चित् क्लिन्नेन। चन्दनरसस्य चर्च्चा लेपनमेवाङ्गरागः स एव च वेशस्तेन उपलक्षिता। किञ्च तथैव तदानीं दत्तरूपेणैव कण्ठस्थितया अक्षमालया तस्य कुमारस्य जपमालया चोपलक्षिता। तथा

লাগিল। (ঠ) চন্দ্রের উদয়ে আনন্দে পরিপূর্ণ প্রাণিগণ মহাসমুদ্রের ন্যায় স্ফীত হইয়া যেন শৃঙ্গারময় উৎসবময় বিলাসময় এবং হর্ষময় হইয়া উঠিল। (ড) চন্দ্রকান্তমণিরূপ পয়নালা হইতে জলনিঃসরণ হইতে লাগিল, এইভাবে আমোদবশতঃ শব্দায়মান ময়ূরগণের রবে মনোহর হইয়া প্রদোষকাল উপস্থিত হইল। (ঢ) এমন সময়ে আমি পদ্মরাগমণির কিরণে নির্ম্মিতের ন্যায় একখানি রক্তবর্ণ বসনে মস্তক অবগুণ্ঠন করিয়া সেই অট্টালিকার উপর হইতে নামিলাম তখন তরলিকা নানাবিধ পুষ্প তাম্বূল অঙ্গলেপনদ্রব্য ও আবীর চূর্ণ লইয়া আমার পশ্চাৎ পশ্চাৎ আসিতে লাগিল। তরলিকা আমার ললাটে যে চন্দনের টিপ দিয়াছিল তখন তাহা কিছু ঘন হইয়া গিয়াছিল সুতরাং আলুলায়িত কেশকলাপ তাহার উপরে সংলগ্ন হইয়া ধূসরবর্ণ হইয়াছিল আর মূর্চ্ছার সময়ে আমার শরীরে তরলিকা যে চন্দন লেপন করিয়া দিয়াছিল তখনও তাহা আর্দ্র ছিল এবং সেই মাত্র আমার বেশবিন্যাস হইয়াছিল, সেই জপের মালা তখনও সেইভাবেই আমার গলায় ছিল এবং সেই পারিজাত-

(१) आर्द्रेण च।

অবতীর্য্য চ পারিজাতকুসুম মঞ্জরী-পরিমলাকৃষ্টেন রিক্তীকৃতোপবনেন কুমুদ বনান্যপহায় ধাবতা মধুকরজালেন নীলপটাবগুণ্ঠনবিভ্রমমিব (১) সম্পাদয়তানুবধ্যমানা প্রমদবনপক্ষদ্বারেণ নির্গত্য তৎসমীপমুদচলম্ (গ)।

প্রয়ান্তী চ তরলিকাদ্বিতীয়মপরিজনম্ (২) আত্মানমালোক্য (৩) অচিন্তয়ম্— "প্রিয়তমাভিসরণপ্রবৃত্তস্য জনস্য কিমিব কৃত্যং বাহ্যেন পরিজনেন (ত)। নন্বেত এব পরিজনলীলামুপদর্শয়ন্তি। তথাহি, সমারোপিতশরাসনাসক্তসায়কো ঽনুসরতি কুসুমায়ুধ, দূরপ্রসারিতকর করমিব কর্ষতি শশী, প্রস্খলনভয়াৎ পদে

প্রবণশিখরচুম্বিন্যা কর্ণোপরিবর্ত্তিন্যা তয়া পারিজাতমঞ্জর্য্যা চোপলক্ষিতা। তথা পদ্মরাগরত্নস্য রশ্মিভি কিরণৈ নির্ম্মিতেনেব রক্তত্বসাম্যাদিতি ভাব রক্তাংশুকেন কৃত শিরস অবগুণ্ঠন যয়া সা। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার।

(গ) অবেতি। পারিজাতকুসুমমঞ্জর্য্যা পরিমলেন সৌরভেণ আকৃষ্ট তেন। রিক্তীকৃত সর্ব্বেষামেবাগমনাৎ শূন্যীকৃতম্ উপবনং যেন তেন। নীলপটেন যদবগুণ্ঠনং তস্য বিভ্রমং বিলাসং শোভাং সম্পাদয়তেব মস্তকোপরি ভ্রমণাদিতি ভাব মধুকরজালেন ভ্রমরসমূহেন অনুবধ্যমানা অনুগম্যমানা অহম্ প্রমদবনস্য স্বকীয়োপবনস্য পক্ষদ্বারেণ পার্শ্বদ্বারং নির্গত্য তস্য কুমারস্য সমীপম্ উদচলম্ প্রস্থিতবতী। অত্রাপি ক্রিয়োৎপ্রেক্ষালঙ্কার।

(ত) প্রয়ান্তীতি। তরলিকা এব দ্বিতীয়া যস্য তম্ অতএব অপরিজনম্ অন্যপরিজনরহিতম্। অত্র উদচলমিত্যভিধায় প্রয়ান্তীত্যভিধানাৎ এবমুক্তা মন্ত্রিমুখ্য রাবণ প্রত্যভাষত। ইতি দর্পণোদাহৃতবদ্ভগ্নপ্রক্রমতাদোষ স চ প্রাসাদশিখরাদবাতরম্। অবতীর্য্য চ ইত্যুক্তবৎ প্রয়ান্তীত্যত্র উদচলন্তী ইতি পাঠেন সমাধেয়। প্রিয়তমস্য প্রিয়তমায়া বা অভিসরণে প্রবৃত্তস্য জনস্য নায়িকায়া নায়কস্য বা বাহ্যেন বহিরঙ্গেন পরিজনেন কিং নাম কৃত্যং কর্ত্তব্যং প্রয়োজনমস্তি অপি তু কিমপি নেত্যর্থ।

(থ) ননু নহি রক্ষণাবেক্ষণাদিকং পরিজনকার্য্যং ক কর্ত্তব্যমিত্যাহ নন্বিতি। নন্বিত্যবধারণে। এতে বক্ষ্যমাণা কুসুমায়ুধাদয় পরিজনস্য লীলাং ব্যবহারম্। সমারোপিতশরাসনে সজ্যে ধনুষি আসক্ত সায়কো যস্য স তাদৃশ কুসুমায়ুধ অনুসরতি। এতেনাস্য পৃষ্ঠরক্ষিত্বং সূচিতম্। দূরং প্রসারিত কর কিরণো হস্তশ্চ যেন স তাদৃশ শশী কর কর্ষতীব হস্তমাকৃষ্য নয়তীব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার। রাগোঽনুরাগ প্রস্খলনভয়াৎ

মঞ্জরীটীও সে ভাবেই আমার কাণের উপরে ছিল আমি নামিলাম বটে, কিন্তু আমার কোন পরিজনও আমাকে দেখিতে পাইল না।

(গ) আমি নামিয়া উদ্যানের পার্শ্বদ্বার দিয়া নির্গত হইয়া তাঁহার নিকট চলিলাম তখন ভ্রমরগণ পারিজাতপুষ্পমঞ্জরীটীর সৌরভে আকৃষ্ট হইয়া উদ্যানটী শূন্য করিয়া এবং কুমুদবন পরিত্যাগ করিয়া নীলবর্ণ বসনের অবগুণ্ঠনশোভাই যেন সম্পাদন করিতে করিতে আমার পশ্চাৎ পশ্চাৎ আসিতে লাগিল।

(ত) আমি যাইবার সময়ে আপনাকে কেবল তরলিকাসহায় ও অন্য পরিজন বিহীন দেখিয়া চিন্তা করিতে লাগিলাম—"যে ব্যক্তি বল্লভজনের নিকট অভিসারে প্রবৃত্ত হয় তাহার আবার বাহিরের পরিজনে প্রয়োজন কি ?। (থ) কারণ, ইঁহারাই পরিজনের কার্য্য সম্পাদন করিয়া থাকেন। যথা—কামদেব সজ্য ধনুতে বাণ সন্ধান করিয়া অনুসরণ করিতে থাকেন,

(১) বিভ্রমমিব। (২) তরলিকাদ্বিতীয়পরিজনম্। (৩) অবলোক্য।

पदे पदे ऽवलम्बते रागः, लज्जां पृष्ठतः कृत्वा पुरः सर्वेन्द्रियैर्धावति हृदयम्, निश्चयमारोप्य नयत्युत्कण्ठा" इति (थ)। प्रकाशञ्चावदम्—"अयि तरलिके! अपि नाम मामिवायमिन्दुहतकस्तमपि करैः (१) कचग्रहाकृष्टमभिमुखमानयेत्" (द)। इत्येवं वादिनीञ्च मामसौ विहस्याब्रवीत्—"भर्तृदारिके! मुग्धासि, किमस्य तेन जनेन। अयमात्मनैव तावन्मदनातुर इव भर्तृदारिकायां (२) नानाचेष्टाः करोति। तथाहि, प्रतिबिम्बच्छलेन स्वेदसलिलकणिकाचिते (३) चुम्बति कपोलयुगलम्, लावण्यवति पयोधरभारे निपतति, प्रस्फुरितकरः स्पृशति रसनाकलि-

पदे पदे प्रतिपदक्षेपम् अवलम्बते धारयति। अनयोः पार्श्वरचितत्वं ध्वनितम्। हृदयं कर्त्तृ लज्जां पृष्ठतः कृत्वा पृष्ठे समादाय दूरीकृत्य च इन्द्रियैः नयनादिभिः सह पुरः अग्रतो धावति तथा निश्चयमारोप्य ध्रुवं तव प्रियसमागमो भविष्यतीति निश्चयबुद्धिमुत्पाद्य नयति। अनयोः सम्मुखरचितत्वं प्रतिपादितम्।

(द) प्रकाशमिति। अपि नाम अयमिन्दुहतकः खलस्वभावश्चन्द्रः मामिव तमपि कुमारं करैः किरणैरेव पाणिना कचेषु केशेषु यो ग्रहो ग्रहणं तेन आकृष्टः सन् ममाभिमुखमानयेत्। तथा सति सत्वरलाभेन भद्रं भवेदिति भावः। अत्र किरणहस्तयोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्तिरलङ्कारः।

(ध) इतीति। असौ तरलिका। मुग्धा सरलबुद्धिरसि अतएव ब्रवीषीति भावः। अस्य चन्द्रस्य तेन जनेन कुमारेण किं प्रयोजनम्। अयं चन्द्रः आत्मनैव स्वयमेव। तास्ताः मदनातुरसम्बन्धिनीः सर्वाः चेष्टा व्यवहारान् करोति। स्वेदसलिलकणिकाचिते घर्म्मजलबिन्दुव्याप्ते तव कपोलयुगलं प्रतिबिम्बच्छलेन चुम्बतीव। अत्र सापह्नवा प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। न तु काव्ये च कामुकव्यवहारसमारोपेऽपि समासोक्तिः अयमात्मनैव तावदित्यादिना द्वयोरपि प्रस्तुतत्वात् प्रस्तुते अप्रस्तुतव्यवहारसमारोपस्यैव समासोक्तिविषयत्वात्। लावण्यवति पयोधरभारे तव विस्तृतस्तनयुगले निपतति प्रतिबिम्बच्छलेन लगतीव वक्षसा नायकवदिति भावः। अत्रापि पूर्ववदलङ्कारः। प्रस्फुरितः प्रदीप्तः सात्त्विकभावोदयात् प्रकम्पितश्च करः किरणो हस्तश्च यस्य स तादृशः सन् रसनाकलीः काञ्चीदाम नवीन् स्पृशति नीवीस्खलनसमये नायकवदिति भावः। अत्र किरणहस्तयोर्भेदेऽपि श्लेषेणाभेदाध्य

চন্দ্র, দূরে কর প্রসারিত করিয়া হস্তধারণ করিয়াই যেন নিয়া যাইতে থাকেন পড়িয়া যাইবার ভয়ে, অনুরাগ আসিয়া প্রত্যেক পদক্ষেপে ধারণ করিতে থাকে মন লজ্জাকে পিছনে রাখিয়া অন্যান্য ইন্দ্রিয়ের সহিত অগ্রে অগ্রে ধাবিত হইতে থাকে এবং "নিশ্চয়ই প্রিয়তমের সহিত সম্মেলন হইবে, এইরূপ নিশ্চয় ধারণা জন্মাইয়া উৎকণ্ঠা আসিয়া নিয়া যাইতে থাকে।" (দ) তাহার পর, প্রকাশ করিয়া কহিলাম—"তরলিকে! এই খলস্বভাব চন্দ্র আমার ন্যায় তাঁহাকেও করদ্বারা কেশধারণপূর্ব্বক আকর্ষণ করিয়া আমার দিকে কিছু পথ আনিবে কি?" (ধ) আমি এইরূপ বলিতেছিলাম, তখন তরলিকা হাস্য করিয়া আমাকে বলিল—"রাজকন্যে! আপনি সরলবুদ্ধি কি না তাই এইরূপ বলিতেছেন, প্রকৃতপক্ষে সেই ব্যক্তিদ্বারা চন্দ্রের প্রয়োজন কি? চন্দ্র যে নিজেই কামাতুরের ন্যায় আপনার প্রতি সেই সকল ব্যবহার করিতেছে। দেখুন—ঘর্ম্মজলবিন্দুসমূহে ব্যাপ্ত আপনার গণ্ডযুগলকে প্রতিবিম্বচ্ছলে যেন

(১) কিরণৈঃ। (২) ভর্ত্তৃদারিকায়াঃ। (৩) আচিতে।

মণীন্, নির্ম্মল-নখ-লগ্নমূর্ত্তি পাদয়ো পততি (ধ)। কিঞ্চাস্য মদনাতুরস্যেব বপুস্তাপাচ্ছুষ্কচন্দনানুলেপপাণ্ডুতা বহতি, (১) মৃণালবলয়ধবলান্ করান্ ধত্তে, প্রতিমাব্যাজেন স্ফটিকমণিকুট্টিমেষু নিপততি, কেতকী গর্ভ-কেসর-ধূসর পাদ কুমুদসরাংস্যবগাহতে, সলিলশীকরার্দ্রান্ শশিমণীন্ করৈরামৃশতি, দ্বেষ্টি বিঘটিত চক্রবাকমিথুনানি কমলবনানি।” এতৈশ্চান্যৈশ্চ তৎকালোচিতৈরালাপৈস্তয়া সহ তমুদ্দেশমভ্যুপাগমম্ (ন)।

বসায়াদতিশয়োক্তিরলঙ্কার। তথা নির্ম্মলেষু নখেষু তব চরণনখেষু লগ্না সংক্রান্তা মূর্ত্তি যস্য স তাদৃশ সন্ তব পাদয়ো পততীব অপরাদ্ধনায়কবদিতি ভাব। অত্র প্রতীয়মানা ক্রিয়োৎপ্রেক্ষালঙ্কার।

(ন) কিঞ্চেতি। কিঞ্চ অপি চ। মদনাতুরস্যেব অস্য চন্দ্রস্য বপু কর্ত্ত তাপাৎ মদনসন্তাপাদিব শুষ্কো যশ্চন্দনস্য অনুলেপ প্রলেপস্তদ্বৎ পাণ্ডুতাং বহতি ধারয়তি। অত্রোপমাসঙ্কীর্ণা প্রতীয়মানা হেতূৎপ্রেক্ষালঙ্কার। মৃণালবলয়বৎ ধবলান্ মৃণালবলয়েন ধবলাশ্চ করান্ কিরণানেব হস্তান্ ধত্তে মদনসন্তাপজনবদিতি ভাব। অত্র কিরণহস্তয়োর্ভেদেऽপি শ্লেষেণাভেদাধ্যবসায়াদতিশয়োক্তিরলঙ্কার। প্রতিমাব্যাজেন প্রতিবিম্বচ্ছলেন স্ফটিক মণীনাং কুট্টিমেষু বদ্ধভূমিষু নিপততি লুঠতি মদনাতুরবৎ সন্তাপনিবৃত্ত্যর্থমিতি ভাব। অত্রাপহ্নুতিরলঙ্কার। কেতক্যা পুষ্পস্য গর্ভকেসরবৎ অভ্যন্তরস্থকিঞ্জল্কবৎ ধূসর পাদ কিরণ এব চরণৌ যস্য স তাদৃশ প্রতিমাব্যাজেন কুমুদসরাংসি কৈরবপূর্ণ সরোবরান্ অবগাহতে মদনসন্তাপশান্ত্যর্থমিতি ভাব। অত্রাপ্যপহ্নুতিরলঙ্কার পূর্ব্ববদতি শয়োক্তিশ্চ অনয়োরঙ্গাঙ্গিভাবেন সঙ্কর। মদনতাপেন চরণস্যাপি পাণ্ডুতা জাতেতি প্রদর্শনার্থ কেতকীত্যাদিবিশেষণমিতি নাপুষ্টার্থতাদোষ। সলিলশীকরৈ স্বস্পর্শেন নিঃসৃতজলবিন্দুভি আর্দ্রা ক্লিন্নাস্তান্ শশিমণীন্ চন্দ্রকান্তান্ কর কিরণৈরিব হস্ত আমৃশতি স্পৃশতি মদনতাপনিবৃত্ত্যর্থমিতি ভাব। অত্রাপ্যভেদাধ্যবসায়মূলাতিশয়োক্তিরলঙ্কার। তথা বিঘটিতানি রাত্রিবিয়োগস্য নৈসর্গিকত্বাদ্বিযুক্তানি চক্রবাকানাং পক্ষিণাং মিথুনানি দম্পতয় যেভ্যস্তানি তাদৃশানি কমলবনানি দ্বেষ্টি এভিরেব কমলবনশ্চক্রবাকমিথুনানি বিঘটিতানীতি মন্যমানস্তানি সঙ্কোচয়ন্ তেষু বিদ্বেষ করোতীব যে কিল প্রিয়তময়ো সম্মিলন ন সহন্তে তান্ প্রতি সম্মিলনেচ্ছো কামার্ত্তস্য

চুম্বন করিতেছে লাবণ্যযুক্ত স্তনমণ্ডলে যেন লাগিয়া পড়িতেছে প্রস্ফুরিতকরে আপনার কাঞ্চীদামের মণিগুলিকে স্পর্শ করিতেছে এবং আপনার নির্ম্মল নখসমূহে লগ্নদেহ হইয়া চরণযুগলেই যেন পতিত হইতেছে। (ন) বিশেষত কামাতুরের ন্যায় চন্দ্রের শরীরটা কামসন্তাপবশতই যেন চন্দনের শুষ্ক প্রলেপের ন্যায় পাণ্ডুবর্ণ বহন করিতেছে মৃণালবলয়ের ন্যায় শুভ্রবর্ণ কিরণ ধারণ করিতেছে। প্রতিবিম্বচ্ছলে স্ফটিকময় ভূমিতে লুণ্ঠিত হইতেছে কেতকীপুষ্পের অভ্যন্তরস্থ কেসরের ন্যায় ধূসরবর্ণ চরণ হইয়া প্রতিবিম্বচ্ছলে কুমুদপূর্ণ সরোবরে অবগাহন করিতেছে জলকণাতে আর্দ্র চন্দ্রকান্তমণির উপরে হস্ত আমর্শন করিতেছে এবং রাত্রি উপস্থিত হওয়ায় চক্রবাকদম্পতিগণ যে পদ্মবনের নিকট হইতে চলিয়া গিয়াছে সেই পদ্মবনগুলিকে যেন বিদ্বেষ করিতেছে। এই প্রকার এবং সেই সময়ের উপযুক্ত অন্যান্য অনেক প্রকার আলাপ করিতে করিতে তরলিকার সহিত সেই স্থান লক্ষ্য করিয়া চলিলাম।

(১) ভজতি।

तत्र च मार्गे लता-कुसुम-रजोधूसरं चरणयुगलं कैलासतटाच्चन्द्रोदयप्रस्नुत-(१) चन्द्रकान्तमणिप्रस्रवणे प्रक्षालयन्ती, (२) यस्मिन् प्रदेशे स आस्ते तस्मिन्नेव चास्य सरसः पश्चिमे तटे पुरुषस्येव रुदितध्वनिं विप्रकर्षान्नातिव्यक्तमुपालक्षयम् (प)। दक्षिणेक्षणस्फुरणेन च प्रथममेव मनस्याहितशङ्का, तेन सुतरामवदीर्णहृदयेव किमप्यनिष्टमन्तः कथयतेव विषण्णेनान्तरात्मना "तरलिके! किमिदम्" इति सभयमभिदधाना वेपमानगात्रयष्टिस्तदभिमुखम् ( ) अतित्वरितमगच्छम् (फ)।

अथ निशीथप्रभावाद्दूरादेव विभाव्यमानस्वरमुन्मुक्तार्त्तनादम्—"हा हतोऽस्मि हा दग्धोऽस्मि, हा वञ्चितोऽस्मि, हा किमिदमापतितम्, किं वृत्तम्, उत्सन्नोऽस्मि (४)। दुरात्मन्! मदनपिशाच! पाप! निर्घृण! किमिदमकृत्य

विशेषो युज्यत एवेति भावः। अत्र प्रतीयमाना क्रियोत्प्रेक्षालङ्कारः। तमुद्दिश्य तेन कुमारेणाध्यासितपूर्वं प्रदेशम् अभि लक्ष्यीकृत्य उपागमम्।

(प) तत्रेति। किञ्च कैलासतटाच्चन्द्रकान्तमणिमयादित्यर्थः चन्द्रोदयेन प्रस्नुतं गलितं यच्चन्द्रकान्तमणीनां प्रस्रवणं निर्झरस्तस्मिन् मार्गे पथि यानि लताकुसुमानि तेषां रजोभिः परागैः धूसरं स्वकीयं चरणयुगलं प्रक्षालयन्ती अहम्। स कुमारः। अस्य सरसः अच्छोदस्य। विप्रकर्षाद्दूरत्वात् नातिव्यक्तम् अनतिस्पष्टं रुदितध्वनिं रोदनशब्दम् उपालक्षयम् अशृणवम्।

(फ) दक्षिणेति। किञ्च दक्षिणेक्षणस्फुरणेन दक्षिणनयनस्पन्दनेन आहिता उत्पादिता शङ्का आतङ्को यस्याः सा अहम् तेन रुदितध्वनिना सुतरामत्यन्तम् अवदीर्णहृदयेव सती। ईदृशेनान्तरात्मना करणेन सभयमभिदधाना। वेपमाना कम्पमाना गात्रयष्टिः यष्टिवत् कृशं शरीरं यस्याः सा।

(ब) अथेति। निशीथप्रभावात् रात्रिप्रभावेण सर्वेषामापेक्षिकनिस्तब्धत्वादित्यर्थः। निशीथस्तु पुमानर्द्धरात्रे स्याद् रात्रिमात्रके। इति मेदिनी। केचित्तु अर्द्धरात्रप्रभावादिति व्याचक्षते तदसत् प्रदोषसमये निर्गताया

(प) সেখানে চন্দ্রের উদয়ে কৈলাসপর্ব্বতের শৃঙ্গ হইতে চন্দ্রকান্তমণির জল নিঃসৃত হইতেছিল এদিকে পথের লতাজাত কুসুমের রেণুতে আমার চরণযুগল ধূসরবর্ণ হইয়া গিয়াছিল, সুতরাং সেই জলে চরণযুগল প্রক্ষালন করিতেছিলাম—এমন সময়ে তিনি যে স্থানে ছিলেন অচ্ছোদসরোবরের সেই পশ্চিমতীরে দূরত্বনিবন্ধন অস্পষ্ট কোন পুরুষের যেন রোদনধ্বনি শুনিতে পাইলাম। (ফ) এদিকে প্রথমেই দক্ষিণচক্ষু স্পন্দিত হইয়া আমার মনে আশঙ্কা জন্মাইয়াছিল, সুতরাং আবার সেই রোদনধ্বনি শুনায় হৃদয় যেন বিদীর্ণ হইয়া গেল এবং অন্তরাত্মা বিষণ্ণ হইয়া মনের নিকট যেন কোন বিপদের সংবাদ বলিতে লাগিল তখন আমি ভয়ের সহিত বলিলাম— তরলিকে। এ ব্যাপারটা কি? আমার কিন্তু শরীর কাঁপিতে লাগিল—এই অবস্থায় আমি অতি তাড়াতাড়ি সেই দিকে যাইতে লাগিলাম।

(ব) তদনন্তর রাত্রির নিস্তব্ধতাবশত দূর হইতেই স্বর শুনিয়া বুঝিতে পারিয়াছিলাম যে কপিঞ্জল উন্মুক্ত কণ্ঠে আর্ত্তনাদ করিতেছেন—"হায়। মরিলাম, হায়। কপাল পুড়িল

(१) प्रस्रुत। (२) क्षालयन्ती। (३) क्वचित् तटेति नास्ति। (४) उच्छिन्नोऽस्मि।

अनुष्ठितम्? आ पापे! दुष्कृतकारिणि! दुर्विनीते! महाश्वेते! किमनेन तेऽपकृतम्? आ पाप! दुश्चरित! चन्द्र! चाण्डाल! (१) कृतार्थोऽसि? इदानीमपगतदाक्षिण्य! दक्षिणानिलहतक! पूर्णास्ते मनोरथाः, कृतं यत्-(२) कर्त्तव्यम्? वहेदानीं यथेष्टम्, (ब) हा भगवन्! श्वेतकेतो! पुत्रवत्सल! न वेत्सि मुषितमात्मानम्, हा धर्म! निष्परिग्रहोऽसि, हा तपः! निराश्रयमसि, हा सरस्वति! विधवासि, हा सत्य! अनाथमसि, हा सुरलोक! शून्योऽसि (भ)। सखे! प्रतिपालय माम्, अहमपि भवन्तमनुयास्यामि, न शक्नोमि भवन्तं (३) विना क्षणमप्यवस्थातुमेकाकी। कथमपरिचित इवादृष्टपूर्व इवाद्य मामेकपदे

महाश्वेताया किंचन्मात्रपर्यातिक्रम एवाऽवैरासम्भवात्। दूरादेव विभाव्यमान अथ कपिञ्जलस्य स्वर इत्य परिचीयमान स्वरो यस्य तम् उन्मत्तात्त नादम् इत्य तानि चाम्बानि च विलपन्त कपिञ्जलमश्रौषमिति परीयान्वय। हतोऽस्मि दैवेन। दग्धोऽस्मि शोकानलेन। वञ्चितोऽस्मि विधात्रा। च पतितम् उपस्थितम्। वृत्त जातम्। उत्सन्नो दैवेन मूलादुत्खातोऽस्मि। निर्घृण। निर्दय। अकृत्यमकार्य्यम्। अनेन पुण्डरीकेण ते तव किमपकृतम् यत्त्वमेव निमित्तीभूय एन व्यापादितवतीति भाव। चाण्डाल। चाण्डालतुल्यातिनृशंस।। कृतार्थोऽसि पुण्डरीकस्य मृत्युविधानादिति भाव। इदानीं न तु पूर्वमिति भाव अपगत दाक्षिण्य यस्य तत्सम्बोधनम् खलस्वभाव दक्षिणवायो।। अत्र दाक्षिण्यशब्दस्य दक्षिणदिग वर्त्ति त्वाथ कत्व विरोधात् औदार्य्यार्थ कत्वे च तत्समाधानाद्विरोधाभासोऽलङ्कार। इदानीं यथेष्टम् इच्छानुसारेण वह सञ्चर।

(भ) हेति। आत्मान मुषित द वनापहृतसर्व स्व न वेत्सि न जानासि। निन विद्यते परिग्रह स्वीकारो यस्य स तादृशोऽसि त्वमित पर कस्य परिग्रह कुर्य्या इति भाव। विधवासि पत्यु पुण्डरीकस्य मरणादिति भाव। एतेनास्य वाचस्पतित्व ध्वनितम्। सुरलोक। स्वर्ग।।

(म) सखे इति। प्रतिपालय प्रतीक्षस्व। एकपदे सहसा। तत्क्षणकपदे तुल्ये इति हलायुध।

হায়! বঞ্চিত হইলাম হায় এ কি উপস্থিত হ'ল কি ঘটিল এ যে একেবারে উৎসন্ন হইলাম। দুরাত্মন্। মদনপিশাচ। পাপিষ্ঠ। নির্দ্দয়। এ কি অকার্য্য অনুষ্ঠান করিলি? আ পাপিষ্ঠে! পাপকারিণি! দুর্বিনীতে। মহাশ্বেতে! এ তোর কি অপকার করিয়াছিল? আ পাপিষ্ঠ! দুশ্চরিত্র। চন্দ্র। চণ্ডাল। কৃতার্থ হইয়াছ? হে দক্ষিণবায়ো! এখন তোমার সে দাক্ষিণ্য দূরীভূত হইয়াছে মনের অভিলাষ পূর্ণ হইয়াছে যাহা করিবার তাহা করিয়াছ এখন ইচ্ছানুসারে বহিতে থাক। (ভ) হা। ভগবন্ শ্বেতকেতো। পুত্রবৎসল! আপনার সর্ব্বস্ব অপহৃত হইয়াছে তাহা জানিতে পারিতেছেন না। হা ধর্ম্ম। তুমি এখন কাহাকে গ্রহণ করিবে? হা তপস্তে। তুমি এখন নিরাশ্রয় হইলে হা সরস্বতি! তুমি বিধবা হইলে, হা সত্য! তুমি অনাথ হইলে হা স্বর্গলোক! তুমি শূন্য হইলে। (ম) সখে! পুণ্ডরীক! আমার প্রতীক্ষা কর আমিও তোমার অনুগামী হইব, কারণ—তোমাকে ছাড়িয়া আমি একাকী ক্ষণকালও থাকিতে পারিব না। যাহার সহিত পরিচয় হয় নাই এবং

(१) चण्डाल।। (२) कश्चित् अधिकं नास्ति। (३) भवता।

उत्सृज्य प्रयासि, कुतस्तवेयमतिनिष्ठुरता, कथय त्वदृते क्व गच्छामि, क्व याचे, क्व शरणमुपैमि। अन्धोऽस्मि संवृत्त, शून्या मे दिशो जाता, निरर्थकं जीवितम्, अप्रयोजनं तप, निःसुखास्त्रयो लोका। केन सह परिभ्रमामि, कमालपामि (१)। उत्तिष्ठ, देहि मे प्रतिवचनम्, (२) क्व तन्ममोपरि सुहृत्प्रेम, क्व सा स्मितपूर्वाभिभाषिता च" इत्येतानि चान्यानि च विलपन्तं कपिञ्जलमश्रौषम् (म)।

तच्च श्रुत्वा पतितैरिव प्राणैर्दूरादेव मुक्तैकताराक्रन्दा सरस्तीरलतासक्तिलुप्यमानांशुकोत्तरीया (३) यथाशक्तित्वरितैरज्ञात-सम-विषम-भूमिभाग विन्यस्तै पादप्रक्षेपैः प्रस्खलन्ती पदे पदे, केनाप्युत्क्षिप्य नीयमानेव तं प्रदेशं गत्वा (य)

उत्सृज्य परित्यज्य। त्वदृते त्वां विना। शरणमुपैमि रक्षकं लभे। अन्धोऽस्मि त्वच्छोकजनितमोहेन दृष्टिशक्तिलोपादिति भाव। शून्या इत्यादौ सर्वत्र तदभावादिति भाव। लोकास्त्रयोऽपि भुवनानि निःन विद्यते सुखं येषु ते तादृशा जाता इति शेष। स्मितपूर्वम् अभिभाषितुं शील यस्य स तथोक्तस्तस्य भाव सा। श्रु धातो शाब्दबोधे शक्तिं ब्रुवतां नयाः कानां मते परिचितस्वरैर्घोषाध्यमाण हा हतोऽस्मीत्यादिशब्दैः कपिञ्जलविषयकं बोधमाकर्ष मित्यर्थ यथाश्रौषं द्रौपदीं रङ्गमध्ये इत्यादिवत्। श्रवणेन्द्रियजन्यप्रत्यक्षे शक्तिं ब्रुवतां मीमांसकानां मते तु तादृशशाब्दबोध एव लक्षणेति। अथवा धातूनामनेकार्थत्वात् अश्रौषं स्वरपरिचया नुमानेन कपिञ्जलमज्ञासिष मित्यर्थ।

(य) तच्चेति। पतितैरिव बहिर्गतैरिव बहिर्गन्तुमुद्यतैरिवेत्यर्थ प्राणैरुपलक्षिता दूरादेव मुक्त एकतार अत्युच्च आक्रन्दो रोदनध्वनिर्यया सा सरसस्तीरेषु या लतास्तासु आसक्त्या लग्नयितुमनवकाशात् सल्लग्नतया लुप्यमान छिद्यमानम् अंशुकं परिहितवस्त्रम् उत्तरीयं वस्त्रञ्च यस्या सा यथाशक्तित्वरितैः शक्त्यनतिक्रमेण शीघ्रकृतैः अज्ञातेषु अपरिचितेषु समविषमेषु समतलविषमतलेषु भूमिभागेषु विन्यस्तैः पादप्रक्षेपैः पदे पदे प्रस्खलन्ती केनापि जनेन

যাহার সঙ্গে কথনও দেখা হয় নাই—এইরূপ লোকের ন্যায় তুমি কেন আজ আমাকে ঠাৎ পরিত্যাগ করিয়া যাইতেছ? তোমার এই অত্যন্ত নিষ্ঠুরতা আজ কোথা হইতে আসিল? বল তোমাকে ছাড়িয়া কোথায় যাইব কাহার নিকট প্রার্থনা করিব এবং কাহার শরণ লইব? আমি অন্ধ হইয়াছি, আমার সকল দিক্ শূন্য বলিয়া বোধ হইতেছে জীবন অনর্থক মনে করিতেছি তপস্যার প্রয়োজন নাই এবং ত্রিভুবনের কোথাও সুখ নাই। আমি কাহার সহিত বিচরণ করিব এবং কাহার সঙ্গে আলাপ করিব? ভাই। উঠ আমার কথার উত্তর দাও, আমার উপরে তোমার সেই বন্ধুর প্রণয় আজ কোথায় গেল এবং ঈষৎ হাস্য করিয়া সেই কথা বলা আজ কোথায় গেল, তখন কপিঞ্জল এই রকম ও অন্যান্য অনেক রকম বিলাপ করিতেছিলেন।

(য) তাহা শুনিয়া আমার প্রাণ যেন বহির্গত হইতে উদ্যত হইল আমি দূর হইতেই মুক্তকণ্ঠে উচ্চৈঃস্বরে রোদন করিয়া উঠিলাম, সরোবরের নিকটবর্ত্তী লতাতে সংলগ্ন হইয়া আমার পরিহিত ও উত্তরীয় বস্ত্র ছিঁড়িয়া যাইতে লাগিল অপরিচিত সমতল ও বিষমতল ভূমিতে

(१) केन सार्द्धं करोमीत्यधिकः पाठः क्वचित्। (२) मे विलपत। (३) लतानुबध्यमान।

सरस्तीरसमीपवर्त्तिनि शिशिरशीकरासारस्राविणि शशिमणिशिलातले विरचित कुमुद कुवलय-कमल विविध-वनकुसुम-सुकुमार (१) मृणालमय कुसुमशर सायकमयमिव शयनमधिशयानम्, (र) अतिनिष्पन्दतया मतपदशब्दमिवाकर्णयन्तम्, (ल) अन्तःकोपशमित (२) मदन सन्तापतया तत्क्षण लब्ध सुख प्रसुप्तमिव, (व) मन क्षोभ-प्रायश्चित्त प्राणायामावस्थितमिव, (श) अतिप्रस्फुरित प्रभेण त्वत्कृते ममेयमवस्थे"ति कथयन्तमिवाधरेण, (ष) इन्दु द्वेष परिवर्त्तित-

उत्क्षिप्य उत्तोल्य नीयमानेवाहम् त कुमाराध्युषित प्रदेश गत्वा तत्क्षणविगतजीवित त महाभागमद्राक्षमिति परेणान्वय । इत पु स्थि द्वितीय कवचनान्तपदानि महाभागमिति वक्ष्यमाणस्य विशेषणानि । अत्र क्रियोत्प्रे क्षालङ्कार ।

(र) सर इति । शिशिर शीतल शीकरासार जलबिन्दुधारां स्रवति क्षरतीति तस्मिन् शशिमणिशिलातले चन्द्रकान्तमणिपाषाणोपरि विरचित निर्म्मितम् कुमुद श्वेतोत्पल कुवलय नीलोत्पल कमलै पद्म विविधै वनकुसुम श्च सुकुमार कोमलम् तथा मृणालमयम् अतएव कुसुमशरस्य मदनस्य सायकमयमिव बाणनिष्पन्नमव स्थित शयन शय्याम् अधिशयानमधितिष्ठन्तम् । क्रियोत्प्रे क्षालङ्कार ।

(ल) अतीति । अतिनिष्पन्दतया हेतुना मम पदशब्दमाकर्णयन्तमिव । प्रायेणैव नायका उत्कण्ठा वशान्नायिकानामागमनकालीनपदशब्दमाकर्णयन्ति । क्रियोत्प्रे क्षा ।

(व) अन्त रिति । अन्तःकोपेन ममानागमनान्मानसिकक्रोधेन शमितो मदनसन्तापो यस्य तस्य भावस्तया हेतुना तस्मिन् क्षणे लब्ध यत् सुख तेन प्रसुप्त निद्रितमिव । क्रियोत्प्रे क्षा ।

(श) मन इति । मनःक्षोभस्य ब्रह्मचर्य्यविरोधिनो मदनवेगजनितचित्तचाञ्चल्यस्य तज्जनितपापस्येत्यर्थ प्रायश्चित्तरूपो य प्राणायाम कुम्भकात्मकस्तस्मिन्नवस्थितमिव निष्पन्दत्वादिति भाव । क्रियोत्प्रे क्षा । पापक्षयमात्र साधनत्वेन विधिबोधित कर्म्म प्रायश्चित्त मिति स्मात्त ।

(ष) अतीति । अतिप्रस्फुरिता अतीवप्रदीप्ता प्रभा तस्य तादृशेन अधरेण करणेन त्वत्कृते तव निमित्त मम इय मृत्युरूपा अवस्था जातेति शेष इति कथयन्तमिव । क्रियोत्प्रे क्षा ।

শক্তি অনুসারে দ্রুতবেগে পদক্ষেপ করায় প্রত্যেক পদক্ষেপেই পড়িয়া যাইতে লাগিলাম এবং কেহ যেন আমাকে উত্তোলন করিয়া নিয়া গেল—এইভাবে আমি সেই স্থানে যাইয়া সেই সময়েই মাত্র জীবন চলিয়া গিয়াছে—এই অবস্থায় সেই মহাভাগ মুনিকুমারকে দেখিতে পাইলাম। (র) সরোবরের তীরের নিকটে, শীতলজলবিন্দুবর্ষী বৃহৎ একখানা চন্দ্রকান্ত মণির উপরে মৃণালময় একখানি শয্যা নির্ম্মিত ছিল, শ্বেতোৎপল নীলোৎপল পদ্ম ও নানাবিধ বন্য পুষ্পে সেই শয্যাখানি আরও কোমল হইয়াছিল, সুতরাং কামদেবের বাণদ্বারাই যেন তাহা নির্ম্মিত হইয়াছে বলিয়া বোধ হইতেছিল, সেই শয্যার উপরে তিনি শয়ন করিয়াছিলেন। (ল) অত্যন্ত নিস্পন্দভাবে ছিলেন বলিয়া আমার পদশব্দই যেন শুনিতেছিলেন। (ব) মনের ক্রোধে মদনসন্তাপ নিবারিত হওয়ায় তখন যেন সুখে নিদ্রা যাইতেছিলেন। (শ) মনের উদ্দীপনানিবন্ধন পাপের প্রায়শ্চিত্তস্বরূপ কুম্ভক অবস্থাই যেন অবস্থান করিতেছিলেন। (ষ) ওষ্ঠযুগলের প্রভা তখন অত্যন্ত প্রকাশ পাইতেছিল, সুতরাং তাহা দ্বারা

(१) सुकुमारमालामयमिव । (२) अन्त क्रुतान्तोपशमित अन्त क्षोभशमित ।

देहतया पृष्ठभाग-निपतितैर्मदन दहन-विह्वल-हृदय न्यस्त हस्त नख मयूखच्छलेन च्छिद्रितमिव शशिकिरणैः, (ङ) उच्छुष्क पाण्डुरया (१) स्वविनाशोत्पन्नया (२) मदनचन्द्रकलयेव चन्दनलेखिकया रचितललाटिकम्, (३) (च) "मत्त प्रियतर (४) तवापरो जनो जात" इति कुपितेनेव जीवितेन परित्यक्तम्, (छ) मन्मथव्यथया सहैतानसून् स्वयमिवोत्सृज्य निश्चेतनतासुखम् (५) अनुभवन्तम्, (ज) अनङ्गयोग विद्यामिव ध्यायन्तम्, (झ) अपूर्वं प्राणायाममिवाभ्यस्यन्तम्, (ञ) उपपादितास्मदा

(ङ) इन्द्विति। इन्दुद्वेषेण अधिकोत्तापकतया चन्द्रं प्रति विद्वेषेण परिवर्त्तितदेहतया न्युब्जीकृतशरीरतया हेतुना पृष्ठभागनिपतितैः शशिकिरणैः मदनदहनेन कामानलेन विह्वलं यत् हृदयं तत्र न्यस्तस्य हस्तस्य नखमयूखानां छलेन छिद्रितमिव सञ्जातच्छिद्रमिव। वक्षसोऽधः प्रसृतानां नखकिरणानामपि पृष्ठपतितचन्द्रकिरणतुल्यत्वात् अमी चन्द्रकिरणा एव देहं भित्त्वा नखकिरणच्छलेनाधोनिर्गता इव त सर नाथ। क्रियोत्प्रेक्षा।

(च) उच्छुष्केति। उच्छुष्का चासौ पाण्डुरा चेति तया स्वस्यात्मनो विनाशाय उत्पन्नया उदितया अकाले अस्थाने च ग्रहनक्षत्राणामुदयस्य विनाशसूचकत्वादिति भावः। मदनसम्बन्धिनी या चन्द्रकला तयेव स्थितया चन्दनस्य लेखिकया अर्द्धचन्द्राकारया रेखया रचिता कपिञ्जलेन निर्म्मिता ललाटिका ललाटे तिलकविशेषो यस्य तम्। अत्र द्रव्योत्प्रेक्षालङ्कारः।

(छ) मत्त इति। अपरो मदपेक्षयान्य इत्यर्थः। इति हेतोः। क्रियोत्प्रेक्षा।

(ज) मन्मथेति। स्वयमात्मनैव मन्मथव्यथया कामपीड़या सह एतान् असून् प्राणान् उत्सृज्येव विहायेव निश्चेतनतया यत् सुखं तदनुभवन्तम् सत्यां चेतनायां नानाविधसंसारभावावशेन दुःखसम्भवादिति भावः। अत्र सहोक्तिक्रियोत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

(झ) अनङ्गेति। अनङ्गसम्बन्धिनी या योगविद्या तां ध्यायन्तमिव निष्पन्दत्वादिति भावः। क्रियोत्प्रेक्षा।

যেন বলিতেছিলেন যে তোমার জন্যই আমার এই অবস্থা হইয়াছে। (ঙ) চন্দ্রের প্রতি বিদ্বেষবশত দেহ পরিবর্ত্তিত করিয়া শয়ন করিয়াছিলেন তাহাতে পিঠের উপরে চন্দ্রের কিরণ পড়িয়াছিল, তাহাতে বোধ হইতেছিল যে কামানলে বিহ্বল হৃদয়ের উপরে যে হস্ত সংস্থাপন করিয়াছিলেন, তাহার নখের কিরণচ্ছলে সেই চন্দ্রের কিরণগুলিই যেন দেহ ভেদ করিয়া ছিদ্র করিয়া দিয়াছে। (চ) কপিঞ্জল চন্দনের রেখাদ্বারা ললাটে একটী টিপ তৈয়ারী করিয়া দিয়াছিলেন, সেটী শুকাইয়া পাণ্ডুবর্ণ হইয়াছিল তাহাতে বোধ হইতেছিল যেন নিজের বিনাশের জন্য মদনবন্ধু চন্দ্রের একটী কলা অস্থানে উদয় পাইয়াছে। (ছ) আমা হইতেও তোমার অধিক প্রিয় অন্য লোক জুটিয়াছে ইহা মনে করিয়া ক্রুদ্ধ হইয়াই যেন জীবন তাঁহাকে পরিত্যাগ করিয়াছিল। (জ) নিজেই যেন কামবেদনার সহিত সহিত প্রাণ পরিত্যাগ করিয়া অচৈতন্যসুখ অনুভব করিতেছিলেন। (ঝ) কামদেবের যোগবিদ্যাকে যেন ধ্যান করিতে-

(१) पाण्डुतया। (२) स्वदेहविनाशोत्पन्नया स्वविनाशोत्पातोत्पन्नया। (३) ईषदालक्ष्यपरिवर्त्ततारकेण अनवरतरोदनाताम्रेण प्राणोत्सर्गोपजातासुखायनतया रुधिरमिव क्षरता मदनशरशल्यवेदनाकुञ्चितत्रिभागेन नातिनिमीलितेन लोचनयुगलेन। इत्यधिकः पाठः क्वचित्। (४) अतिप्रियतरः। (५) निश्चेतनासुखम्।

গমনেন প্রণয়াদিবাপহৃত-প্রাণপূর্ণপাত্রমনঙ্গেন, (ঘ) রচিতচন্দনললাটিকা-ত্রিপুণ্ড্রকম্, (ঙ) ধৃত-সরস-বিসসূত্র-যজ্ঞোপবীতম্, (চ) অংসাবসক্ত-কদলী-গর্ভপত্র-চারু চীরম্, (ছ) একাবলীবিগ্রালাক্ষমালম্, (জ) অবিরলামল-কর্পূর-ক্ষোদ ভস্ম-ধবলম্, (ঝ) আবদ্ধ-মৃণাল-বলয়-রক্ষা প্রতিসর-(১) মনোহরম্, (ঞ) মনোভব ব্রত বেশমাস্থায় (২) মৎসমাগমমন্ত্রমিব সাধয়ন্তম্, (৩) (ট)

(গ) অপূর্বেতি। অপূর্বম্ অদ্ভুতম্ শ্বাসপ্রশ্বাসয়োরভাবেন পূরকরেচনাভাবাৎ কেবলকুম্ভকরূপত্বাদিতি ভাবঃ য প্রাণায়ামস্তম্ অভ্যস্যন্তম্ অসকৃৎ শিক্ষমাণমিব নিস্পন্দত্বাৎ। ক্রিয়োৎপ্রেক্ষা।

(ঘ) উপেতি। উপপাদিতম্ নিষ্পাদিতম্ অস্মাকম্ মমেত্যর্থঃ আগমনং যেন তেন অনঙ্গেন মদনেন প্রণয়াদিব সমানসৌন্দর্য্যে অঙ্কেহাদিব অপহৃত প্রাণা এব পূর্ণপাত্রং পারিতোষিকদ্রব্যং যস্মাত্তম্। অন্যোঽপি মহাসন্তোষকরং কার্য্যং বিধায় প্রণয়াৎ পূর্ণপাত্রং হরতি। অত্র হেতূৎপ্রেক্ষা নিরঙ্গকেবলরূপকয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ। বস্ত্রোপকর্ষ যদানন্দাদলঙ্কারাদিকং পুনঃ। আকৃষ্য গৃহ্যতে পূর্ণপাত্রং পূর্ণানকঞ্চ তৎ॥ ইতি হারাবলী।

(ঙ) রচিতেতি। রচিতং কপিঞ্জলেন নির্ম্মিতং চন্দনললাটিকায়া উপরি ত্রিপুণ্ড্রকং যস্য তম্।

(চ) ধৃতেতি। ধৃতং মদনতাপনিবৃত্তয়ে গৃহীতং সরসমার্দ্রং বিসসূত্রং মৃণালতন্তুরেব যজ্ঞোপবীতং যেন তম্। অত্র নিরঙ্গকেবলরূপকমলঙ্কারঃ।

(ছ) অংসেতি। অংসে স্কন্ধে অবসক্তং লগ্নং কদলীগর্ভপত্রমেব চারু চীরং কৌপীনং যস্য তম্। পূর্ববদলঙ্কারঃ।

(জ) একেতি। একাবলী মদীয়ঃ স একস্র মৌক্তিকো হার এব বিগ্রালা অক্ষমালা যস্য তম্। পূর্ববদলঙ্কারঃ।

(ঝ) অবিরলেতি। অবিরলা ঘনা অমলা নির্ম্মলাশ্চ কর্পূরস্য ক্ষোদাঃ কপিঞ্জলদত্তা রেণব এব ভস্মানি ধবলম্। পূর্ববদলঙ্কারঃ।

(ঞ) আবদ্ধেতি। আবদ্ধো ধৃতঃ মৃণালবলয়মেব রক্ষাপ্রতিসরঃ কামব্যাধিতো রক্ষণায় হস্তসূত্রম্ তেন মনোহরম্। অত্র নিরঙ্গকেবলরূপকমলঙ্কারঃ।

(ট মনোভবেতি। মনোভবব্রতবেশং চন্দনকর্পূরধারণাদিধারণরূপং মদনব্রতাচরণোপযোগিবেশম্ আস্থায় ধৃত্বা মম সমাগমমন্ত্রং সম্মেলনসাধনমন্ত্রং সাধয়ন্তমিব হৃতবালাপবজ্জনান্নিস্পন্দত্বাদিতি ভাবঃ। ক্রিয়োৎপ্রেক্ষা।

ছিলেন। (গ) অদ্ভুত প্রাণায়াম যে অভ্যাস করিতেছিলেন। (ঘ) কামদেব আমার আগমন সম্পাদন করিয়া প্রণয়বশতই যেন তাঁহার প্রাণরূপ পারিতোষিক গ্রহণ করিয়াছিলেন। (ঙ) কপিঞ্জল, তাঁহার ললাটে চন্দনের টিপের উপরে একটী ত্রিপুণ্ড অঙ্কিত করিয়া দিয়াছিলেন। (চ) তিনি আর্দ্র মৃণালসূত্ররূপ যজ্ঞোপবীত ধারণ করিয়াছিলেন। (ছ) কদলী বৃক্ষের অভ্যন্তরে পত্ররূপ একখানা মনোহর কৌপীন, তাঁহার স্কন্ধদেশে সংলগ্ন ছিল। (জ) আমার সেই একলহরী মুক্তার মালাই, তাঁহার বৃহৎ জপের মালা হইয়াছিল। (ঝ) ঘন ও নির্ম্মল কর্পূরের রেণুরূপ ভস্মে তাঁহার শরীরটী শুভ্রবর্ণ ছিল। (ঞ) হস্তে মৃণালবলয়রূপ রক্ষাসূত্র বন্ধন করায় তাঁহাকে সুন্দর দেখা যাইতেছিল। (ট) কামদেবের ব্রতাচরণের উপযোগী

(১) মৃণালরক্ষাপ্রতিসর। (২) রক্ষাপ্রতিসরমনোভবব্রতবেশমাস্থায়।

(৩) ঈষদাবদ্ধাপরিস্পন্দমানাক্ষম ইতি ক্বচিদধিকঃ পাঠঃ।

अविरत (१) रोदनाताम्रेण अश्रुक्षयात् (२) आगतरुधिरेणेव मदन-शर-शल्य वेदना-कूणित-त्रिभागेण (३) 'कठिनहृदये। (४) दर्शनमात्रकेणापि न पुनरनु गृहीतोऽयमनुगतो जन " इति सप्रणय मामुपलभमानमिव चक्षुषा, (ठ) किञ्चिद् विवृताधरतया जीवितमपहर्त्तुमन्तः प्रविष्टैरिवेन्दुकिरणैर्निर्गच्छद्भिर्दशनांशुभि धवलितपुरोभागम्, (ड) मन्मथव्यथया विघटमान (५) हृदयनिहितेन वामपाणिना "प्रसीद, प्राणै सम प्राणसमे। न गन्तव्यम्' इति हृदयस्थिता मामिव धारयन्तम्

(ठ) अविरतेति। अविरतरोदनात् आताम्र ए सम्यक्ताम्रवर्ण न अतएव अश्रुक्षयात् बहुसमय यावन्ति सर्व्वा नाश्रूणां समाप्तिप्राप्ते इति आगतरुधिरेणेव स्थितेन म नशराणां यानि शल्यानि लौहमयाग्रा ए तत्सदाघात स्थिय या वेदना तया आकूणित ईषत्सङ्कु चितस्त्रिभागस्तृतीयो भागो यस्य तेन तादृशेन चक्षुषा चक्षुभङ्ग्येत्यथ। हे कठिनहृदये। मह्याम्रेते।। अय मन्नन्नणो जन। उपलभमान निन्दन्तमिव स्थितम्। अत्र पदार्थ हेतुक काव्यलिङ्ग क्रियोत्प्रेक्षाद्वयस्य इत्ये तेषामङ्गाङ्गिभावेन सङ्कर।

(ड) किञ्चिदिति। किञ्चिद्विवृताधरतया दूयद्व्यादन्तौष्ठयुगलतया हेतुना जीवितमपहर्त्तुमन्तःप्रविष्ट इन्दु किरण रिव दृश्यमानै निर्गच्छद्भिर्दशनानां दन्तानाम् अंशुभि किरणै धवलितपुरोभाग शुभ्रीकृतसम्मुखदेशम्। अत्र जात्युत्प्रेक्षालङ्कार।

(ढ) मन्मथेति। मन्मथव्यथया विघटमाने विदीर्य्यमाणे हृदये निहित स्थापितस्तेन वामपाणिना करेण। हे प्राणसमे। मह्याम्रेते। प्राणा सम निर्गच्छद्भिरमासुभि सह त्वया हृदयान्न गन्तव्य प्राणसमतय व सौहार्द्दैस्तै सह तथापि गमनसम्भवादिति भाव। इति अनेनाभिप्रायेण हृदयस्थिता चिन्तावशाच्चित्तवर्त्तिनीं मां धारयन्तमिव अवरुन्धन्तमिव। अत्र क्रियोत्प्रेक्षालङ्कार। एतदनुरूप श्लोको यथा नषधे—

ममादरीद विदरीतुमान्तर तदथि कल्पद्रुम। किञ्चिदथ ये।
भिदा हृदि द्वारमवाप्य मद मे ब्रजासुभि प्राणसम सम गम॥

বেশ ধারণ করিয়া আমার সহিত সম্মেলনের মন্ত্রই যেন সাধনা করিতেছিলেন। (ঠ) অনবরত রোদন করায় নয়নযুগল আরক্তবর্ণ হইয়াছিল তাহাতে বোধ হইতেছিল যেন অশ্রু শেষ হওয়ায় রক্ত আসিয়া জমা হইয়াছে এবং কামবাণের লৌহময় অগ্রভাগের বেদনায় সেই নয়ন-যুগলের তৃতীয়ভাগ ঈষৎ সঙ্কুচিত হইয়াছিল তাহার ভঙ্গীদ্বারা তিনি যেন এই অভিপ্রায়ে আমাকে প্রণয়ের সহিত তিরস্কার করিতেছিলেন যে হে নিষ্ঠুরচিত্তে। তুমি দেখা দিয়াও এই অনুগত ব্যক্তির প্রতি অনুগ্রহ করিলে না।। (ড) ওষ্ঠযুগল কিঞ্চিৎ বিবৃত (ফাঁক করা) ছিল বলিয়া তাঁহার জীবন অপহরণ করিবার জন্যই যেন অভ্যন্তরপ্রবিষ্ট চন্দ্রকিরণের ন্যায় দন্তের কিরণগুলি নির্গত হইতে থাকিয়া তাঁহার সম্মুখভাগ শুভ্রবর্ণ করিয়াছিল। (ঢ) কামবেদনায় তাঁহার হৃদয় বিদীর্ণ হইতেছিল, সুতরাং তাহার উপরে তিনি বামপাণিকমল সংস্থাপন করিয়া হৃদয়বর্ত্তিনী আমাকে এই অভিপ্রায়েই যেন অবরুদ্ধ করিতেছিলেন যে "হে প্রাণোপমে।

(१) अनवरत। (२) प्राणीत्स्वर्गीपजाताश्रुक्षयतया। (३) अतिनिमीलितेन नातिनिमीलितेन।
(४) भो कठिनहृदये।। (५) मन्मथव्यथाविघटमान।

(ঢ) ইতরেণ চ নখময়ূখদন্তুরতয়া চন্দনমিব স্রবতোত্তানীকৃতেন চন্দ্রাতপমিব নিবারয়ন্তম্, (ণ) অন্তিকস্থিতেন চ অচিরোদ্গতজীবিতমার্গমিবোদ্গ্রীবেণ বিলোকয়তা তপঃসুহৃদা কমণ্ডলুনা সমুপেতম, (ত) কণ্ঠাভরণীকৃতেন চ মৃণালবলয়েন রজনীকর (১) কিরণপাশেনেব স যম্য লোকান্তরমুপনীয়মানম্, (২) (থ) কপিঞ্জলেন মদ্দর্শনাৎ 'অব্রহ্মণ্যম' ইত্যুদ্ধহস্তেন দ্বিগুণীভূতবাষ্পোদ্গমেনাক্রোশতা কণ্ঠে পরিষ্বক্তম, তৎক্ষণবিগতজীবিত তমহং পাপকারিণী মন্দভাগ্যা মহাভাগ মদ্রাক্ষম (দ)।

(ঢ) ইতরেণেতি। কিঞ্চ নখময়ূখৈঃ দন্তুরতয়া বিষমতয়া হেতুনা চন্দন স্রবতেব স্থিতেন উত্তানীকৃতেন ইতরেণ দক্ষিণেন পাণিনা চন্দ্রস্য আতপম্ অতীবপীড়াজনকমালোকং নিবারয়ন্তমিব স্থিতম্। অত্র ক্রিয়োৎপ্রেক্ষয়োর্নিরপেক্ষতয়া সংসৃষ্টিঃ।

(ত) অন্তিকেতি। কিঞ্চ উদ্গ্রীবেণ অতএবাচিরোদ্গতস্য জীবিতস্য মার্গং বিলোকয়তেব সতা অন্তিকস্থিতেন তপঃসুহৃদা কমণ্ডলুনা সমুপেতম্। অত্র পূর্ব্ববৎ হেতূৎপ্রেক্ষাক্রিয়োৎপ্রেক্ষয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(থ) কণ্ঠেতি। কিঞ্চ কণ্ঠাভরণীকৃতেন মৃণালবলয়েন উপলক্ষিতম্ অতএব রজনীকরস্য চন্দ্রস্য কিরণা এব পাশস্তেন যমস্যেব বদ্ধ্বেব যমেন লোকান্তরমুপনীয়মানম্। অত্র নিরঙ্গকেবলরূপকক্রিয়োৎপ্রেক্ষয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(দ) কপীতি। মদ্দর্শনাৎ মম দর্শনেন দ্বিগুণশোকোদয়াদিত্যর্থঃ অব্রহ্মণ্যং প্রক্রান্তসময়ানুপস্থিতেরিবি ঘি রিদানীমিবাবধ্য পুণ্ডরীক ইত্যর্থঃ অব্রহ্মণ্যমবধ্যোক্তৌ ইত্যমরঃ। অবধ্যোক্তৌ বধ নাহতীত্যুক্তাবিতি তদর্থঃ। উদ্ধহস্তেন উত্থিতকরেণ দ্বিগুণীভূতৌ বাষ্পোদ্গমৌ যস্য তেন আক্রোশতা আক্ষেপং কুর্ব্বতা মনস্তাপং প্রকাশয়তা কপিঞ্জলেন কণ্ঠে পরিষ্বক্তমালিঙ্গিতম্। পাপকারিণী মন্নিমিত্ত এব মরণাৎ মন্দভাগ্যা বাল্য এব বৈধব্যাদিতি ভাবঃ। মহাভাগ মাদৃশরূপাদিগুণশালিত্বাদতীবভাগ্যবন্তম্।

প্রস্থিত প্রাণের সহিত তুমিও চলিয়া যাও না। (ণ) উত্তানভাবে স্থিত দক্ষিণ হস্ত নখের কিরণে অসমান হওয়ায় চন্দনের রস যেন নিঃসারিত করিতেছিল আর তিনি যেন সেই হস্তে চন্দ্রের কিরণ নিবারণ করিতেছিলেন। (ত) তপস্যার বন্ধু একটী কমণ্ডলু নিকটে উদগ্রীব হইয়া থাকিয়া তাঁহার অচিরনির্গত জীবনের পথই যেন দেখিতেছিল। (থ) কপিঞ্জল তাঁহার গলদেশে একটী মৃণালবলয়ের আভরণ করিয়া দিয়াছিলেন তাহাতে বোধ হইতেছিল যে যম যেন চন্দ্রের কিরণরূপ রজ্জুদ্বারা তাঁহাকে বন্ধন করিয়া লোকান্তরে নিয়া যাইতেছেন। (দ) কপিঞ্জল আমাকে দেখিয়া হস্ত উত্তোলন করিয়া এখনই ইহার মৃত্যুবিধান করা উচিত হয় নাই এইরূপ আক্ষেপ করিতে করিতে তাঁহার গলদেশে আলিঙ্গন করিয়াছিলেন, তখন কপিঞ্জলের অশ্রুজল পূর্ব্বাপেক্ষা দ্বিগুণ হইয়া নির্গত হইতেছিল। তখনই মাত্র তাঁহার জীবন গিয়াছিল। আমি পাপিষ্ঠা আমার ভাগ্যও মন্দ তাই আমি সেই মহাভাগ্যবান্‌কে সেই অবস্থায় দেখিয়াছিলাম।

(১) রজনিকর। (২) নীয়মানম্।

तदनु च मूर्च्छान्धकारा च पातालतलमिवावतीर्णा तदा क्वाहमगमम्, किमकरवम्, किं व्यलपम इति सर्वमेव नाज्ञासिषम् (ध)। असवश्च मे तस्मिन् क्षणे किमति कठिनतया अस्य मूढहृदयस्य, किमनेकदुःखसहस्रसहिष्णुतया हतशरीरकस्य, किं विहिततया दीर्घशोकस्य किं भाजनतया जन्मान्तरोपात्तस्य दुष्कृतस्य, किं दुःखदाननिपुणतया दग्धदैवस्य, किमेकान्तवामतया दुरात्मनो मन्मथहतकस्य, केन हेतुना नोदगच्छन्ति स्म तदपि न ज्ञातवती (न)। केवलमतिचिराल्लब्धचेतना दुःखभागिनी वह्नाविव पतितमसह्यशोकदह्यमानमात्मानमवनौ विचेष्टमानमपश्यम् (प)। अश्रद्दधाना च (१) असम्भावनीयं तत्तस्य मरणमात्मनश्च जीवितम्, उत्थाय "हा हा (२) किमिदमुपनतम्" इति मुक्तार्त्तनादा 'हा अम्ब! हा तात!

(ध) तदनु तेति। किञ्च तदनु तत्पश्चात् मूर्च्छान्धकारा मोहव्याप्ता यस्या साहम् पातालस्य तलमवतीर्णेव सती। अत्र क्रियोत्प्रेक्षालङ्कारः।

(न) नन्वीदृशे शोकवशे कथं ते प्राणा न गता इत्याह असव इति। किञ्च मे मम असवः प्राणाः तस्मिन् क्षणे अस्य मूढहृदयस्य अतिकठिनतया किं नोदगच्छन्ति स्म इत्यन्वयः। हतशरीरकस्येति कुत्सायां कप्रत्ययः। विहिततया दैवेन निर्दिष्टतया। जन्मान्तरोपात्तस्य पूर्वजन्मार्जितस्य दुष्कृतस्य पापस्य। एषां मध्ये केन हेतुनेत्यर्थः। अत्र विलक्षणोत्प्रेक्षाव करुणरसस्याङ्गमिति मैत्री नामालङ्कारः। आकाशवाण्यनन्तरमेवालङ्कारिक करुणविप्रलम्भस्याङ्गीकारादेव करुण एव रसः।

(प) केवलमिति। दुःखभागिन्यहम् अतिचिरात् बहुक्षणात् परं लब्धचेतना सती असह्यशोकेन दह्यमानम् अतएव वह्नौ पतितमिव सन्तम् अवनौ भूतले विचेष्टमानं शोकवशेन स्पन्दमानम् आत्मानं केवलमपश्यम्। अत्र क्रियोत्प्रेक्षालङ्कारः।

(फ) अश्रद्दधानेति। किञ्च असम्भावनीयं कारणाभावात् सम्भावयितुमशक्यम् तस्य कुमारस्य तन्मरणम्

(ध) তাহার পর আমার মূর্চ্ছার অন্ধকার আসিয়া উপস্থিত হইল আমি যেন পাতালের তলে যাইয়া নামিলাম, সুতরাং তখন আমি কোথায় গেলাম কি করিলাম এবং কি জাতীয় বিলাপ করিলাম—এ সমস্তই বুঝিতে পারিলাম না। (ন) আমার এই মূঢ় হৃদয় অত্যন্ত কঠিন ছিল বলিয়া কি বা এই ছার দেহ বহুতর দুঃখসমূহ সহ্য করিতে পারে বলিয়া বিধাতা আমার কপালে দীর্ঘকালীন শোক বিধান করিয়াছেন বলিয়া কি বা আমি পূর্ব্বজন্মার্জ্জিত পাপভাগিনী বলিয়া অথবা পোড়া দৈব দুঃখ দিতে নিপুণ বলিয়া, কি বা খলপ্রকৃতি দুরাত্মা কন্দর্প অত্যন্ত প্রতিকূল ছিল বলিয়া ইহার কোন কারণে যে তখন আমার প্রাণ গিয়াছিল না তাহাও আমি বুঝিতে পারিয়াছিলাম না। (প) চিরদুঃখিনী আমি বহুকালের পর চেতনা লাভ করিয়া কেবল ইহাই দেখিতে পাইলাম যে আমার শরীরটা, অসহ্য শোকে দগ্ধ হইতে থাকিয়া অগ্নিতে পতিতের ন্যায় ভূতলে পড়িয়া ছট্‌ফট্ করিতেছে। (ফ) তাঁহার সেই মরণ এবং তাঁহার মরণ হইলে নিজের জীবন ধারণ—এই দুইটাই অসম্ভাবনীয় ছিল, তাই

(१) अश्रद्दधानश्च। (२) क्वचित् विहलितोद्धि।

হা সখ্য !" ইতি ব্যাহরন্তী, "হা নাথ। জীবিতনিবন্ধন। আচক্ষ্ব, ক্ব (১) মামেকাকিনীমশরণামকরুণ। (২) বিমুচ্য যাসি ?। পৃচ্ছ তরলিকাম, ত্বত্কৃতে ময়া যানুভূতাবস্থা (৩)। যুগসহস্রায়মাণ কৃচ্ছ্রেণ নীতো দিবস। প্রসীদ, সকৃদপ্যালপ দর্শয় ভক্তবত্সলতা, (৪) ঈষদপি বিলোকয়, পূরয় মে মনোরথম্, আর্ত্তাস্মি, ভক্তাস্মি, অনুরক্তাস্মি অনাথাস্মি, বালাস্মি, অগতিকাস্মি, দুঃখিতাস্মি, অনন্যশরণাস্মি, মদনপরিভূতাস্মি, কিমিতি ন করোষি দয়াম ? (ফ)। কথয়, কিমপরাদ্ধম কিং বা নানুষ্ঠিত ময়া, কস্যা বা নাজ্ঞায়ামাদৃতম কস্মিন বা ত্বদনুকূলে নাভিরতম, যেন কুপিতোঽসি। দাসীজনম (৫) অকারণাত্ পরিত্যজ্য ব্রজন ন বিভেষি কৌলীনাত (ব) ?। অলীকানুরাগপ্রতারণ (৬) কুশলয়া

তন্মরণে আত্মনী জীবিতম্ অশ্রদ্দধানা অবিশ্বসতী। উপনতমুপস্থিতম্। ব্যাহরন্তী বদন্তী। নিবধ্যতেঽনেনেতি নিবন্ধন কারণম্। জীবিতনিবন্ধন! জীবনধারণকারণ। মদনাত্যাহারিণ গমনসম্ভবেঽপি ত্বত্সঙ্গমাশয়ৈব জীবনধারণাত্ত্বমেব জীবনধারণকারণমিতি ভাব। হে অকরুণ! নির্দ্দয়। অশরণা রক্ষকহীনাম্। বিমুচ্য বিহায়। অগতিকা নিরাশ্রয়া। ন বিদ্যতে অন্যত্ ত্বদ্ভিন্ন শরণ যস্যা সা।

(ব) কথয়েতি। আজ্ঞায়াং তবাদেশে। ত্বদনুকূলে কর্ম্মণি। নাভিরত ময়া নাসক্তম্। দাসীজন দাসীজন মিত্যর্থ। কৌলীনাত্ শরণাগতপরিত্যাগজনিতাল্লোকাপবাদাত্। কৌলীন পশুভিযুদ্ধে কুলীনত্বাপবাদয়ো। ইতি ধরণি।

তখন আমি তাহা বিশ্বাস করিতে পারিতেছিলাম না। উঠিয়া হায়। হায়। এ কি উপস্থিত হইল এইভাবে মুক্তকণ্ঠে আর্ত্তনাদ করিয়া উঠিলাম হা মাত! হা পিত। হা সখীগণ। এইরূপ বলিতে লাগিলাম হা নাথ। হা জীবনধারণের কারণ। হা নির্দ্দয়। তুমি বল রক্ষকহীন অবস্থায় একাকিনী আমাকে পরিত্যাগ করিয়া কোথায় যাইতেছ ?। আমি তোমার জন্য যেরূপ অবস্থা অনুভব করিয়াছি তাহা তরলিকাকে জিজ্ঞাসা কর। একটী মাত্র দিন সহস্র যুগের ন্যায় বোধ হইতেছিল, তাই তাহা কষ্টে অতিবাহিত করিয়াছি। তুমি প্রসন্ন হও একবার মাত্র আলাপ কর ভক্তবৎসলতা দেখাও একটু চাহিয়া দেখ আমার মনের অভিলাষ পূরণ কর, আমি পীড়িত তোমার ভক্ত এবং তোমার প্রতি অনুরক্ত আমি অনাথা বালিকা নিরাশ্রয়া ও দুঃখিতা তুমি ভিন্ন অন্য কেহ আমার রক্ষক নাই এবং আমি কামার্ত্ত, অতএব কেন আমার প্রতি দয়া করিতেছ না ?। (ব) বল আমি কি অপরাধ করিয়াছি ? তোমার কোন্ কার্য্যের বা অনুষ্ঠান করি নাই ? কোন্ আদেশের বা আদর করি নাই ? তোমার অনুকূল কোন্ কার্য্যেই বা আশক্ত থাকি নাই ? যে তুমি কুপিত হইলে। দাসীকে অকারণে পরিত্যাগ করিয়া যাইতেছ ইহাতে লোকাপবাদের ভয় হয় না কি ?। (ভ) আমি মিথ্যা অনুরাগ দেখাইয়া প্রতারণা করিতে নিপুণ,

(১) ক্ব। (২) অকরুণ। (৩) যানুভূতা ব্যথা। (৪) ভক্তজনবত্সলতাম্ প্রকটয় পরমাং কৃপালুতাম্। (৫) দাসজনম্। (৬) বিপ্রতারণ।

किंवा मया वामया पापया (भ)। आ, अहमद्यापि प्राणिमि, हा हतास्मि मन्दभागिनी। कथ मे न त्वम, (१) न तात, (२) न विनय, न बन्धुवर्ग, न परलोक, धिङ्मां दुष्कृतकारिणीम यस्या कृते तवेयमीदृशी दशा वर्त्तते (म)। नास्ति मत्सदृशी नृशंसहृदया, यादृमेव विध भवन्तमुत्सृज्य गृह गतवती। किं मे गृहेण, किमम्बया, किं वा तातेन किं बन्धुभि, किं परिजनेन। हा कमुपयामि शरणम ? अयि दैव! दर्शय दयाम, (३) विज्ञापयामि त्वा देहि दयितदक्षिणाम । भगवति! भवितव्यते! कुरु कृपाम, पाहि वनितामनाथाम। भगवत्यो वनदेवता! प्रसीदत, प्रयच्छतास्य प्राणान्। अम्ब! (४) वसुन्धरे! सकललोकानुग्रहजननि! (५) किमर्थं (६) नानुकम्पसे! तात! कैलासेश! (७)

(भ) अलीकेति। अलीक समागमात्मकफलजननासामर्थ्यान्मिथ्यावत् प्रतीयमान योऽनुरागस्तेन यत् प्रतारण कुमारस्य वञ्चन तत्र कुशल। निपुणया वामया सर्व्वमेव प्रतिकूलया असुखहेतुत्वादिति भाव पापया पापकारिण्या ब्रह्महत्यानिमित्तत्वादित्याशय मया किं वा प्रयोजन स्यादिति शेष।

(म) आ इति। आ इति पीड़ाय कमव्ययम्। मे मम त्व न जातो मरणात। तातोऽपि न पक्षे स्थित इति शेष अनुमत्यभावेऽपोदृशाचरणेन चिरविरागादिति भाव। विनय कुलकन्याया शिक्षागुण सदाचारोऽपि न स्थित अभिसरणादित्यभिप्राय। बन्धुवर्गोऽपि न पूर्ववत स्नेहेन पक्षपाती स्यात अभिसरणेन व तेषामपि चिरविरागादित्यभिप्राय। परलोकोऽपि नास्ति ब्रह्महत्यानिमित्तत्वेन महापातकित्वादिति भाव। अत्र जात पक्षे स्थित इत्यादीनामनुक्तावपि न न्यूनपदत्वदोष प्रत्युत गुण एव वदन्त्या विषादमग्नत्वात तक्तावानन्दमग्नादे स्थान्नानपदता गुण। इति साहित्यदर्पणात।

(य) नास्तीति। दयितो वल्लभ कुमार एव दक्षिणा अवश्यदेय धन ता देहि। हे भवितव्यते! अदृष्ट! अनाथा वनिता स्त्रिय पाहि तदीयप्राणवल्लभप्रदानेनेति भाव। सकलेषु लोकेषु अनुग्रह जनयतीति सा तत्

সকলের পক্ষেই প্রতিকূল এবং পাপিষ্ঠ, সুতরাং আমাদ্বারা প্রয়োজন কি ?। (ম) হায়! আমি এখনও জীবিত আছি হায়! মন্দভাগ্যা আমি বাঁচিয়াও মরিয়াছি। হায়! প্রাণবল্লভ! তুমি আমার হইলে না পিতাও আমার পক্ষে থাকিলেন না কুলকন্যার আচারও রহিল না বন্ধুবর্গও থাকিল না এবং পরলোকও রহিল না। আমি পাপকারিণী বলিয়া আমাকে ধিক্! কারণ যাহার জন্য তোমার এইরূপ অবস্থা হইয়াছে। (য) আমার মত নিষ্ঠুর চিত্ত স্ত্রীলোক আর নাই যে আমি এই অবস্থায় তোমাকে পরিত্যাগ করিয়া গৃহে চলিয়া গিয়াছিলাম। আমার গৃহ মাতা, পিতা বন্ধুবর্গ এবং পরিজনদ্বারা প্রয়োজন কি ?। হায়! আমি কাহার শরণ লইব? হে বিধি! দয়া দেখাও আমি তোমাকে নিবেদন করিতেছি—আমার প্রাণবল্লভকে দান কর। হে মাহাত্ম্যশালি অদৃষ্ট! কৃপা কর অনাথা

(१) कथ न त्व जात। (२) क्वचित् न तात इति नास्ति।
(३) नयि दैव! दर्शय दयाम् अयि दैव! निघृण!। (४) अम्ब।
(५) जननिरतासि। (६) रजनि! नानुकम्पसे। (७) कैलास!।

মব্যাজরমণীয় প্রেম (ল)। প্রায়েণ চ নিসর্গত এবানায়ত-(১) স্বভাবভঙ্গুরাণি সুখানি, আয়ত (২) স্বভাবানি চ দুঃখানি (ব)। তথাহি কথমপ্যেকস্মিন জন্মনি সমাগম, জন্মান্তরসহস্রাণি চ বিরহ প্রাণিনাম্ (শ)। অতো নাহস্যনিন্দ্যমাত্মান নিন্দিতুম্, আপতন্তি হি সংসারপথমতিগহনমবতীর্ণানামিতি বৃত্তান্তা, ধীরা হি তরন্ত্যাপদম" (ষ)। ইত্যেব বিধৈরন্যৈশ্চ মৃদুভিরুপসান্ত্বনৈ সংস্থাপ্য তা পুনরপি নির্ঝরজলেনাঞ্জলিপুটোপনীতেনানিচ্ছন্তীমপি বলাত প্রক্ষালিতমুখীমকারয়ৎ (স)।

অত্রান্তরে চ শ্রুতমহাশ্বেতাবৃত্তান্তোপজাতশোক ইব সমুৎসৃষ্টদিবসব্যাপারো

(ব) প্রায়ণেতি। নিসর্গত এব স্বভাবত এব অনায়তস্বভাবানি অদীর্ঘাণি চ তানি ভঙ্গুরাণি নশ্বরাণি চেতি তানি। আয়তস্বভাবানি দীর্ঘাণি স্থায়ীনি চ। তথা চ মুক্তিবাদে গদাধরভট্টাচার্য্যা — অস্মিন্ সংসারকান্তারে কিয়ন্তি দুঃখদুর্দ্দিনানি কিয়তী বা সুখখদ্যোতিকেতি।

(শ) তথাহীতি। কথমপি অতিকষ্টেন। সমাগম সম্মেলনম্।

(ষ) প্রকৃত সান্ত্বনমুপসংহরতি অত ইতি। হি যস্মাৎ এত বৃত্তান্তা এবম্ভূতা বিপদ্ব্যাপারা অতিগহন নিতান্তভয়ঙ্কর সংসারপথম্ অবতীর্ণানা জনানামন্তিক ইত্যর্থ আপতন্তি উপস্থিতা ভবন্তি তত্র তু ধীরা হি ধৈর্য্যবন্ত এব আপদ তরন্তি ন পুনরধীরা ইত্যর্থ। অতএব ধৈর্য্যমবলম্ব্য কাল প্রতীক্ষস্বেতি ভাব। অত্র সামান্যেন বিশেষসমর্থনরূপোঽর্থান্তরন্যাসোঽলঙ্কার।

(স) ইত্যেবমিতি। উপসান্ত্বন রাশ্বাসবাক্য সংস্থাপ্য প্রকৃতিস্থা কৃত্বা চন্দ্রাপীড অঞ্জলিপুটোপনীতেন নির্ঝরজলেন অনিচ্ছন্তীমপি মুখপ্রক্ষালনমনভিলষন্তীমপি তা মহাশ্বেতা বলাৎ পুনরপি প্রক্ষালিতমুখমকারয় দিত্যন্বয়।

(হ) অত্রেতি। কিঞ্চ অত্রান্তরে অস্মিন্নবসরে শ্রুতেন মহাশ্বেতায়া বৃত্তান্তেন উপজাত শোকো যস্য স তাদৃশ ইব সন্ সমুৎসৃষ্ট পরিত্যক্তো দিবসব্যাপারো দিনকার্য্যম্ আলোকদানরূপ গ্রহকার্য্যরূপশ্চ যেন স। অন্যোঽপি

অত্যন্ত থাকে, সুতরাং সে অকৃত্রিম মনোহর প্রেমকে দর্শন সহ্য করিতে পারে না। (ব) প্রায়ই দেখা যায়—সুখ অল্প ও অল্পকালস্থায়ী, কিন্তু দুঃখ বিস্তৃত ও দীর্ঘকালস্থায়ী। (শ) দেখুন—প্রাণিগণের কোন এক জন্মে কোন প্রকারে মিলন হয়, কিন্তু বিরহটা অন্য সহস্র সহস্র জন্মে হইয়া থাকে, (ষ) অতএব আপনি অনিন্দনীয় আত্মাকে নিন্দা করিতে পারেন না, কারণ যাঁহারা অত্যন্ত ভয়ঙ্কর সংসারমার্গে অবতীর্ণ হইয়াছেন তাঁহাদের এই জাতীয় বিপদ্ অবশ্যই উপস্থিত হইয়া থাকে তবে তাঁহাদের মধ্যে ধীরপ্রকৃতিরাই সেই বিপদ্ হইতে উত্তীর্ণ হইতে পারেন। (স) চন্দ্রাপীড় এইরূপ ও অন্যান্যরূপ কোমল সান্ত্বনাবাক্যে মহাশ্বেতাকে প্রকৃতিস্থ করিয়া অঞ্জলিপুটে নির্ঝরের জল আনয়ন করিয়া মহাশ্বেতা ইচ্ছা না করিলেও বলপূর্ব্বক পুনরায় তাহাকে মুখপ্রক্ষালন করাইলেন।

(হ) এই সময়ে মহাশ্বেতার বৃত্তান্ত শ্রবণ করিয়া ভগবান্ সূর্য্যেরও যেন শোক জন্মিয়া

(১) অনায়ুক্ত। (২) অনায়ুক্ত।

रविरपि भगवानधोमुखतामयासीत (ङ)। अथ चीणे दिवसे, परिणत प्रियङ्गु-मञ्जरी रजोनिभेन (१) पिञ्जरिमणा रज्यमाने विलम्बिनि ब्रध्नमण्डले, (ञ) अवि रल-कुसुम्भ कुसुम रस-रक्त दुकूल कोमलेन चास्तातपेन मुच्यमानेषु दिङ्मुखेषु, (क) चकोर नयन-तारका कान्तिना च (२) पिङ्गलिम्ना विलिप्यमाने तिरोहित-नीलिम्नि व्योम्नि, (ख) कोकिल विलोचन च्छवि बभ्रणि चारु यति (३) सान्ध्ये भुवनमर्च्चि षि, (ग) यथाप्रधा[न]मुन्मिषतसु ग्रहग्रामेषु, (घ) वनमहिषमलीमस वपुषि (४) च लोचनमुषि ( ) मुषित तारकापथ थिम्नि कालिमानमातन्वति

सञ्जातशोको गृहकार्य्यमपहाय अधोमुखता याति। अतएवात्र काव्य या रवौ शोकात जनव्यवहू रसमारोपात् समासोक्तिरलङ्कार स्र कज्जसात्प्रेक्षणात् क्रियोत्प्रेक्षा चानयोरङ्गाङ्गिभावेन सङ्कर।

(ञ) अथेति। परिणता पक्का या प्रियङ्गु मञ्जरी तस्य रजोनिभेन परागतुल्येन पिञ्जरस्य भाव इति पिञ्जरिमा तेन पिङ्गलवर्णेन रज्यमाने ब्रध्नमण्डले सूर्य्य बिम्बे विलम्बिनि आसन्नावस्थिते सति। अत्रोपमालङ्कार।

(क) अविरलेति। किञ्च दिङ्मुखेषु अविरल घन यत् कुसुम्भकुसुमानां रसेन द्रवेण रक्त रञ्जित दुकूल सूक्ष्मवसन तद्वत् कोमलेन सुखस्पर्शेन अस्तातपेन अस्तकालीनसूर्य्यालोकेन मुच्यमानेषु क्रमश परित्यज्यमानेषु सत्सु। अत्र लुप्तोपमालङ्कार।

(ख) चकोरेति। किञ्च तिरोहित सन्ध्यालोकप्रसरणात्तिरोहिता नीलिमा यस्य तस्मिन् व्योम्नि आकाश चकोरस्य पक्षिणो नयनतारकावत् कान्तिर्यस्य तादृशेन पिङ्गलिम्ना पिङ्गलवर्णेन विलिप्यमाने सति। लुप्तोपमा।

(ग) कोकिलेति। किञ्च कोकिलस्य विलोचनच्छविरिव नयनकान्तिरिव बभ्रु पिङ्गल तस्मिन् सान्ध्ये सन्ध्या कालीये अर्च्चिषि तेजसि भुवनम् अरुणयति आरक्त कुर्वति सति। लुप्तोपमा।

(घ) यथेति। ग्रहग्रामेषु नक्षत्रात्मकग्रहकान्तिग्रहगणेषु यथाप्रधान प्रधानमनुसृत्य प्रधानानामनुपूर्व्यानुक्रमेणेत्यर्थ उन्मिषतसु उदयेन प्रकाशमानेषु सत्सु।

(ङ) वनेति। वनमहिषस्येव मलीमस मलिन वपुराकारो यस्य तस्मिन्। लोचन मुष्णाति दृष्टिशक्तिमप हरतीति तस्मिन एतेन गाढत्व प्रतिपादितम्। मुषित अपहृतो व्याप्त्या दृष्टिनिरोधेनाल्पवत् प्रत्यायित तारकापथस्य

छिल, त[खन] तिनि दिनेर कार्य्य परित्याग करिया अधोमुख [ह]लेन। (ञ) ताहार पर दिन [शे]ष हइया आसिल सूर्य्यमण्डल प्रियङ्गुलतार पक्कमञ्जरीर रेणुर न्याय [पि]ङ्गलवर्णे रञ्जित हइया नीचर दिक् झुलिया पड़िल। (क) कुसुमफुलेर रसे रञ्जित ओ घन सूक्ष्म वसनेर न्याय कोमल अस्तकालीन सूर्य्यालोक क्रमे समस्त दिक्गुलि परित्याग करिते लागिल। (ख) आकाशेर नीलवर्ण लुकाइया गेल क्रमे चकोरपक्षीर नयनेर तारार न्याय कान्तिसम्पन्न पिङ्गलवर्णे समस्त आकाश लिप्त हइल। (ग) कोकिलेर नयनेर न्याय पिङ्गलवर्ण सन्ध्यार आलोक जगत् आरक्तवर्ण करिल। (घ) नक्षत्रसमूह प्रधान अनुक्रमे उदय पाइते लागिल। (ङ) वन्य महिषेर न्याय मलिनवर्ण रात्रिर अन्धकार लोकेर दृष्टिशक्ति लोप करिया, आकाशेर

(१) रजोनिभे। (२) तारक कारकान्तिना। (३) अरुणायति।

(४) वनमलीमसवपुषि। (५) क्वचिदयं पाठो नास्ति।

শ্যামে তমসি, (ঙ) অতনু তিমির-তিরোহিত-হরিতভাসু (১) গহনতামায়ান্তীষু তরুরাজিষু, (চ) রজনি জল বিন্দু জাল জনিত জড়িম্নি বহল-বন কুসুম-পরিমলানুমিতগমনে চলিত লতা বিটপ-গহনে প্রবৃত্তে চ পবনে, (ছ) নিদ্রা নিভৃত পতত্রিণি ত্রিয়ামামুখে, (জ) মহাশ্বেতা মন্দ মন্দমুত্থায় ভগবতী মুপাস্য পশ্চিমা সন্ধ্যাম, কমণ্ডলুজলেন ক্ষালিতচরণা বল্কলশয়নীয়ে সখেদ মুষ্ণঞ্চ নিঃশ্বস্য (২) নিষসাদ (ঝ)। চন্দ্রাপীড়োঽপ্যুত্থায় সকুসুম প্রস্রবণ-জলাঞ্জলিমবকীর্য্য কৃতসন্ধ্যাপ্রণামস্তস্মিন দ্বিতীয়ে শিলাতলে মৃদুভির্লতাপল্লবৈ শয্যামকল্পয়ত্ (ঞ)। উপবিষ্টশ্চ তস্যাং পুন পুন (৩) তামেব মনসা মহাশ্বেতা

গগনস্য প্রথিমা বিস্তারো যত্র যস্মিন্ এতেন সর্ব্বব্যাপিত্বং সূচিতম্। শ্যামে শ্যামে রাত্রিরদর্শিতে শ্যামে তস্মিন্ তমসি অন্ধকারে কালিমানং জগতঃ কৃষ্ণত্বম্ আতন্বতি বিস্তারয়তি সতি। অত্র লুপ্তোপমাবৃত্ত্যনুপ্রাসয়োঃ সংসৃষ্টিঃ।

(ঙ) অতন্বিতি। অতনুভিঃ নিবিড়ৈঃ তিমিরৈঃ তিরোহিতা আবৃতা হরিতা হরিদ্বর্ণা ভা দীপ্তিঃ যাসাং তাসু তরুরাজিষু গহনতাম্ অন্তরালাভাবম্ আযান্তীষু সতীষু। অত্র বৃত্ত্যনুপ্রাসোঽলঙ্কারঃ।

(চ) রজনীতি। রজনিজলবিন্দুজালেন তুষারকণসমূহেন জনিতো জড়িমা শীতলতা যস্য তস্মিন্ বহলৈঃ প্রচুরৈঃ বনকুসুমানাং পরিমলৈঃ সৌরভৈঃ অনুমিতং প্রত্যায়িতং গমনং যস্য যস্মিন্ তথা চলিতানি স্পন্দিতানি লতাবিটপানাং বল্লরীপল্লবানাং গহনানি বনসমূহা যেন তস্মিন্ পবনে বায়ৌ চ প্রবৃত্তে বহতি সতি। বিশেষণত্রয়েণ ক্রমাদ্বায়োঃ শৈত্য সৌগন্ধ্য মান্দ্যানীতি গুণত্রয়মভিহিতম্। অত্র বৃত্ত্যনুপ্রাসচ্ছেকানুপ্রাসান্ত্যানুপ্রাসা যথাযোগমুন্নেয়াঃ।

(ছ) নিদ্রেতি। নিদ্রয়া নিভৃতা নিঃশব্দাঃ পতত্রিণো বিহঙ্গা যস্মিন্ তত্র ত্রিয়ামামুখে প্রদোষকালে প্রবৃত্তে সতি।

(জ) মহেতি। ভগবতীং মাহাত্ম্যবতীম্। পশ্চিমাং সন্ধ্যাং সায়ংসন্ধ্যাম্। নিষসাদ উপবিবেশ।

(ঝ) চন্দ্রেতি। অবকীর্য্য সূর্য্যাদ্দেশেনাঞ্জলিনা নিক্ষিপ্য। কৃতো সন্ধ্যাপ্রণামো সন্ধ্যেষ্টদেবতানমস্কারো যেন সঃ।

(ঞ) উপেতি। তস্যাং শয্যায়াম্ অন্বমাবর্ত্তিচিন্তয়ত্। অয়ং কুসুমায়ুধ এব নাম হত্য কিল

বিস্তার করায়, জগতের সর্ব্বত্র কালিমা বিস্তার করিল। (চ) গাঢ় অন্ধকারে বৃক্ষসমূহের হরিদ্বর্ণ তিরোহিত রহিল, সুতরাং তাহা আরও ঘন হইয়া উঠিল। (ছ) তখন যে বায়ু বহিতে হইতেছিল রাত্রির শিশিরবিন্দুসমূহ তাহার শীতলতা জন্মাইয়াছিল বন্য পুষ্পের প্রচুর সৌরভে তাহার গমন সূচিত হইতেছিল এবং সেই বায়ুভরে লতার পল্লবগুলি কাঁপিতেছিল। (জ) এই ভাবে প্রদোষকাল উপস্থিত হইলে পক্ষিগণ নীরব হইয়া গেল। (ঝ) এমন সময়ে মহাশ্বেতা ধীরে ধীরে উঠিয়া মাহাত্ম্যশালিনী সায়ংসন্ধ্যার উপাসনা করিয়া কমণ্ডলুর জলে চরণযুগল প্রক্ষালন করিল। বিষাদের সহিত উষ্ণ নিশ্বাস ত্যাগ করিয়া, বল্কলময় শয্যার উপরে উপবেশন করিল। (ঞ) এদিকে চন্দ্রাপীড়ও উঠিয়া অঞ্জলিপুটে পুষ্পের সহিত ঝরণার জল লইয়া সূর্য্যের উদ্দেশে তাহা নিক্ষেপ করিলেন পরে সন্ধ্যা ও ইষ্টদেবতার নমস্কার করিয়া কোমল লতাপল্লবদ্বারা সেই দ্বিতীয় প্রস্তরখণ্ডের উপরে শয্যা নির্ম্মাণ করিলেন। (ট)

(১) হারিততাসু। (২) উষ্ণ নিশ্বস্য। (৩) ক্বচিৎ দ্বিরুক্তির্নাস্তি।

वृत्तान्तमन्वभावयत्। आसीच्चास्य मनसि—"एव नामायम् (१) अप्रतीकारदारुणो दुर्विषहवेग कष्ट कुसुमायुध, यदनेनाभिभूता महान्तोऽप्येव ।नपेक्षितकालक्रमा समुत्सारितधैर्य्या (२) सद्यो जीवित जहति। सर्वथा नमो भगवते त्रिभुवनाभ्यर्च्चितशासनाय मकरकेतनाये'ति (ट)।

पुन पप्रच्छ चैनाम्—'भगवति। सा तव परिचारिका वनवासव्यसनमित्र दु खसब्रह्मचारिणी तरलिका क्व गता' इति (ठ)।

अथ साऽकथयत—'महाभाग! यत्तन्मया कथितममृतसम्भवमप्सरसा कुलम, तस्मान्मदिरेति नाम्ना मदिरायतेक्षणा कन्यकाभूत् (ड)। तस्यास्तामौ सकल-

अप्रतीकार अतएव दारुण दुर्विषहो वेगो यस्य स तथा कष्ट कष्टकर। यद्‌यस्मात् अनेन कुसुमायुधेन अभिभूता आक्रान्ता महान्तोऽपि जना अनपेक्षितकालक्रमा असोढसमयक्षेपा तथा समुत्सारित कुसुमायुधेनैव दूरीकृत धैर्य्य येषां तथाभूता सन्त। जहति परित्यजन्ति। त्रिभुवनेन त्रिजगद्वासिना जनेन अभ्यर्च्चित शासनमादेशो यस्य तस्मै मकरकेतनाय कन्दर्पाय।

कादम्बर्य्या खलु महाश्वेतावृत्तान्त एव पताकास्थानपातीति मन्तव्यम् व्यापि प्रासङ्गिक वृत्त पताकेत्यभिधीयत इति साहित्यदर्पणात्।

(ठ) कादम्बरीवृत्तान्तमवतारयितु पुन प्रश्न प्रवर्त्तयति पुनरिति। एनां महाश्वेताम्। वनवास एव व्यसन विपत्तिस्तत्र मित्र सहायीभूता तथा दु खे सतीर्थ्या समानदु खभोगिनीत्यर्थ ।

(ड) अथेति। मदिरा मद्य रूपेण तद्वन्मनोमादकत्वान्मदिरेति नाम। मदिरावत् मत्तखञ्जनवत् आयते दीर्घे ईक्षणे चक्षुषी यस्या सा। मदिरा (स्त्री) मत्तखञ्जन मद्यम। इति शब्दकल्पद्रुम।

তাহার পর সেই শয্যার উপরে উপবেশন করিয়া মনে মনে সেই মহাশ্বেতার বৃত্তান্তই বার বার ভাবিতে লাগিলেন। আবার উঁহার মনে হ'ল—"কামদেব এইরূপই বটেন, ইঁহার প্রতীকার নাই, তাই ইনি ভয়ঙ্কর, ইঁহার বেগ সহ্য করা যায় না সুতরাং ইনি অত্যন্ত কষ্টদায়ক, যেহেতু—ইনি আক্রমণ করিলে প্রধান ব্যক্তিরাও কালবিলম্ব সহ্য করিতে পারেন না তাঁহাদেরও ধৈর্য্য নষ্ট হইয়া যায়, তখন তাঁহারা সদ্যই জীবন ত্যাগ করেন, অতএব ত্রিজগতের লোক যাঁহার আদেশের পূজা করে সেই ভগবান কামদেবকে সর্ব্বপ্রকারে নমস্কার করি।

(ঠ) তদনন্তর চন্দ্রাপীড় পুনরায় মহাশ্বেতাকে জিজ্ঞাসা করিলেন—ভগবতি! আপনার বনবাসবিপদের সহায় ও দুঃখভোগের সহচরী পরিচারিকা সেই তরলিকা কোথায় গিয়াছে?।

(ড) তাহার পর মহাশ্বেতা কহিল—মহাশয়! আমি পূর্ব্বে যে সেই অমৃত হইতে উৎপন্ন অপ্সরার বংশের কথা বলিয়াছি, সেই বংশ হইতে মদিরায়তনয়না মদিরানামে একটী কন্যা জন্ম গ্রহণ করেন। (ঢ) সমস্ত গন্ধর্ব্বগণের মুকুটাগ্রপীঠে যাঁহার চরণযুগল প্রতিষ্ঠিত

(१) एवमयम्। (२) समवधारितधैर्य्या।

गन्धर्वकुलमुकुटकुट्मलपीठ-प्रतिष्ठितचरणो देवश्चित्ररथः पाणिमग्रहीत् (ढ)। अपरिमितगुणाकृष्टहृदयश्चान्यवनितादुर्लभेन (१) अथ कृतावरोधान्तःपुरेण हेमपट्ट-लाञ्छनेन छत्र-चामर चिह्नेन महादेवीशब्देन परं प्रीतः प्रसादमकरोत् (ण)। अन्योन्यप्रेमसवर्द्धनपरयोश्च तयोर्यौवनसुखानि सेवमानयोः कालेनाश्चर्य्यभूतमेक जीवितमिव पित्रोः, अथवा सर्वस्यैव गन्धर्वकुलस्य वा जीवलोकस्य, दुहितृरत्न मुदपादि कादम्बरीति नाम्ना (त)। सा च मे जन्मतः (२) प्रभृत्येकासन शयन-पानाशना परं प्रेमस्थानमखिलविश्रम्भधाम द्वितीयमिव हृदयं बालमित्रम् (थ)। एकत्र तया मया च नृत्यगीतादिकलासु (३) कृता परिचया, शिशुजनोचिताभिश्च

(ढ) तस्या इति। किञ्च असौ प्रसिद्धः सकलस्य गन्धर्वकुलस्य मुकुटकुट्मलं किरीटाग्रमेव पीठं तत्र प्रतिष्ठितौ चरणौ यस्य सः सकलगन्धर्वराजचक्रवर्त्तीत्यर्थः देवश्चित्ररथः तस्या मदिरायाः पाणिमग्रहीत्।

(ण) अपरीति। किञ्च अपरिमितैर्गुणैः मदिरायाः सौन्दर्य्यविनयादिभिराकृष्टं हृदयं यस्य स तादृशश्चित्ररथः परं प्रीतः सन्। अवकृतं न्यूनीकृतम् अशेषं समस्तम् अन्तःपुरम् अन्तःपुरस्थस्त्रीजनो येन तेन हेमपट्टं स्वर्णफलकम् उपवेशनाय तद्दानमित्यर्थः लाञ्छनं चिह्नं यस्य तेन छत्रं चत्र चामरञ्च परिचर्य्यार्थं भृत्यसमेततद्दानमित्यर्थः चिह्नं यस्य तेन महादेवीशब्देन महिषीबोधकमहादेवीत्युपाधिदानेन प्रसादमनुग्रहमकरोत्।

(त) अन्योन्येति। अन्योन्यप्रेम्णः परस्परप्रणयस्य संवर्द्धने परौ परस्परानुकूल्याचरणेन यत्नवन्तौ तयोः सतोः तयोर्मदिराचित्ररथयोः। पित्रोर्मातापित्रोः अथवा सर्वस्यैव गन्धर्वकुलस्य वा अथवा सर्वस्यैव जीवलोकस्य एकं जीवितमिव अद्वितीयं जीवनमिव अलौकिकसौन्दर्य्यादिसकलगुणाकरत्वादिति भावः। कादम्बरी मद्यम् रूपेण तद्वन्मनोमादकत्वात् कादम्बरीति नाम। अत्र क्रियोत्प्रेक्षालङ्कारः।

(थ) सेति। एकमभिन्नस्थानजातम् आसनमुपवेशनं शयनं पानम् अशनं भोजनञ्च यस्याः सा परं प्रेमस्थानम् अतीवप्रणयपात्रम् अखिलविश्रम्भधाम समस्तविश्वासभाजनम्। अत्र द्रव्योत्प्रेक्षालङ्कारः।

রহিয়াছে সেই সুপ্রসিদ্ধ গন্ধর্ব্বরাজ চিত্ররথ সেই মদিরার পাণিগ্রহণ করেন (ন) এবং মদিরার অসংখ্য গুণে আকৃষ্টচিত্ত গন্ধর্ব্বরাজ চিত্ররথ অত্যন্ত সন্তুষ্ট হইয়া তাঁহাকে মহাদেবী উপাধি দান করিয়া অনুগ্রহ করেন, সেই মহাদেবীশব্দ অন্য রমণীর পক্ষে দুর্লভ ছিল এবং তাহাতে অন্তঃপুরের অন্যান্য রমণী মদিরা হইতে নীচে পড়িয়া গেল এবং গন্ধর্ব্বরাজ সেই উপাধির সঙ্গে সঙ্গে একখানা সুবর্ণফলক দান করিলেন এবং মদিরার জন্য ছত্রধারী বেত্রধারী ও চামরধারী ভৃত্য নিযুক্ত করিলেন। (ত) তাঁহারা পরস্পর, পরস্পরের প্রণয় বৃদ্ধি করিতে যত্নবান্ থাকিয়া যৌবনের সমস্ত সুখ ভোগ করিতে লাগিলেন, কালক্রমে কাদম্বরী নামে তাঁহাদের একটী আশ্চর্য্য কন্যারত্ন জন্মগ্রহণ করিল, সে পিতামাতার অথবা গন্ধর্ব্বগণের কিংবা সমগ্র জীবলোকেরই যেন একমাত্র জীবন ছিল। (থ) জন্মকাল হইতে কাদম্বরী আর আমি একস্থানে উপবেশন শয়ন পান ও ভোজন করিতাম, তাহাতে সে আমার অত্যন্ত প্রণয়ের পাত্র ও সমস্ত বিশ্বাসভাজন দ্বিতীয় হৃদয়ের ন্যায় বাল্যসখী। (দ) সে আর আমি,

(१) वनितादुर्लभेन। (२) जन्मनः। (३) गीतनृत्यकलासु।

क्रीडाभिरनियन्त्रणनिर्भरमपनीतो बालभावः (द)। सा चामुनैव मदीयेन वृत्तवृत्तान्तेन समुपजातशोका निश्चयमकार्षीत्—"नाहं कथञ्चिदपि सशोकायां महाश्वेतायामात्मनः पाणिं ग्राहयिष्यामि" इति। सखीजनस्य पुरतः शपथमभिहितवती च—"यदि कथमपि मामनिच्छन्तीमपि बलात्तातः कदाचित् कस्मैचिद्दातुमिच्छति, तदाहमनशनेन वा हुताशनेन वा रज्ज्वा वा विषेण वा नियतमात्मानमुत्स्रक्ष्यामि" इति (ध)। सर्वञ्च तदात्मदुहितुः कृतनिश्चयं निश्चलभाषितं कर्णपरम्परया परिजनसकाशाद्गन्धर्वराजश्चित्ररथः स्वयमशृणोत्। गच्छति काले समुपारूढनिर्भरयौवनामालोक्य सुतां (१) बलवदुपतापपरवशः (२) क्षणमपि न धृतिमलभत। एकापत्यतया चातिप्रियतया च न शशाक किञ्चिदपि तामभिधातुम् (न)। अपश्यंश्चान्यदुपायान्तरम्, इदमत्र प्राप्तकालमिति मत्वा, तया

(द) एकत्रेति। परिचयः अभ्यासः। नियन्त्रणस्य बाधाया अभावः अनियन्त्रणं तस्य निर्भरः अतिशयो यस्मिन् कर्म्मणि तद्यथा तथा अत्यन्तनिर्बाधमित्यर्थः। बालभावः शैशवम् अपनीतः अतिवाहितः।

(ध) सेति। महाश्वेतायां शोकनिवृत्तौ तु पाणिं ग्राहयिष्यामीत्यभिप्रायः। अनशनेन अभोजनेन हुताशनेन तत्र प्रवेशेन रज्ज्वा उद्बन्धनेन विषेण विषभक्षणेन। नियतं निश्चितम् आत्मानं स्वदेहम् उत्स्रक्ष्यामि परित्यक्ष्यामि।

(न) सर्वमिति। निश्चलभाषितं शपथवाक्यम्। सुतां कन्यां कादम्बरीम् समुपारूढः समुत्पन्नः निर्भरः अतिमात्रः यौवनं यस्यास्ताम्। बलवतो महत उपतापस्य सन्तापस्य परवशः आयत्तः। धृतिं धैर्य्यम्।

(प) अपश्यन्निति। अत्र अन्यान्तरशब्दयोरैकार्थ्यं तया अथ गतपुनरुक्ततादोषः स च अन्यमुपायमिति पाठेन

একত্র নৃত্যগীতাদি কলাবিদ্যা অভ্যাস করিয়াছি এবং বালকের উপযুক্ত নানাবিধ খেলা করিয়া অবাধে বাল্যকাল অতিবাহিত করিয়াছি। (ধ) কিন্তু আমার এই শোকের বৃত্তান্তে তাহারও শোক জন্মিয়াছিল তাই সে স্থির করিয়াছে যে মহাশ্বেতা শোকাতুর থাকিতে আমি কোন প্রকারেও নিজের পাণিগ্রহণ করাইব না এবং সখীগণের সম্মুখে শপথ করিয়াছে যে আমার অনিচ্ছাসত্ত্বেও পিতা যদি বলপূর্ব্বক আমাকে কখনও কাহারও হস্তে দান করিতে ইচ্ছা করেন তাহা হইলে আমি অনশন অথবা অগ্নিপ্রবেশ কিংবা উদ্বন্ধন অথবা বিষভক্ষণ করিয়া নিশ্চয়ই প্রাণ পরিত্যাগ করিব। (ন) তাহার পর গন্ধর্ব্বরাজ চিত্ররথ নিজ কন্যার মনে মনে কৃতনিশ্চয় ও শপথবাক্য—এ সমস্তই কর্ণপরম্পরায় কোন পরিজনের নিকট নিজেই শুনিতে পাইলেন। কিছুকাল অতীত হইল তাহার পর কন্যা কাদম্বরীর পূর্ণ যৌবনকাল উপস্থিত দেখিয়া অত্যন্ত সন্তপ্ত হইয়া ক্ষণকালের জন্যও ধৈর্য্যলাভ করিতে পারেন নাই এবং কাদম্বরী একমাত্র সন্তান তাহাতে আবার অত্যন্ত প্রিয়, সুতরাং নিজে, তাহাকে কিছুই বলিতে পারেন নাই (প) অতএব অন্য উপায় না দেখিয়া "এখনে

(१) सुतां। (२) बलवद्दूयमानः।

মহাদেব্যা মদিরয়া সহাবধার্য্য ক্ষীরোদনামানং কঞ্চুকিনং ( ) "বৎসে! মহাশ্বেতে! ত্বদ্ব্যতিকরেণৈব (২) দগ্ধহৃদয়ানামিদমপরমস্মাকমুপস্থিতম্, ইদানীন্তু কাদম্বরী মনুনেতুং (৩) ত্বং শরণম" ইতি সন্দিশ্য মৎসমীপমদ্যৈব (৪) প্রত্যূষসি প্রেষিতবান্ (প)। ততো ময়া গুরুবচনগৌরবেণ সখীপ্রেম্ণা চ ক্ষীরোদেন সার্দ্ধং সা তরলিকা "সখি! কাদম্বরি! কিং দুঃখিতমপি জনমতিতরাং দুঃখয়সি। জীবন্তী- মিচ্ছসি চেন্মাং তৎ কুরু গুরুবচনমবিতথম্" ইতি সন্দিশ্য বিসর্জিতা (ফ)। নাতিচিরং গতায়াঞ্চ তস্যামনন্তরমেবেমাং ভূমিমনুপ্রাপ্তো মহাভাগ" ইত্যভিধায় তূষ্ণীমভবৎ (ব)।

অত্রান্তরে লাঞ্ছনচ্ছলেন বিডম্বয়ন্নিব শোকানলদগ্ধমধ্যং মহাশ্বেতাহৃদয়ম,

সমাধেয়। প্রাতঃকালমুষিতম্। অবধার্য্য আলোচনয়া নির্ণীয়। কঞ্চুকিনমিতি প্রেষিতবানিতি পরক্রিয়ায়াঃ কর্ম্ম। ত্বদ্ব্যতিকরেণৈব তব বৃত্তান্তেনৈব দগ্ধং শোকানলেন প্লুষ্টং হৃদয়ং যেষাং তেষাম্ অস্মাকম্ ইদমপরং দুঃখমুপস্থিতম্ কাদম্বর্য্যা আত্মপাণিগ্রাহস্য অসম্মতিজনিতমিতি ভাবঃ। অনুনেতুম্ অনুনয়েন পাণিগ্রাহস্য সম্মতীকর্ত্তুং ত্বমেব শরণমস্মাকমাশ্রয়ঃ তন্নিমিত্তমেবাস্মচ্ছপথকরণাৎ ত্বদ্বচনাধীনত্বাচ্চেতি ভাবঃ।

(ফ) তত ইতি। সা তরলিকা বিসর্জিতেতি পরেণান্বয়ঃ। জনং মামিত্যর্থঃ। দুঃখয়সি আত্মপাণিগ্রাহস্য শপথপূর্ব্বকাসম্মত্যেতি ভাবঃ। তত্তদা গুরুবচনং পিতুরাদেশবাক্যম্ অবিতথং কুরু আত্মপাণিগ্রাহস্য সম্মতিদানেন সত্যং প্রতিপাদয় অন্যথাহং জীবনং পরিত্যক্ষ্যামীতি ভাবঃ। অত্র তদেত্যর্থে তদিত্যবাচকত্বদোষঃ স চ তদেতি পাঠেন বা সমাধেয়ঃ।

(ব) নাতীতি। তস্যাং তরলিকায়াম্। নাতিচিরং নাতিপূর্ব্বম্। মহাভাগো ভবান্।

(ভ) অত্রেতি। অত্রান্তরে অস্মিন্নবসরে। ধূর্জ্জটেঃ ভারভূতা জটা যস্য অথবা ধূর্ব্বিব জটাঽস্যেতি ধূর্জ্জটিঃ শিবস্তস্য

ইহাই উচিত এইরূপ মনে করিয়া, সেই মহাদেবী মদিরার সহিত আলোচনাপূর্ব্বক স্থির করিয়া অদ্যই প্রাতঃকালে আমার নিকটে ক্ষীরোদনামে কোন কঞ্চুকীকে এই কথা বলিয়া পাঠাইয়া দিয়াছিলেন যে "বৎসে! মহাশ্বেতে! কেবল তোমার ঘটনাতেই শোকানলে আমাদের হৃদয় দগ্ধ হইয়া গিয়াছে তাহার পর আবার এই আর এক দুঃখ উপস্থিত, অতএব এখন অনুনয়বাক্যে কাদম্বরীকে সম্মত করিতে একমাত্র তুমিই আমাদের আশ্রয়।" (ফ) তাহার পর আমি গুরুজনের আদেশের প্রতি গৌরব ও সখীর প্রতি প্রণয়বশতঃ, এই কথা বলিয়া ক্ষীরোদের সঙ্গে তরলিকাকে পাঠাইয়া দিয়াছি যে "সখি! কাদম্বরি! তুমি দুঃখিত ব্যক্তিকে আরও দুঃখিত করিতেছ কেন? তুমি যদি আমাকে জীবিত দেখিতে ইচ্ছা কর, তাহা হইলে পিতার বাক্য সত্য কর। (ব) তরলিকা অনতিপূর্ব্বে চলিয়া গেলে তাহার পরই আপনি এখানে উপস্থিত হইয়াছেন এই কথা বলিয়া মহাশ্বেতা নীরব হইল।

(ভ) এই সময়ে মহাদেবের চূড়ার মণি ও মাহাত্ম্যশালী চন্দ্র উদয় পাইলেন, তিনি

(১) ক্বচিৎ বুদ্ধিং গত্বা ইত্যধিক পাঠঃ। (২) তদ্ব্যতিরেকেণৈব। (৩) কাদম্বরীব্যতিকরে।
(৪) ক্বচিৎ অদ্যৈব ইতি পাঠো নাস্তি।

उद्वहन्निव मुनिकुमारवधमहापातकम्, दर्शयन्निव चिरकाललग्नं दक्षशापानल-दाहचिह्नम् अविरलभस्माङ्गरागधवल कृष्णमृगाजिन (१) प्रावृतार्द्धौ वामस्तन इवाम्बिकाया, धूर्जटिजटामण्डलचूडामणिर्भगवानुदगात्तारकाराज (भ)।

क्रमेण चोद्गते गगनमहापयोधिपुलिने सप्तलोकनिद्रामङ्गलकलसे कुमुदबान्धवे विघटितकुमुदवने धवलितदशदिशि शङ्खश्वेते श्वेतातपत्रायमाणे (२) मानिनी-मानशत्रौ (३) शुचिशोचिषि (४) शशाङ्कमण्डले, (म) शशिकरकलापकलितासु (५)

जटामण्डलरूपा या चूडा तस्या मणि। एतेन माहात्म्यशालित्वमस्य सूचितम्। भगवान् तारकाराजश्चन्द्र लाञ्छनच्छलेन क्रोडस्थमृगाङ्कव्याजेन शोकानलेन दग्ध मध्यमभ्यन्तर यस्य तत्तादृश महाश्वेताया हृदय विडम्बय न्निव अनुकुर्वन्निव लाञ्छनच्छलेन मुनिकुमारस्य पुण्डरीकस्य वधो मदनसहायभावेन हत्यैव महापातक तत् उद्वह न्निव वक्षसि धारयन्निव मालिन्य श्यामत्वं पापे इत्यादिकविसमयप्रसिद्धेर्महापातकस्य मालिन्यवत्त्वेनेति बोध्यम्। तथा लाञ्छनच्छलेन चिरकाललग्न दक्षशापानलेन यो दाहस्तस्य चिह्न दर्शयन्निव लोकानिति शेष अविरलेन घनेन भस्मनैव अङ्गरागेण धवल श्वेत तथा कृष्णमृगस्य कृष्णसारस्य अजिनेन चर्म्मणा प्रावृतम् आच्छादितम् अर्द्ध यस्य स तादृश चन्द्रस्य कान्ति शुभ्रत्वादपराद्ध च कलङ्कमालिन्यात्तत्साम्यप्रतिपादनार्थमिद विशेषणद्वयम्। अम्बिकाया पार्वत्या वामस्तन इव उदगात्। पार्वत्या अर्द्धनारीश्वरकाले दक्षिणस्तनस्य शिवदेहान्तर्भावेनादर्शनात् वामस्तन इति स्वरूपमात्रमुक्तम्। अत्र प्रथमास्तिस्र सापह्नवा क्रियोत्प्रेक्षा परा च श्रौतोपमा इत्यासां मिथो निरपेक्षतया संसृष्टि।

पुरा किल चन्द्र अश्विन्यादिसप्तविंशतिदक्षकन्या परिणीय तासु च रोहिण्यामेव वल्लभावो बभूव। यदा तु इतरासामनुरोधाद्दक्षेण सर्वास्वेव समरागो भवितुमुपदिष्टोऽपि चन्द्रस्तथा न चकार तदा तु त्व यक्ष्मरोगी भवेति दक्षस्त शशाप इति पद्मपुराणवार्त्ता।

(म क्रमेणेति। किञ्च गगनमेव महापयोधि असीमस्वच्छनीलत्वसाम्यान्महासमुद्रस्तस्य पुलिन शुभ्रत्व साम्यात्तोयोत्थितवालुकामयदेशस्तस्मिन। अत्र परम्परितरूपकमलङ्कार। सप्तानां लोकानां भूरादीनां निद्रार्थौ मङ्गलकलसो निद्रामङ्गलकलसस्तत्स्वरूपे निद्राकालीनावस्था तत् शुभ्रत्वाद्दर्शनलाभेति भाव। अत्र निरङ्ग केवल रूपकमलङ्कार। कुमुदानां बान्धवे तत्फुल्लताविधानाद्बन्धुभूते। विघटित विकासित कुमुदवन येन तस्मिन्। अत्र कुमुदशब्दस्य द्विरुपादानात् पुनरुक्ततादोष स च विघटितवने इति पाठेन समाधेय। धवलिता ज्योत्स्नया शुभ्रीकृता दश दिशो येन तस्मिन्। शङ्खवत् श्वेते इति लुप्तोपमा। श्वेतातपत्रवदाचरतीति श्वेतातपत्रायमाणे

কলঙ্কচ্ছলে শোকানলদগ্ধ মহাশ্বেতার হৃদয়েরই যেন অনুকরণ করিতেছিলেন মুনিকুমার হত্যার মহাপাতকই যেন ধারণ করিতেছিলেন এবং দক্ষের শাপানলে যে দগ্ধ হইয়াছিলেন চিরকালসংলগ্ন সেই চিহ্নই যেন দেখাইতেছিলেন এবং ঘনভস্মলেপনে শুভ্রবর্ণ ও কৃষ্ণসারের চর্ম্মে অর্দ্ধ আবৃত পার্ব্বতীর বামস্তনটীর ন্যায় বিরাজ করিতেছিলেন।

(ম) তাহার পর আকাশরূপ মহাসমুদ্রের পুলিনস্বরূপ ভূপ্রভৃতি সপ্ত লোকের মাঙ্গলিক নিদ্রাকলসস্বরূপ কুমুদগণের বন্ধু শঙ্খের ন্যায় শুভ্রবর্ণ ও মানিনীগণের মানভঙ্গকারী শুভ্রকিরণ চন্দ্রমণ্ডল কুমুদবন প্রকাশ করিয়া দশদিক্ শুভ্রবর্ণ করিয়া এবং শ্বেতচ্ছত্রের ন্যায় শোভিত

(१) मृगाजिन। (२) श्वेतिमानमातन्वति। (३) मानदस्यौ।
(४) क्वचिदयं पाठो नास्ति। (५) शशिकरकलितासु।

প্রজল্পীষু (১) ক্রমিমানমীভজ্বীষু প্রভাসু, (য) প্রস্রবৎসু চ কৈলাসশশিমণি-শিলানা সর্ব্বত স্রোত স্রাবিষু প্রস্রবণেষু, (র) মৃণালকন্দলিনি চাবস্কন্দপতিত-চন্দ্রকর ইব বিলুপ্তকমলবনশোভে ভাত্যচ্ছোদসর পয়সি, (ল) সমুপোঢমোহনিদ্রে চ দ্রাঘীয়োবীচিবিচলিতবপুষি বিরুবতি বিরহিণি চক্রবাকচক্রবালে (ব) নির্ব্বৃত্তে চ (২) চন্দ্রোদয়ে বিদ্রুতে হর্ষ-নয়নজলকণা নীহারিণি বিয়দ্বিহারিণি

তস্মিন্। অত্র কাঞ্চ নগীপমালঙ্কার। মানিনীনাং রমণীনাং মানশশী অতীবোদ্দীপকত্বান্মানভঙ্গকারিণি। তথা শুভ্রাণি শুভ্রাণি শোভীষি প্রভা যস্য যস্মিন। অত্র চ্ছেকানুপ্রাসোঽলঙ্কার। ঈদৃশে শশাঙ্কমণ্ডলে ক্রমেণ উদ্গতে উপরি উত্থিতে সতি।

(য) শশীতি। শশিকর চন্দ্রকিরণ কলিতাসু আচ্ছাদিতাসু উড না নক্ষত্রাণামিমা ইতি ঔডব্যস্তাসু প্রভাসু ক্রমস্য ভাব ইতি ক্রমিমা তম্ অত্যেব প্রজল্পীষু প্রাপ্নবতীষু সতীষু। অত্র ক্ষয়তাপ্রাপ্তি প্রতি চন্দ্রকিরণা চ্ছাদন হেতুরিতি পদার্থ হেতুক কাব্যলিঙ্গমলঙ্কার।

(র) প্রস্রেতি। কিঞ্চ সর্ব্বত সমন্তত স্রোতাংসি স্রাবয়ন্তি চন্দ্রকিরণস্পর্শাৎ নিঃসারয়ন্তীতি তেষু কৈলাসস্য গিরে শশিমণিশিলানা চন্দ্রকান্তমণীনাং প্রস্রবণেষু নিঝরেষু প্রস্রবৎসু পতৎসু সৎসু। অত্র বৃত্ত্যনুপ্রাসোঽলঙ্কার তথা কৈলাসশশিমণিশিলানা প্রস্রবণেষু সর্ব্বত স্রোত স্রাবিষু ইত্যনেনৈবোপপত্তৌ পুন প্রস্রবৎস্বিত্যভিধানাদর্থ গতপুন রুক্ততাদোষ স চ প্রস্রবৎস্বিত্যস্য পরিত্যাগেনৈব সমাধেয়।

(ল) মৃণালেতি। কিঞ্চ মৃণালানা কন্দলানি নবাঙ্কুরা অস্য সন্তীতি তস্মিন্ অবস্কন্দায় পদ্মানামিবা ক্রমণায় পতিতশ্চন্দ্রস্য কর কিরণো হস্তশ্চ যস্মিন্ তস্মিন্ তাদৃশ ইব অতএব বিলুপ্তা সঙ্কোচাদ্বিনষ্টা কমলবনশোভা যস্য তস্মিন্ অচ্ছোদসরস পয়সি জলে ভাতি সতি। অত্র অবস্কন্দায় চন্দ্রকরপতনোৎপ্রেক্ষণাৎ ক্রিয়োৎপ্রেক্ষা লঙ্কার। কন্দলন্তু কপালে স্যাদুপরাগে নবাঙ্কুরে। ইতি বিশ্ব।

(ব) সমুপোঢেতি। কিঞ্চ বিরহিণি নিশাগমে চক্রবাকদম্পত্যোর্বিরহস্য স্বাভাবিকত্বাদিতি ভাব অতএব সমুপোঢা উৎপন্না মোহনিদ্রা দু খাত্ম মূর্চ্ছারূপা নিদ্রা যস্য তস্মিন্ তথা দ্রাঘীয়সীভিরত্যন্তদীর্ঘাভি বীচিভিরচ্ছোদ সরস্তরঙ্গৈ বিচলিত কম্পিত বপুর্যস্য তস্মিন্ চক্রবাকানাং পক্ষিণাং চক্রবালে মণ্ডলে সমূহে বিরুবতি রব কুর্ব্বতি সতি। অত্র চ্ছেকানুপ্রাসোঽলঙ্কার।

(শ) নির্ব্বৃত্ত ইতি। কিঞ্চ চন্দ্রোদয়ে নির্ব্বৃত্তে নিষ্পন্নে চন্দ্রোদয়েন তিমিরাপগম ইতি ভাব হর্ষ নয়নজলকণা আনন্দাশ্রুবিন্দব এব নীহারাস্তুষারা অস্য সন্তীতি তস্মিন্ বিয়দ্বিহারিণি আকাশচারিণি মনোহারিণি পরমসুন্দরে

হইয়া ক্রমে উপরে উঠিতে লাগিল, (য) নক্ষত্রের আলোক চন্দ্রের কিরণে আবৃত হইয়া ক্রমে ক্ষীণ হইয়া গেল। (র) সকল দিকেই স্রোতোনিঃসারণকারী কৈলাসপর্ব্বতস্থ চন্দ্রকান্ত মণি হইতে নিঝরের জল পতিত হইতেছিল। (ল) অচ্ছোদসরোবরের জলে নূতন নূতন মৃণালের অঙ্কুর ছিল এবং পদ্মগণকে আক্রমণ করিবার জন্যই যেন তাহার উপরে চন্দ্রের কিরণ পড়িয়াছিল তাহাতে পদ্মবনের শোভা বিলুপ্ত হইয়াছিল। (ব) রাত্রি উপস্থিত হওয়ায় চক্রবাকদম্পতিগণ পরস্পর বিচ্ছিন্ন ও মোহনিদ্রায় অভিভূত হইয়া রব করিতেছিল, এদিকে অচ্ছোদসরোবরের বৃহৎ বৃহৎ তরঙ্গ তাহাদিগকে কাঁপাইতেছিল। (শ) আকাশচারী

(১) প্রজল্পীষু। (২) নির্ব্বৃত্তে অ।

मनोहारिणि विद्याधराभिसारिकाजने, (ग) चन्द्रापीड सुप्तामालोक्य महाश्वेतां पल्लवशयने शने शनै (१) समुपाविशत। अस्या वेलाया किं नु खलु मामन्तरेण चिन्तयति वैशम्पायन, किं वा वराकी पत्रलेखा, किं वा राजपुत्रलोक" इति चिन्तयन्नेव निद्रां ययौ (घ)।

अथ क्षीणायां क्षपायामुषसि सन्ध्यामुपास्य शिलातलोपविष्टायां पवित्राण्यघमर्षणानि जपन्त्यां महाश्वेतायाम्, निर्वर्त्तितप्राभातिकविधौ चन्द्रापीडे, (ङ) तरलिका षोडशवर्षवयसा सावष्टम्भाकृतिना मदखेदालसगजराजगमनगुरूणि (२) पदानि निक्षिपता, (च) पर्य्युषितचन्दनाङ्गरागधूसरोरुदण्डद्वयेन, कुङ्कुमराग पिञ्जरारुणी, चामीकर शृङ्खला कलाप निविड नियमित कच्छाबन्धाति

विद्याधराभिसारिकाजने विद्रुते चन्द्रोदय जनभयात् पलायिते सति। अत्र इर्षे त्यादिपदे निरङ्ग केवलरूपकम् तथा हारिणीत्यस्य एकक्रमेणावस्थेय सङ्करालङ्कारयो सङ्करः।

(घ) चन्द्रेति। सुप्तां निद्रिताम्। मामन्तरेण विना। वराकी क्षुद्रा।

(ङ) अथेति। क्षपायां रात्रौ क्षीणायां क्षयमुपगतायाम् उषसि प्रभातकाले। अघमर्षणानि ऋतञ्च सत्यञ्चे त्यादिमन्त्रान्। चन्द्रापीडे च निर्वर्त्तितौ निष्पादित प्राभातिकविधि प्रातःकृत्यं येन तस्मिन् सति।

(च) तरेति। प्रत्युषस्येव केयूरकनाम्ना गन्धर्वदारकेणानुगम्यमाना तरलिका प्रादुरासीदिति परैणान्वय। अत्र तृतीयैकवचनान्तपदानि गन्धर्वदारकेणेति वक्ष्यमाणस्य विशेषणानि। षोडशवर्षाणि वयो यस्य तेन। सावष्टम्भा सबला आकृतिर्यस्य तेन। मदखेदेन मदवहनपरिश्रमेण अलसो मन्दगामी यो गजराजस्तस्येव गमने गुरूणि मन्थराणि पदानि पदन्यासान् निक्षिपता कुर्वता। अत्र लुप्तोपमालङ्कार।

(छ) पर्य्युषितेति। पर्य्युषितेन पूर्वदिनकृतत्वाद्गतरसेन शुष्केण चन्दनाङ्गरागेण धूसरम् ऊरुदण्डद्वय

পরমসুন্দর বিদ্যাধররমণীগণ শিশিরের ন্যায় আনন্দাশ্রু বিসর্জ্জন করত অভিসারে যাইতেছিল কিন্তু চন্দ্রের উদয়ে অন্ধকার দূরীভূত হওয়ায় তাহারা ইতস্তত পলায়ন করিতে লাগিল। (ঘ) এমন সময়ে চন্দ্রাপীড মহাশ্বেতাকে নিদ্রিত দেখিয়া ধীরে ধীরে পল্লবময় শয্যার উপরে উপবেশন করিলেন এবং চিন্তা করিতে লাগিলেন যে "এই সময়ে বৈশম্পায়ন আমাকে না দেখিয়া কি চিন্তা করিতেছেন বালিকা পত্রলেখাই বা কি ভাবিতেছে এবং রাজপুত্রগণই বা কি মনে করিতেছেন এইরূপ চিন্তা করিতে করিতে নিদ্রিত হইয়া পড়িলেন।

(ঙ) তদনন্তর রাত্রি অতীত হইলে প্রভাতকালে মহাশ্বেতা সন্ধ্যাবন্দন শেষ করিয়া একখানি প্রস্তরখণ্ডের উপরে উপবেশন করিয়া পবিত্র অঘমর্ষণমন্ত্র জপ করিতেছিল চন্দ্রাপীড়ও প্রাতঃকৃত্য সমাপন করিয়া অবস্থান করিতেছিলেন। (চ) এমন সময়ে কেয়ূরকনামে একটী গন্ধর্ববালকের সহিত তরলিকা আসিয়া সেই প্রভাতকালেই সেখানে উপস্থিত হইল সেই বালকটীর বয়স ষোড়শ বর্ষ বলিয়া বোধ হইতেছিল আকৃতিও সবল ছিল এবং সে মদ পরিশ্রম মন্দগামী গজরাজের ন্যায় ধীরে ধীরে পদক্ষেপ করিয়া আসিতেছিল (ছ) শুষ্ক

(१) क्वचित् द्विरुक्तिर्नास्ति। (२) मन्दखेदालस    गजगमनगुरूणि।

रिणा प्रेङ्खत्पल्लवमधरवास एव केवलं वसानेन, (क) निरुदरतया विभक्त-मध्येन, विपुलवक्षसा, दीर्घानुवृत्तपीनबाहुना, (ख) वामप्रकोष्ठदोलायमानमाणिक्य वलयेन, कर्णाभरणमणिविप्रकीर्य्यमाणमधोमुखकिरणेन्द्रायुधजालं वर्णांशुकोत्तरीय मिवैकस्कन्धचिह्नमुद्वहता, (ग) चूतपल्लवकोमलमनवरततांम्बूलवद्धरागान्ध-कारमधरं दधता, (घ) कर्णान्तायतस्य स्वभावधवलस्य धवलिम्ना लोचन युगलस्य धवलयतेव दिगन्तराणि कुमुदवनानीव वर्षता पुण्डरीकमयमिव दिवस

यस्य तेन। कुङ्कुमरागेण कुङ्कुमरसकृताङ्गरागेण पिञ्जरं कस्मिंश्चिदंशे शुष्कत्वात् पिङ्गलवर्णं स्यात् कस्मिंश्चिदंशे चरणस्तदानीमप्यशुष्कत्वात् रक्तवर्णं चेति तेन। चामीकरस्य स्वर्णस्य शृङ्खलानां कलापेन आवल्या निविडं दृढं यथा तथा नियमितं बद्धम् तथा कक्षाबन्धात् कटिबन्धादतिरिक्तम् अधिकभूतम् अतएव प्रेङ्खत् वायुना चलत् पल्लवं मञ्चलं यस्य तत् केवलम् अधरवास एव अधोवस्त्रमेव वसानेन परिदधता न पुनरुत्तरीयवसनं धारयतेति भावः।

(क) निरिति। निरुदरतया कृशोदरतया अनुदरा कन्येतिवदल्पार्थे निःशब्दः। विभक्तमध्येन क्षीण कटिना। दीर्घौ आयतौ अनुवृत्तौ सुगोलौ पीनौ स्थूलौ च बाहू यस्य तेन।

(ख) वामेति। वामे प्रकोष्ठे मणिबन्धादूर्द्ध्वदेशे दोलायमानं भुजान्दोलनाच्चञ्चलं माणिक्यवलयं रत्नकटकं यस्य तेन। कर्णाभरणे कर्णालङ्कारे यो मणिस्तस्मात् विप्रकीर्य्यमाणं कर्णाभरणेनाधोविक्षिप्यमाणम् अधोमुखाः किरणा इन्द्रायुधानि नानावर्णत्वादिन्द्रचापानीव तेषां जालं समूहम् एकस्मिन् स्कन्धे चिह्नमर्पितम् वर्णैः रक्तवर्णैः रञ्जितम् अंशुकं वर्णांशुकं तद्रूपमुत्तरीयमिव उद्वहता दधता। अत्र लुप्तोपमाजात्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्करः।

(ग) चूतेति। चूतस्य आम्रस्य पल्लववत् कोमलम् तथा अनवरतेन ताम्बूलेन ताम्बूलचर्वणेन बद्धो धृतः रागो रक्तिमा अन्धकारः अविशेषे मालिन्यञ्च यस्मिन् तम्। अधिकताम्बूलचर्वणेनाधरे मालिन्यमपि जायते इति द्रष्टव्यम्। अधरं दधता ओष्ठं धारयता। अत्र लुप्तोपमालङ्कारः।

(घ) कर्णेति। कर्णान्तायतस्य स्वभावधवलस्य लोचनयुगलस्य धवलिम्ना धवलतया दिगन्तराणि धवलयतेव अतएव कुमुदवनानि वर्षतेव दिवसं पुण्डरीकमयं श्वेतपद्मव्याप्तं कुर्वतेव लोचनयुगलस्य धवलप्रभाप्रसरणात् कुमुदपुण्डरीकयोश्च धवलत्वादिति भावः। अत्र तिस्र एव क्रियोत्प्रेक्षा वाक्यार्थहेतुकमेकं काव्यलिङ्गञ्चेत्येतेषामङ्गाङ्गि

চন্দনের অঙ্গরাগে তাহার উরুযুগল ধূসরবর্ণ ছিল এবং কুঙ্কুমের অঙ্গরাগে কোন স্থান পিঙ্গলবর্ণ ও কোন স্থান রক্তবর্ণ ছিল সে কেবল পরিধেয় বস্ত্রই পরিধান করিয়াছিল সেই বস্ত্রখানা স্বর্ণশৃঙ্খলাবলীতে দৃঢবদ্ধ ছিল এবং তাহার কটিবন্ধনের অতিরিক্ত অঞ্চলটুকু বায়ুভরে কাঁপিতেছিল (ক) তাহার উদর কৃশ ছিল বলিয়া কটি দেশও কৃশ ছিল বক্ষঃস্থল বিস্তৃত ছিল এবং বাহুযুগল দীর্ঘ সুগোল ও স্থূল ছিল। (খ) বামহস্তে একটী রত্নবলয় দুলিতেছিল কর্ণালঙ্কারের মণি হইতে ইন্দ্রধনুর ন্যায় নানাবর্ণের কিরণজাল নীচের দিকে পড়িতেছিল তাহাতে বোধ হইতেছিল যে সে যেন একস্কন্ধে অর্পিত একখানা রক্তবর্ণ উত্তরীয় বসন ধারণ করিয়াছে (গ) আমের পল্লবের ন্যায় কোমল ও সর্ব্বদা তাম্বূল চর্ব্বণ করায় রক্ত ও মলিনবর্ণ ওষ্ঠযুগল ধারণ করিতেছিল (ঘ) আকর্ণবিস্তৃত এবং স্বভাবতই ধবলবর্ণ নয়ন যুগলের ধবলপ্রভা দ্বারা সে যেন দিগ্‌দিগন্তর ধবলবর্ণ করিতেছিল তাহাতে বোধ হইতেছিল

कुर्वता, (घ) कनकपट्ट पृथु-ललाटेन, अलि कुल नील सरल-शिरसिजेन, अग्राम्या-कृतिना, राजकुल सम्पर्क चतुरेण, गन्धर्वदारकेण केयूरकनाम्नानुगम्यमाना प्रत्यूषस्येव प्रादुरासीत् (ङ)। आगत्य च कोऽयमित्युपजातकुतूहला चन्द्रापीडं सुचिरमालोक्य (१) महाश्वेताया समीपमुपसृत्य कृतप्रणामा सविनय मुपाविशत् (च)।

अनन्तरञ्चातिदूरानतेनोत्तमाङ्गेन प्रणम्य केयूरकोऽपि महाश्वेतादृष्टिनिसृष्ट नातिसमीपवर्त्ति शिलातल भेजे (छ)। समुपविष्टश्च (२) तमदृष्टपूर्वमध कृत-कुसुमायुधमुपहसितसुरासुरगन्धर्वविद्याधररूप रूपातिशय चन्द्रापीडस्य दृष्ट्वा विस्मयमापेदे (ज)।

भावेन सङ्कर तथा धवलपदस्य वार वारमुपादानादनवीकृतत्वदोष स च स्वभावधवलस्य लोचनयुगलस्य प्रभया दिगन्तराणि लिम्पतव इति पाठम समाधेय ।

(ङ) कनकेति। कनकपट्टवत् स्वर्ण फलकवत् पृथु विस्तृत ललाट यस्य तेन। अलिकुलवत् भ्रमरसमूहवत् नीला कृष्णा शिरसिजा केशा यस्य तेन। अत्र लुप्तोपमालङ्कार । अग्राम्या नागरीया भद्रोचिता आकृतिर्यस्य तेन। तथा राजकुले गन्धर्व राजवत्या सम्पर्क ण सर्वदावस्थानसम्बन्धेन चतुरस्तेन नानाविधजनैर्नानाविधालाप कार्य्याचरणादिति भाव । प्रादुरासीदुपस्थिताऽभवत्।

(च) आगत्येति। अयमपूर्व पुरुष क इत्युपजात कुतूहल यस्या सा तरलिकेति शेष ।

(छ) अनेति। अतिदूरानतेन अत्यन्तावनतेन उत्तमाङ्गेन मस्तकेन। प्रणम्य महाश्वेतामित्यर्थ । महाश्वेतया दृष्ट्या दृष्टिभङ्ग्या निसृष्टम् अपि त निर्दिष्टमित्यर्थ शिलातल भेजे आश्रिश्राय तत्रोपविवेशेत्यर्थ ।

(ज) समुपेति। समुपविष्टश्च केयूरक । अध कृत पराजित कुसुमायुध कन्दर्पो येन तम् तथा उपहसित स्वापेक्षयान्यूनत्वादुपहास्यतां नीत सुरासुरगन्धर्व विद्याधराणां रूप येन तम् रूपातिशय सौन्दर्य्यातिरेकम्।

যে সে যেন শ্বেতোৎপলসমূহ বর্ষণ করিতেছে এবং দিনটাকে যেন শ্বেতপদ্মময় করিতেছে (ঙ) তাহার ললাটদেশ স্বর্ণফলকের ন্যায় বিস্তৃত ছিল কেশকলাপ ভ্রমরসমূহের ন্যায় কৃষ্ণবর্ণ ও সরল ছিল এবং আকৃতিও ভদ্রলোকের মতনই ছিল, আর সে রাজবাটীতে বাস করায় বেশ চতুর ছিল। (চ) আসিয়া চন্দ্রাপীড়কে দেখিয়া তরলিকার ইনি কে? এইরূপ কৌতূহল জন্মিল, তাই সে দূরকাল পর্য্যন্ত চন্দ্রাপীড়কে দেখিয়া মহাশ্বেতার নিকটে যাইয়া তাহাকে সবিনয়ে নমস্কার করিয়া উপবেশন করিল।

(ছ) তাহার পর কেয়ূরকও অত্যন্ত অবনত মস্তকে মহাশ্বেতাকে প্রণাম করিল পরে মহাশ্বেতা তাহার বসিবার জন্য অনতিনিকটবর্ত্তী একখানা প্রস্তরখণ্ডকে নয়নভঙ্গীদ্বারা নির্দ্দিষ্ট করিয়া দিল, কেয়ূরক তাহার উপরে উপবেশন করিল। (জ) কেয়ূরক উপবেশন করিয়া চন্দ্রাপীড়ের সেই অলৌকিক সৌন্দর্য্য দেখিয়া বিস্ময়াপন্ন হইল, কারণ, সেরূপ সৌন্দর্য্য

(१) अवलोक्य। (२) उपविष्टश्च।

পরিসমাপ্তজপা তু মহাশ্বেতা পপ্রচ্ছ তরলিকাম্—"কিং ত্বয়া দৃষ্টা প্রিয়সখী কাদম্বরী কুশলিনী ? করিষ্যতি বা তদস্মদ্বচনম ?" ইতি (ঝ)।

অথ সা তরলিকা বিনয়াবনতমৌলিরীষদালম্বিত-(১) কর্ণপাশমতিমধুরয়া গিরা ব্যজিজ্ঞপত—"ভর্তৃদারিকে! দৃষ্টা খলু ময়া ভর্তৃদারিকা কাদম্বরী সর্বত কুশলিনী। বিজ্ঞাপিতা চ নিখিল ভর্তৃদুহিতু সন্দেশম্। আকর্ণ্য চ যত্তয়া সন্তত মুক্ত মুক্তা-স্থূলাশ্রু-(২) বিন্দুবর্ষ রুদিত্বা প্রতিসন্দিষ্টম্, তদেষ তয়ৈব বিসর্জিতস্তস্যা এব বীণাবাহক (৩) কেয়ূরক কথয়িষ্যতি" ইত্যুক্ত্বা বিররাম (ঞ)।

বিরতবচসি তস্যা কেয়ূরকোঽব্রবীত—"ভর্তৃদারিকে! মহাশ্বেতে! দেবী কাদম্বরী দৃঢদত্তকণ্ঠগ্রহা ত্বা বিজ্ঞাপয়তি—"যদিয়মাগত্য মামবদত্তরলিকা, তত্ কথয় কিময় গুরুজনানুরোধ ? কিমিদ মচ্চিত্তপরীক্ষণম ? কিং

(ঝ) পরীতি। অস্মদ্বচন মম বচনানুরূপ কার্য্যম্ আত্মপাণিগ্রাহণমিত্যর্থ।

(ঞ) অথেতি। বিনয়েন অবনতী মৌলিমূর্দ্ধা যস্যা সা। ঈষদালম্বিতৌ মস্তকনমনেন কিঞ্চিদবনতৌ কর্ণ পাশৌ সুন্দরকর্ণ যুগল যস্মিন্ কর্ম্মণি তদযথা তথা। ভর্ত্তৃ দুহিতুস্তব। তয়া কাদম্বর্য্যা সন্ততম্ অবিচ্ছিন্ন ধার যথা তথা মুক্তানি ত্যক্তানি মুক্তাবত্ স্থূলানাম্ অশ্রুবিন্দূনাং বর্ষাণি যস্মিন্ কর্ম্মণি তদযথা তথা রুদিত্বা যত্ প্রতিসন্দিষ্টম্ তদেষ কেয়ূরক কথয়িষ্যতীতি সম্বন্ধ।

(ট) বিরতেতি। দৃঢ দত্ত কণ্ঠগ্রহ আলিঙ্গন যযা সা। গৃহে নিবাস স্থিতিরেবাপরাধস্তস্মিন্ নিপুণোপা

---

পূর্ব্বে আর দেখে নাই এবং সে সৌন্দর্য্য কামদেবের সৌন্দর্য্যকেও পরাস্ত করিয়াছিল এবং দেবতা দানব গন্ধর্ব্ব ও বিদ্যাধরগণের সৌন্দর্য্যকেও উপহাস করিতেছিল।

(ঝ) এদিকে মহাশ্বেতা জপ সমাপন করিয়া তরলিকাকে জিজ্ঞাসা করিল— তরলিকে! তুই আমার প্রিয়সখী কাদম্বরীকে ভাল দেখিয়াছিস ত? সে আমার কথামত কাজ করিবে ত?।

(ঞ) তাহার পর তরলিকা মস্তক অবনত করিয়া সুন্দর কর্ণযুগল ঈষৎ নোয়াইয়া অতিমধুর বাক্যে জানাইল— রাজকন্যে! আমি রাজকন্যা কাদম্বরীকে সকল রকমেই ভাল দেখিয়া আসিয়াছি এবং আপনার সকল কথাই তাহাকে জানাইয়াছি। তিনি অবিচ্ছিন্নধারায় মুক্তার ন্যায় স্থূল অশ্রুবিন্দুবর্ষণপূর্ব্বক রোদন করিয়া যে প্রত্যুত্তর দিয়াছেন তাহা এই কেয়ূরক বলিবে এ তাঁহারই বীণাবাহক এবং তিনিই ইহাকে পাঠাইয়াছেন। এই কথা বলিয়া তরলিকা বিরত হইল।

(ট) সে বিরত হইলে কেয়ূরক বলিতে লাগিল— রাজকন্যে! মহাশ্বেতে! কাদম্বরী দেবী আপনার কণ্ঠে গাঢ় আলিঙ্গন করিয়া জানাইতেছেন যে "এই তরলিকা আসিয়া

(১) অবলম্বিত। (২) সন্ততমুক্তস্থূলাশ্রু। (৩) বীণাবাহক।

गृहनिवासापराधनिगुणोपालम्भ ? किं प्रेमविच्छेदाभिलाप ? किं भक्तजन-परित्यागोपाय ? किंवा प्रकोप ? (ट)। जानास्येव मे सहज-प्रेम-निस्यन्द-(१) निर्भरं हृदयम्, एवमतिनिष्ठुर सन्दिशन्ती कथमसि न लज्जिता ? तथा मधुर-भाषिणी केनासि शिक्षिता वक्तुमप्रियं परुषमभिधातुं वा ? (ठ) स्वस्थोऽपि तावत् क इव सहृदय कनीयस्यवसानविरसे कर्म्मणीदृशे मतिमुपसर्पयेत् ? किमुतातिदुःखाभिहतहृदयोऽस्मद्विधो जन (ड)। सुहृद्दुःखखेदिते हि मनसि क्व सुखाशा ? क्वेव निर्वृति ? कीदृशा सम्भोगा ? कानि वा हसितानि ? (ढ)। येनेदृशी दशामुपनीता प्रियसखी कथमतिदारुण तमहं विषमिवाप्रियकारिण

लम्भ उपयुक्ततिरस्कार त्वयि वने वसन्त्यामहं यद्गृहे वसामि तस्यापराधस्य योग्यतिरस्कार किमित्यर्थ । प्रेम विच्छेदाय आवयो प्रणयभङ्गाय अभिलाप उक्ति । भक्तजनस्य अनुरक्ताया ममेत्यर्थ परित्यागोपाय किम्।

(ठ) जानासीति। सहज स्वाभाविक यत् प्रेम तस्य निस्यन्दन रसेन निर्भर परिपूर्ण मे मम हृदयं त्वं जानास्येव तथापि एवमतिनिष्ठुर पाणिग्राहणोपदेशरूप सन्दिशन्तीत्यन्वय ।

(ड) ननु पाणिग्रहणे को नाम दोष यनैव न मत्य ग्रानयसीत्याह स्वस्थ इति। स्वस्थोऽपि सुखमात्राद्विना सर्वथा सुस्थचित्तोऽपि क इव सहृदयो हिताहितविवेकसमर्थी जन ईदृश कनीयसि अत्यल्पे तुच्छे अवसानविरसे परिणामदुःखदायिनि नवव विरहादिनेति भाव कर्म्मणि पाणिग्राहणे मतिमुपसर्पयेत् बुद्धिमर्पयेत् अपि तु कोऽपि नेत्यर्थ । सुतरां बलवद्दुःखस्थानां मादृशानान्तु का कथेत्याह किमुतेति। तव दारुणदुःखजनितातिदुःखेनैव मे हृदयमभिहतमिति भाव ।

(ढ) ननु सत्यप्यवसानविरसे कर्म्मण्यस्मिन् सुखादिकमपि दृश्यत इत्याह सुहृदिति। सुहृद्दुःखखेदिते बन्धुजनदुःखजनितदुःखभाराक्रान्ते । निर्वृति शान्ति । दुःखभाराक्रान्ते हि मनसि सुखादीनां प्रवेशावकाश एव नास्तीति भाव ।

আমাকে যে বলিল—সে বিষয়ে তুমি বল দেখি—এটা কি গুরুজনের অনুরোধ? না—আমার মন পরীক্ষা করা? কি বা আমি যে গৃহে বাস করিতেছি, এই অপরাধের উপযুক্ত তিরস্কার? অথবা প্রণয় ভঙ্গ করিবার জন্য একটা কথা মাত্র? না—অনুরক্ত লোককে পরিত্যাগ করবার একটা উপায়? অথবা কোন কারণজনিত ক্রোধ? (ঠ) তুমি ত জানই যে আমার হৃদয় তোমারই অকৃত্রিম প্রেমে পরিপূর্ণ, তথাপি তুমি এই জাতীয় অত্যন্ত নিষ্ঠুর খবর পাঠাইতে লজ্জিত হও নাই কেন? তুমি সেইরূপ মধুরভাষিণী ছিলে, কিন্তু এখন অপ্রিয় ও নিষ্ঠুর কথা বলিতে তোমাকে কে শিখাইল?। (ড) দেখ সুস্থচিত্ত হইয়াও কোন্ বুদ্ধিমান্ ব্যক্তি তুচ্ছ ও পরিণামে দুঃখজনক এইরূপ কার্য্যে মন অর্পণ করে? সুতরাং আমাদের মত অত্যন্ত দুঃখিতচিত্ত লোকের কথা আর বলিব কি?। (ঢ) আর যে চিত্ত, সর্ব্বদাই বন্ধুর দুঃখে দুঃখিত, তাহাতে আবার সুখের আশা কি? শান্তিই বা কি? সম্ভোগই বা কি? এবং হাস পরিহাসই বা কি?। (ণ) বিশেষত যে কন্দর্প, তোমাকে এইরূপ

(१) निष्यन्द।

কাম সকাম কুর্য্যাম্? দিবসকরাস্তময়বিধুরাসু নলিনীষু সহবাসপরিচয়াচ্চক্রবাকযুবতিরপি পতিসমাগমসুখানি পরিত্যজতি, (১) কিমুত নার্য্যঃ (ণ)। অপি চ (২) যত্র ভর্ত্তৃবিরহবিধুরা পরিহৃতপরপুরুষদর্শনা দিবানিশং নিবসতি প্রিয়সখী, কথমিব তন্মম হৃদয়মপরঃ প্রবিশেজ্জনঃ? (ত)। যত্র চ ভর্ত্তৃবিরহবিধুরা তীব্রব্রত (৩) কর্ষিতাঙ্গী প্রিয়সখী মহৎকৃচ্ছ্রমনুভবতি, তত্রাহমেব গণয়িত্বৈতৎ কথমাত্মসুখার্থিনী পাণিং গ্রাহয়িষ্যামি? কথং বা মম সুখং ভবিষ্যতি? (থ)। ত্বৎপ্রেম্ণা চাস্মিন্ বস্তুনি মযা (৪) কুমারিকাজনবিরুদ্ধং স্বাতন্ত্র্যমালম্ব্যাঙ্গীকৃতমযশঃ, সমবধীরিতো বিনয়, গুরুবচনমতিক্রান্তম্, (৫)

(ণ) অথ তথাপি যৌবনকামং সবর্থৈব সকামং করণীয় ইত্যাহ যেনেতি। যেন কামেন প্রিয়সখী ত্বম্ ঈদৃশীং দশাম্ অতীবদারুণশোকাতুরাবস্থাম্ উপনীতা প্রাপিতা বিষমিব অপ্রিয়কারিণম্ অতিদারুণং তং কামং কথমহং সকামং পতিসমাগমেন পূর্ণমনোরথং কুর্য্যাং কর্ত্তুং শক্নুয়াম্ অপি তু কথমপি ন তব বৈরিত্বেন মমাপি শত্রুত্বাদিতি ভাবঃ। তথা চ নলিনীষু দিবসকরস্য সূর্য্যস্য অস্তময়েন অস্তগমনেন বিধুরাসু সতীষু। সহবাসপরিচয়াৎ একসরোবরবাসপ্রণয়াৎ। যত্র তির্য্যগ্‌জাতিরপ্যেবমাচরতি তত্র কিমুত নার্য্য ইত্যর্থঃ। সুতরাং ত্বয়ি পতিবিরহবিধুরায়াং সত্যাং ময়াপি পতিসমাগমসুখং ত্যাজ্যমেবেতি ভাবঃ। অত্র দৃষ্টান্তোঽলঙ্কারঃ।

(ত) অপি চেতি। যত্র হৃদয়ে। প্রিয়সখী ত্বমিত্যর্থঃ। নিবসতি সততচিন্তাবশাদিতি ভাবঃ। অপরো জনঃ পতিরিত্যর্থঃ কথং প্রবিশেৎ কথমপি নেতি তাৎপর্য্যম্ তত্রত্যায়াস্তব পরপুরুষদর্শনাসহিষ্ণুতয়া মম ব নিষেধাদিতি ভাবঃ।

(থ) যত্রেতি। যত্র যদা। তীব্রব্রতেন উগ্রতপসা কর্ষিতানি শোষিতানি অঙ্গানি যযা সা। প্রিয়সখী ত্বমিত্যর্থঃ। তত্র তদা। এতদেব মহৎ কৃচ্ছ্রম্। কথং পাণিং গ্রাহয়িষ্যামি কথমপি নেত্যর্থঃ সমানসুখদুঃখয়োঃ সখ্যোর্বৈষম্যপ্রসঙ্গাদিতি ভাবঃ। কথং বা সুখং ভবিষ্যতি কথমপি নেতি তাৎপর্য্যম্ দুঃখপূর্ণচিত্তত্বাদিতি ভাবঃ।

(দ) ত্বদিতি। অস্মিন্ বস্তুনি পাণিগ্রাহণবিষয়ে। বিনয় শিক্ষাগুণঃ সমবধীরিতঃ অবজ্ঞাতঃ। গুরু

দশায় উপনীত করিয়াছে অত্যন্ত ভয়ঙ্কর ও বিষের ন্যায় অপ্রিয়কারী সেই কন্দর্পের অভিলাষ আমি কি করিয়া পূর্ণ করিতে পারি? দেখ—সূর্য্য অস্তগমন করায় পদ্মিনী তাঁহার বিরহে বিহ্বল হইয়া পড়িলে তাহার সহিত একত্র বাস করায় প্রণয়বশতঃ যুবতি চক্রবাকপক্ষিণীও পতির সহিত সম্মেলনসুখ পরিত্যাগ করে এ অবস্থায় রমণীগণের কথা বলিবার কি আছে?। (ত) বিশেষতঃ তুমি পতিবিরহে আকুল হইয়া পরপুরুষের দর্শন পর্য্যন্ত পরিত্যাগ করিয়া যে হৃদয়ে দিবারাত্র বাস করিতেছ আমার সেই হৃদয়ে অন্য লোক প্রবেশ করিবে কিরূপে? (থ) আর তুমি যখন ভর্তার বিরহে বিহ্বল হইয়া, গুরুতর ব্রতাবলম্বনে শরীরকে শোষণ করিতে থাকিয়া গুরুতর কষ্ট অনুভব করিতেছ তখন আমি তাহা অগ্রাহ্য করিয়া কেবল নিজের সুখাভিলাষিণী হইয়া কিরূপে পাণিগ্রহণ করাইব? কিরূপেই বা তাহাতে আমার সুখ হইবে?। (দ) আমি তোমার প্রণয়বশতই এই বিষয়ে স্বাধীনতা

(১) ত্যজতি। (২) ক্বচিৎ অপি চেতি নাস্তি। (৩) ক্বচিৎ তীব্রপদং ন দৃশ্যতে।
(৪) ক্বচিৎ ময়েতি নাস্তি। (৫) অতিক্রামিতম্।

न गणितो लोकापवाद, वनिताजनस्य सहजमाभरणमुत्सृष्टा लज्जा, सा कथय कथमिव पुनरत्र प्रवर्त्तते (द) ?। तदयमञ्जलिरुपरचित प्रणामोऽयम्, इदञ्च पादग्रहणम्, अनुगृहाण माम्, वनमितो गतासि मे जीवितेन सहेति मा कृथा स्वप्नेऽपि पुनरिममर्थं मनसि" इत्यभिधाय तूष्णीमभूत् (ध)।

महाश्वेता तु तच्छ्रुत्वा सुचिर विचार्य्य "गच्छ, स्वयमेवाहमागत्य यथार्ह-माचरिष्यामि" इत्युक्त्वा केयूरक प्राहिणोत् (न)। गते च केयूरके चन्द्रापीड-मुवाच—"राजपुत्र ! रमणीयो हेमकूट, चित्रा च चित्ररथराजधानी, बहुकुतूहल किम्पुरुषविषय, पेशलो गन्धर्वलोक, सरलहृदया महानुभावा च कादम्बरी, यदि नातिखेदकरमिव गमन कलयसि, नावसीदति वा गुरुप्रयोजनम, अदृष्ट-

वचन पितृवाक्यम्। सहजमाभरण स्वाभाविकालङ्काररूपा लज्जा समुत्सृष्टा परित्यक्ता। सा कादम्बरी। अत्र पाणिग्रहणे। अत्र कथयेति वाक्यान्तरपदस्य सेत्यादिवाक्यान्तरे प्रवेशात् सङ्कीर्णतादोष स तु कथयेत्यस्य प्राक पाठात् समाधेय।

(ध) तदिति। इति हेतो। स्वप्नेऽपि मनसि इममर्थ मत्पाणिग्रहणोपदेशरूप विषय पुनर्मा कृथा न कुर्य्या। तूष्णीमभूत् केयूरक इति शेष।

(न) महति। आगत्य गत्वा। यथार्ह यथायोग्यम्। अत्र आङ पूर्वो गमधातुर्गमनार्थे अवाचक इत्य वाचकत्वदोष स च गत्वेति पाठेन व समाधेय इति वदन्ति।

(प) गत इति। चित्रा आश्चर्य्या। किम्पुरुषविषय किन्नरदेश बहूनि कुतूहलानि कौतुकोद्दीपकवस्तूनि यस्मिन् स। पेशल सुन्दर। चारौ दक्षे च पेशल। इत्यमर। यदि त्व गमनम् अतिखेदकरमिव अधिक परिश्रमजनकमिव न कलयसि न मन्यसे। नावसीदति न व्याहत भवति। अदृष्टो भूतपूर्व इत्यदृष्टचर भूत

অবলম্বন করিয়া নিন্দা স্বীকার করিয়াছি বিনয়কে অবজ্ঞা করিয়াছি পিতৃবাক্য লঙ্ঘন করিয়াছি, লোকাপবাদ অগ্রাহ্য করিয়াছি এবং স্ত্রীলোকের স্বাভাবিক অলঙ্কার লজ্জাও পরিত্যাগ করিয়াছি, অতএব বল দেখি—সেই কাদম্বরী কি করিয়া আবার এই বিষয়ে প্রবৃত্ত হইবে" ?। (ধ) অতএব আমি এই হাত জোড় করিতেছি এই প্রণাম করিতেছি এবং এই চরণ ধারণ করিতেছি তুমি আমার প্রতি অনুগ্রহ কর তুমি এ স্থান হইতে আমার জীবনের সহিতই বনে গিয়াছ, অতএব স্বপ্নেও যেন আবার এ বিষয় মনে করিও না" এই কথা বলিয়া কেয়ূরক নীরব হইল।

(ন) কিন্তু মহাশ্বেতা সেই সকল কথা শুনিয়া বহু সময় বিবেচনা করিয়া বলিল—"কেয়ূরক। তুমি চলিয়া যাও আমি নিজেই আসিয়া যাহা উপযুক্ত হয় তাহা করিব" এই কথা বলিয়া কেয়ূরককে বিদায় করিল (প) এবং কেয়ূরক চলিয়া গেলে মহাশ্বেতা চন্দ্রাপীড়কে কহিল—"রাজপুত্র। হেমকূটপর্ব্বত অত্যন্ত মনোহর, গন্ধর্ব্বরাজ চিত্ররথের রাজধানীও বড়ই আশ্চর্য্য কিন্নরদেশেও বহুতর কৌতূহলোদ্দীপক বস্তু রহিয়াছে গন্ধর্ব্বলোকও বেশ সুন্দর, আর কাদম্বরীও সরলচিত্তা ও অত্যন্ত উদারপ্রকৃতি, অতএব সে স্থানে গমন

परविषयकुतूहलि वा चेत, मद्वचनमनुरुध्यते वा भवान् (१) सुखदायि वा (२) आश्चर्य्यदर्शनम, (३) अर्हामि वा प्रणयम्, ( ) इममप्रत्याख्यानयोग्य वा जन मन्यसे, समारूढो वा परिचयलेश, अनुग्राह्यो वाऽय जन ततो नार्हसि निष्फला कर्त्तुमभ्यर्थनामिमाम् (प)। मयैव सह गत्वा हेमकूटमतिरमणीयतानिधानम्, तत्र दृष्ट्वा च मन्निवि शेषा कादम्बरीम, अपनीय तस्या कुमतिमनोमोहविलसितम्, एकमह्नो विश्रम्य श्वोभूते प्रत्यागमिष्यसि (फ)। मम हि निष्कारणबान्धव भवन्त-मालोक्यैव दु खान्धकारभाराक्रान्तेन महत कालादुच्छ्वसितमिव चेतसा, आव यित्वा स्ववृत्तान्तमिमम सह्यतामिव गत शोक । दु खितमपि जन रमयन्ति

पूर्व्वदृष्टे चरट इति चरट प्रत्यय । अदृष्टपरोऽनवलोकितपूर्वो यो विषया देशस्तद्विषयि तद्दर्शन इत्यर्थ कुतूहलमस्या स्तीति तत्। अनुरुध्यते रक्षितुमिच्छति रुधिर्देवादिक इच्छाय । प्र य वा अर्हामि तव प्रणययोग्या वा भवामि। इम मल्लक्षण जनम्। समारूढ उत्पन्न । अभ्यर्थ नां तव गमनप्रार्थ नाम्।

(फ) मयेति। अतिरमणीयताया निधानमाश्रयम्। मन्निवि शेषां सर्वथैव मम समानाम्। कुमत्या कुत्सितविचारेण यो मनोमोहस्त्वित्तभ्रम त्वयि सशोकायां नाह पाणि ग्राहयिष्यामि इत्येव रूपस्तस्य विलसितम् आचरितम् अपनीय उपदेशेन दूरीकृत्य एकम् अह्नो दिवस विश्रम्य श्वोभूते परदिने।

(ब) ममेति। हि निश्चितम्। निष्कारणबान्धव मद्दु खश्रवणान दु खितचित्तत्वादुपदेशश्रमाङ्गीकाराच्चेति भाव भवन्तमालोक्यैव विद्यमानाया मम दु खान्धकारभाराक्रान्तेन चेतसा महती दीर्घात् कालात् परम् उच्छ्वसित मिव प्राणितमिव इयन्त काल यावन्मृतमिवासीदिति भाव तथा इम स्ववृत्तान्त श्रावयित्वा विद्यमानाया मम शोक सह्यतां गत इव शोकक्षोभे च हृदय प्रलाप रैव धार्य्येत इति न्यायादिति भाव । ननु कुत एतदित्याह—दु खित

করাটা যদি অত্যন্ত পরিশ্রমকব বিবেচনা না করেন কিংবা কোন গুরুতর কার্য্যের ব্যাঘাত না হয় অথবা পূর্ব্বে যে দেশ দেখেন নাই তাহা দেখিবার জন্য আপনার মনে যদি কৌতূহল থাকে কি বা আপনি যদি আমাব অনুরোধ বক্ষা করিতে ইচ্ছা করেন কিংবা কোন আশ্চর্য্য দর্শন করা যদি আপনার সুখ জন্মায় অথবা আমি যদি আপনাব প্রণয়ের যোগ্য হই কি বা যদি এই ব্যক্তিকে প্রত্যাখ্যান করা অনুচিত মনে করেন অথবা আপনাব সহিত আমাব যদি পরিচয়ের লেশও জন্মিয়া থাকে কিংবা এই ব্যক্তি যদি আপনাব অনুগ্রহের যোগ্য হয় তাহা হইলে আপনি আমার এই প্রার্থনা নিষ্ফল করিতে পারিবেন না। (ফ) অত্যন্ত সৌন্দর্য্যের আবাসভূমি সেই হেমকূটপর্ব্বতে আমারই সহিত গমন করিয়া সেখানে আমারই মতন কাদম্বরীকে দেখিয়া তাহার কুসংস্কারজনিত চিত্তভ্রমেব আচরণ দূর করিয়া এব একটী দিনমাত্র সেখানে বিশ্রাম করিয়া আ ার পরদিন ফিরিয়া আসিবেন। (ব) আপনি বিনা কারণেই আমার বন্ধু হইয়াছেন, সুতরা আপনাকে দেখিয়াই আমার চিত্ত দুঃখান্ধকারে পরিপূর্ণ হইলেও বহুকালের পর যেন উচ্ছ সিত হইয়া উঠিয়াছে এব আপনাকে নিজের এই

(१) भवन्मति। (२) अतिसुखदायि वा। (३) अत्याश्चर्यदर्शनम्।
(४) अर्हसि वा प्रणयम् प्रणयमिमम्।

सज्जनसमागमा (ब)। परसुखोपपादनपराधीनश्च भवादृशां गुणोदय "(भ)। इत्युक्तवतीमेना चन्द्रापीडोऽब्रवीत्—"भगवति ! दर्शनात्प्रभृति परवानयं जनः कर्त्तव्येषु यथेष्टमशङ्कितया नियुज्यताम्" इत्यभिधाय तया सहैवोदचलत् (म)।

क्रमेण च गत्वा हेमकूटमासाद्य गन्धर्व राजकुलम्, समतीत्य काञ्चनतोरणानि सप्तकक्षान्तराणि कन्यान्तःपुरद्वारमवाप (य)। महाश्वेतादर्शनप्रधावितेन दूरादेव कृतप्रणामेन कनकवेत्रलताहस्तेन प्रतीहारजनेनोपदिश्यमानमार्गः प्रविश्य (र) असङ्ख्येयनारीशतसहस्रसम्बाधम् (१) स्त्रीमयमपरमिव जीवलोकम्, (ल) इयत्ता

मिति। सज्जनसमागमा दुःखितमपि जनं रमयन्ति आनन्दयन्ति दर्शनेनैव नवसुखसम्पादनद्वारा विरलनदुःख विध्वंसनादिति भावः। अत्र सामान्येन विशेषसमर्थनरूपोऽर्थान्तरन्यासोऽलङ्कारः।

(भ) विशेषतश्चाह परेति। भवादृशां गुणोदयो दयादाक्षिण्यादीनां गुणानामभ्युदयः परेषां सुखोपपादने पराधीनः सुखोत्पादनपरायण इत्यर्थः सुतरां मया सह तत्र गत्वा मामवश्यमेव सुखयिष्यसीति भावः। चन्द्रापीडस्य रूपादिगुणग्राममवलोक्यावश्यमेव कादम्बरी परिमुग्धन्ती कृतमपि शपथं परिहरिष्यतीति मत्वा चन्द्रापीडं तत्र नेतुमेतावान् महाश्वेताया प्रयत्न इति बोध्यम्।

(म) इतीति। एनां महाश्वेताम्। परवान् पराधीनः सौजन्यातिशयात्त्वदधीन इत्यर्थः।

(य) क्रमेणेति। किञ्च चन्द्रापीडो गत्वा गन्धर्वराजस्य चित्ररथस्य कुलं वाटी यत्र तादृशं हेमकूटं पर्वतमासाद्य काञ्चनानां तोरणानि येषु तादृशानि सप्तकक्षान्तराणि समतीत्य त्यन्वयः।

(र) महेति। महाश्वेताया दर्शनेन प्रधावितो द्रुतमागतस्तेन। कनकवेत्रलता स्वर्णखचितवेत्रयष्ट्यो हस्तेषु यस्य तेन प्रतीहारजनेन दौवारिकगणेन उपदिश्यमानो मार्गः पन्था यस्य सः कुमारश्चन्द्रापीडः कुमारीपुराभ्यन्तरं ददर्शेति परेणान्वयः। अत्र क्लीवलिङ्गद्वितीयैकवचनान्तपदानि कुमारीपुराभ्यन्तरमिति वक्ष्यमाणस्य विशेषणानि। महाश्वेतापत्यया चन्द्रापीडं न कश्चिन्निवारयामासेति बोध्यम्।

বৃত্তান্ত শুনিয়া সেই শোকটা যেন সহ্য হইয়াছে বলিয়া বোধ হইতেছে, কারণ, সজ্জনের সহিত সংসর্গ দুঃখিত ব্যক্তিকেও আনন্দিত করিয়া থাকে। (ভ) বিশেষত ভবাদৃশ ব্যক্তিদের গুণগ্রাম, সর্ব্বদাই পরের সুখসম্পাদনে প্রবৃত্ত থাকে। (ম) মহাশ্বেতা এই কথা বলিলে চন্দ্রাপীড় তাঁহাকে বলিলেন— ভগবতি। আপনার সন্দর্শন হইতে আরম্ভ করিয়া এই ব্যক্তি আপনার অধীন হইয়া পড়িয়াছে, সুতরাং আপনি নিঃশঙ্কচিত্তে ইচ্ছানুসারে এই ব্যক্তিকে কর্ত্তব্য কার্য্যে নিযুক্ত করিতে পারেন। এই কথা বলিয়া চন্দ্রাপীড় মহাশ্বেতার সঙ্গেই চলিলেন।

(য) ক্রমে যাইয়া গন্ধর্ব্বরাজের রাজধানী হেমকূটপর্ব্বতে উপস্থিত হইয়া স্বর্ণতোরণ সমন্বিত সাতটী কক্ষা অতিক্রম করিয়া কন্যাপুরের দ্বারে উপস্থিত হইলেন। (র) তখন স্বর্ণখচিতবেত্রযষ্টিধারী দৌবারিকগণ মহাশ্বেতাকে দেখিয়া দ্রুত আসিয়া দূর হইতেই প্রণাম করিয়া, অগ্রে অগ্রে পথ বলিয়া দিতে দিতে চলিল—এই অবস্থায় চন্দ্রাপীড় প্রবেশ করিয়া

---

(১) সম্বাধ।

ত্বন্মূর্ত্তিরেবাত্রোপালম্ভমর্হতি, যা প্রথমদর্শন এব বিস্রম্ভমুপজনয়তি (য)। ইতরথা হি ত্বদ্বিধে সকলভুবনপ্রথিতমহিম্নি প্রযুজ্যমান সর্ব্বমেবানুচিতমিবাভাতি (র)। তথাহি, সম্ভাষণমপ্যধঃকরণমিবাপততি, আদরোঽপি প্রভুতাভিমানমিবানুমাপয়তি, স্তুতিরপ্যাত্মোৎসেকমিব সূচয়তি, উপচারোঽপি চপলতামিব প্রকাশয়তি, প্রীতিরপ্যনাত্মজ্ঞতামিব জ্ঞাপয়তি, বিজ্ঞাপনাপি প্রাগল্‌ভ্যমিব জায়তে, সেবাপি চাপলমিব দৃশ্যতে, দানমপি পরিভব ইতি ভবতি (ল)। অপি

স্বভাবমনোহরা ব্যবহৃতির্ব্যবহার। বয়স্যতা সখিত্বম্। স্বভাবেন সুকুমারা কোমলা হৃদয়ো ব্যবহারা যেভ্যস্তে অমী ভবদ্‌গুণা।

(য) ননু মৎপ্রার্থনাভাবেঽপি কথমেব জনা প্রীতিপরবশতাদিকমঙ্গীকুর্ব্বন্তীত্যাহ ত্বদিতি। অত্র প্রীতিপরবশতাদৌ। উপালম্ভ তিরস্কারম্। বিস্রম্ভ সর্ব্ববিষয়েষু বিশ্বাসমুপজনয়তি পরমরম্যসুন্দরত্বাদিতি ভাব। অত্র নিন্দয়া স্তুতির্গম্যতে তথা ব্যাজস্তুতিরলঙ্কার।

(র) ইতরথেতি। ইতরথা বিস্রম্ভজননাভাবে হি সকলেষু ভুবনেষু প্রথিতো মহিমা যস্য তস্মিন্ ত্বদ্বিধে জনে প্রযুজ্যমানমনুষ্ঠীয়মান সর্ব্বমেব সম্ভাষণাদিকম্ অনুচিতমিব আভাতি প্রকাশতে সর্ব্বৈ প্রতীয়ত ইত্যর্থ। বিস্রম্ভজননাভাবেঽপি অতুলনীয়মহিম্নো ভবাদৃশস্য সম্ভাষণাদিকরণে ধৃষ্টতোদয়াদিতি ভাব। এতেনাত্মনান্তু বিস্রম্ভজননেন সম্ভাষণাদৌ নাস্ত্যনৌচিত্যমিতি ধ্বনিতম্।

(ল) সর্ব্বমেবানৌচিত্য প্রদর্শয়িতুমাহ তথাহীতি। সম্ভাষণ মধুরালাপোঽপি অধঃকরণ তিরস্কার ইব আপততি উপস্থিতো ভবতি সম্ভাষণস্য যথাযথ কর্ত্তুমশক্যত্বাদিতি ভাব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার। আদরোঽপীতি সমানেনৈব সমানস্যাদরণীয়ত্বেন প্রভোস্তবাদরণে আদর্ত্তুরপি প্রভুতাভিমান পরৈরনুমাতব্য এবেত্যাশয়। ক্রিয়োৎপ্রেক্ষা। স্তুতি প্রশংসাবাদোঽপি আত্মন স্তোতু উৎসেক প্রশংসাকরণসামর্থ্যগর্ব্ব সূচয়তীব মহামহত স্তবে অসমর্থস্য প্রবৃত্ত্যসম্ভবাদিত্যভিপ্রায়। ক্রিয়োৎপ্রেক্ষা। উপচারোঽপি অভ্যুত্থানাদ্যাচারোঽপি চপলতাং প্রকাশয়তীব তাদৃশোপচারেঽপ্যাত্মনো যোগ্যত্বাভাবাদিতি ভাব। ক্রিয়োৎপ্রেক্ষা। প্রীতি সৌহার্দ্দমপি অনাত্মন পরিমাণানভিজ্ঞতাং জ্ঞাপয়তীব সমানেষ্বেব সৌহার্দ্দৌচিত্যাদিত্যাশয়। ক্রিয়োৎপ্রেক্ষা। বিজ্ঞাপনাপি বিষয়বিশেষনিবেদনমপি প্রাগল্‌ভ্য বাচালতেব জায়তে তবাপি সাহসাদিত্যভিপ্রায়। গুণোৎপ্রেক্ষা। সেবাপীতি তথাপ্যনধিকারাদিতি ভাব। গুণোৎপ্রেক্ষা। দানমপি পরিভব ইব ভবাদৃশপাত্রস্য সম্পত্তেরবমাননেব ভবতি প্রায়শ এব দানেন পাত্রস্য দরিদ্রতাসূচনাদিত্যাশয়। ক্রিয়োৎপ্রেক্ষা।

কাহাকেই বা আশস্ত করে না? (য) এ বিষয়ে আপনার এই আকৃতিই তিরস্কারের যোগ্য, যে আকৃতি প্রথম দর্শনেই বিশ্বাস জন্মাইয়া থাকে। (ব) না হইলে সমস্ত জগতে যাঁহার মহিমা বিখ্যাত হইয়াছে এইরূপ আপনার ন্যায় লোকের প্রতি যাহা কিছু করা যায় সে সমস্তই যেন অনুচিত বলিয়া বোধ হয়। (ল) দেখুন—সম্ভাষণ করাও যেন তিরস্কারের ন্যায় প্রতীতি হয়, আদর করাও যেন আধিপত্যের অহঙ্কার অনুমান করায় প্রশংসা করাও যেন নিজের গর্ব্ব সূচনা করে, গাত্রোত্থানপ্রভৃতি আচরণও যেন চঞ্চলতা প্রকাশ করে সৌহার্দ্দ্যও যেন নিজের যোগ্যতার অনভিজ্ঞতা জ্ঞাপন করে কোন বিষয় নিবেদন করাও যেন প্রগল্‌ভতা হইয়া পড়ে, পরিচর্য্যা করাও যেন চপলতার ন্যায় দেখা যায় এব দান করাটাও

च स्वयं गृहीतहृदयाय किं दीयते, जीवितेश्वराय (१) किं प्रतिपाद्यते, प्रथम कृतागमनमहोपकारस्य का ते प्रत्युपक्रिया, दर्शनदत्तजीवितफलस्य सफलमागमनं केन ते क्रियते (व)। प्रणयिताख्यानेन व्यपदेशेन दर्शयति कादम्बरी, न विभवम्। अप्रतिपाद्या हि परस्वता सज्जनविभवानाम् (श)। आस्तां तावद्विभवः, भवादृशस्य दास्यमप्यङ्गीकुर्वाणा नाकार्य्यकारिणीति नियुज्यते, (२) दत्त्वात्मानमपि वञ्चिता न भवति, जीवनमप्यर्पयित्वा न पश्चात्तप्यते (ष)। प्रणयिजनप्रत्याख्यान

(व) प्रियवचनान्तरमवतारयितुमाह अपि चेति। स्वयमात्मनैव गृहीतं हृदयं येन तस्मै भवते किं दीयते दातुं शक्यते अपि तु किमपि नेत्यर्थः देयस्य हृदयावधित्वात्तस्याप्यात्मनैव ग्रहणेन देयान्तराभावादिति भावः। जीवितेश्वराय सद्यवहारादिना जीवनस्वामिने भवते किं प्रतिपाद्यते प्रतिपाद्य स्वामीकर्त्तुं शक्यते अपि तु किमपि नेत्यर्थः। प्रतिपाद्यवस्तूनामपि जीवनान्तर्गतत्वादिति पूर्ववद्भावः। प्रथमं कृतम् आगमनमेव महोपकारो येन तस्य ते तव आगमनं केन कारणेन सफलं क्रियते कर्त्तुं शक्यते अपि तु केनापि नेत्यर्थः सर्वफलापेक्षयैव जीवनफलमुत्तमं तत्तु त्वया दर्शनेनैव दत्तं सुतरां तत्तुल्यमस्माभिः किं फलं दातव्यमस्ति येन तवागमनं तत्तुल्यफलवत् स्यादिति भावः। अत्र प्रत्येकवाक्ये एवार्थापत्तिरलङ्कारः।

(श) तर्हि किमर्थमिदं तवोपहारानयनमित्याह प्रणयितामिति। कादम्बरी अनेन व्यपदेशेन उपहारप्रदानच्छलेन प्रणयितां त्वां प्रति सौहार्द्दं दर्शयति न विभवं न तु धनसम्पदम्। हि यस्मात् सज्जनविभवानां साधुलोकधनसम्पदां परस्वता परकीयता अप्रतिपाद्या दानादिना न सम्पादनीया अपि तु परोपकारफलकत्वेन स्वतःसिद्धैवेति भावः। एतेन कादम्बर्य्या विभवे तवापि स्वत्वमस्तीति प्रणयितामात्रप्रदर्शनमेव प्रयोजनं दानस्येति द्योतितम्। अत्र शाब्दी परिसंख्या समासेन विशेषसमर्थनरूपोऽर्थान्तरन्यासस्तयोरङ्गाङ्गिभावेन सङ्करः तथा अप्रतिपाद्येति प्रधानस्य नञर्थस्य समासे गुणीभावाद्विधेयाविमर्शदोषः स च न प्रतिपाद्येति पाठेनैव समाधेयः।

(ष) आस्तामिति। आस्तां दूरे इति शेषः। नियुज्यते व्यपदिश्यते कादम्बरीति शेषः। न पश्चात्तप्यते नानुतप्यते। अत्र चन्द्रापीडस्य प्राधान्यप्रतिपादनकार्य्यं प्रति बहुकारणोपन्यासात् समुच्चयोऽलङ्कारः।

যেন তিরস্কার করার ন্যায় হয়। (ব) আরও দেখুন—আপনি নিজেই আমাদের হৃদয় গ্রহণ করিয়াছেন, সুতরাং আপনাকে কি দিতে পারি? আপনি জীবনেরই অধীশ্বর হইয়াছেন, অতএব আপনাকে কি দিয়া তাহার অধীশ্বর করিব? আপনি প্রথম আগমন করিয়া যে গুরুতর উপকার করিয়াছেন, তাহার উপযুক্ত প্রত্যুপকার কি আছে? এবং আপনি দর্শনদ্বারা আমাদের জীবনের ফলদান করিয়াছেন, সুতরাং আপনার আগমনকে আমরা কি দিয়া সফল করিব? (শ) তবে কাদম্বরী, এই উপহারপ্রদানচ্ছলে আপনার সহিত সৌহার্দ্দ্য দেখাইতেছেন, কিন্তু ঐশ্বর্য্য নহে, কারণ, সজ্জনের ধনসম্পত্তিতে স্বভাবতই পরের স্বত্ব আছে, সুতরাং তাহাতে আর স্বত্ব জন্মাইতে হয় না। (ষ) ধনসম্পত্তি দূরে থাক, কাদম্বরী ভবাদৃশ ব্যক্তির দাসত্ব করিতে স্বীকার করিলেও কেহ তাহাকে অকার্য্যকারিণী বলিবে না কিংবা আত্মসমর্পণ করিলেও বঞ্চিত হইবে না, অথবা জীবন সমর্পণ করিলেও অনুতাপ

(१) आयत्तजीवितायाय। (२) गच्छति।

पराङ्मुखी च दाक्षिण्यपरवती महत्ता सताम् (१) (स)। न च तादृशी भवति याचमानानाम्, यादृशी ददतां लज्जा यत् सत्यम् (२) अमुना व्यतिकरेण कृतापराधमिव त्वय्यात्मानमवगच्छति कादम्बरी (हू)। तदयममृतमथनसमुद्भूतानां सर्वरत्नानामेकः शेष इति ( ) शेषनामा हारोऽमुनैव हेतुना बहुमतो भगवता अम्भसाम्पत्या गृहमुपगताय प्रचेतसे दत्तः, पाशभृतापि गन्धर्वराजाय, गन्धर्वराजेनापि कादम्बर्य्यै, तयापि त्वद्वपुरस्यानुरूपमाभरणस्येति विभावयन्त्या नभस्तलमेवोचितं सुधासूतेर्धाम (४) न धरेत्यवधार्य्यानुप्रेषितः (क्ष)। यद्यपि निजगुण (५) गणाभरणभूषिताङ्गयष्टयो भवादृशाः क्लेशहेतुमितरजनबहुमतं

(स) अथ कादम्बर्य्या दत्तोऽप्युपहारः कथं मया ग्राह्य इत्याह पराङ्मुखीति। सतां महत्ता महिमा चित्तस्य उदात्तप्रसार इत्यर्थः प्रणयिजनस्य तदुपहृतद्रव्यस्येति तात्पर्य्यं प्रत्याख्याने पराङ्मुखी विशेषतश्च दाक्षिण्यपरवती औदार्य्याधीना। सुतरामवश्यमेवायमुपहारो भवता ग्राह्य इति भावः।

(ह) नन्विममुपहारं गृहीतु मे उदासीनत्वाल्लज्जा जायत इत्याह न चेति। याचमानानां पात्राणामित्यर्थः। तादृशी लज्जेति शेषः। यत्सत्यमित्येकमेवाव्ययं निश्चयार्थे। अतएव कादम्बरी अमुना व्यतिकरेण दानसम्बन्धेन आत्मानं त्वयि कृतापराधमिवावगच्छति दातृत्वादिति भावः। अत्र वाक्यार्थहेतुकं काव्यलिङ्गमलङ्कारः तथा यच्छब्दान्वितवाक्यस्य परपाठाद्वाक्यगतविधेयाविमर्शदोषः स चास्य पूर्वपाठात् परिहरणीयः।

(क्ष) तदिति। शेषोऽवशिष्ट इति हेतोरेव शेषनामा। अमुनैव हेतुना शेषत्वेन भगवता अम्भसाम्पत्या समुद्रेण बहुमतस्तदन्याभावादुत्कर्षाश्रयत्वेन। प्रचेतसे वरुणाय। पाशभृतापि वरुणेनापि। अत्र प्रचेतसे इत्यभिधाय पाशभृतेत्यभिधानात् प्रक्रमभङ्गदोषः स च प्रचेतसेति पाठेनैव समाधेयः। तयापि कादम्बर्य्या। विभावयन्त्या चिन्तयन्त्या। तथा सुधासूतेश्चन्द्रस्य नभस्तलमाकाशमेव उचितं स्वच्छत्वादुच्चत्वाच्च स्वयोग्यं धाम आश्रयः न धरा भूतलमित्यवधार्य्य मनसा निश्चित्य चन्द्रापीड एवास्य योग्य आश्रयो न तु कादम्बरीति भावः। अनुप्रेषितस्त्वत्सकाशं प्रेरितः। अत्र दृष्टान्तोऽलङ्कारः।

(क) यद्यपीति। निजा गुणगणा विद्याविनयादय एवाभरणानि तैर्भूषिता अङ्गयष्टयो येषां ते। क्लेशहेतु

করিবে না। (স) সৎলোকের চিত্তবৃত্তি, প্রণয়ীজনকে প্রত্যাখ্যান করিতে অনিচ্ছুক বিশেষত উদারতার অধীন। (হ) দাতাদিগের যেরূপ লজ্জা হয় যাচকদিগের সেরূপ লজ্জা হয় না, অতএব কাদম্বরী এই উপহারদানসম্পর্কে নিশ্চয়ই আপনার নিকট আত্মাকে অপরাধী বলিয়া মনে করিতেছেন। (ক্ষ) সমুদ্রমন্থনে সকল রত্নই উঠিয়াছিল কেবল এই হারছড়াই অবশিষ্ট ছিল তাই ইহার নাম শেষ এবং এই কারণেই সমুদ্র ইহাকে অত্যন্ত আদর করিতেন এবং গৃহস্থিত বরুণকে দান করিয়াছিলেন, বরুণও গন্ধর্ব্বরাজকে দিয়াছিলেন গন্ধর্ব্বরাজও কাদম্বরীকে দিয়াছেন, কাদম্বরীও "আপনার শরীরই এই অলঙ্কারের উপযুক্ত" ইহা ভাবিয়া এবং "চন্দ্রের পক্ষে আকাশই উপযুক্ত স্থান, কিন্তু ভূতল নহে" ইহা স্থির করিয়া এই হার আপনার নিকট পাঠাইয়া দিয়াছেন। (ক) নিজের গুণগ্রামরূপ অলঙ্কারেই সমস্ত

(१) महताम्। (२) यत्तु सत्यम्। (३) एकशेष इति। (४) सुधांशोर्धाम। (५) गुण।

মাভরণভারমঙ্গেষু নারোপয়ন্তি, তথাপি কাদম্বরীপ্রীতিরত্র কারণম্। কিং ন কৃতমুরসি শিলাশকলং কৌস্তুভাভিধানং লক্ষ্ম্যাঃ সহজমিতি বহুমানমাবিষ্কুর্ব্বতা ভগবতা শার্ঙ্গপাণিনা (ক)? ন চ নারায়ণোঽত্রভবন্তমতিরিচ্যতে, নাপি কৌস্তুভমণিরণুনাপি গুণলবেন শেষমতিশেতে, ন চাপি কাদম্বরীমাকারানুকৃতিকলয়াপ্যল্পীয়স্যা লক্ষ্মীরনুগন্তুমলম্ (খ)। অতোঽর্হতীয়মিমং বহুমানং ত্বত্তঃ। ন চাভূমিরেষা প্রীতিপ্রসরস্য। নিয়তঞ্চ ভবতা ভগ্নপ্রণয়া (১) মহাশ্বেতামুপালম্ভসহস্রৈঃ খেদয়িত্বাত্মানমুৎস্রক্ষ্যতি (গ)। অতএব মহাশ্বেতা তরলিকামপীম

ভারবশাৎ দুঃখকারণম্ ইতরনিগুর্ণজন এব বহুমতমাদৃতম্। অত্র হারধারণে। কুং পৃথিবীং স্তুভ্নাতি ব্যাপ্নোতীতি কুস্তুভঃ সমুদ্রঃ তত্র ভবঃ ইতি কৌস্তুভঃ স এব অভিধানং নাম যস্য তথাভূতম্ শিলাশকলং প্রস্তরখণ্ডং লক্ষ্ম্যাঃ নিজপ্রিয়তমায়াঃ ইতি ভাবঃ সহজম্ একসমুদ্রজাতত্বাৎ সহোদরমিতি হেতোঃ বহুমানমত্যাদরম্ আবিষ্কুর্ব্বতা ভগবতা শার্ঙ্গপাণিনা নারায়ণেন কিম্ উরসি বক্ষসি ন কৃতং নাপি তম্ অপি তু কৃতমেবেত্যর্থঃ। অতএব কাদম্বর্য্যাঃ প্রীতিবশাত্ত্বয়াপ্যয়ং হারো বক্ষসি ধারণীয় এবেতি ভাবঃ। অত্রাপি দৃষ্টান্তোঽলঙ্কারঃ তেন চ তথাপি প্রিয়তমা কাদম্বরীতি বস্তু ব্যজ্যত ইত্যলঙ্কারেণ বস্তুধ্বনিঃ।

(খ) অথ তে সর্ব্ব এবাস্মদাদিভ্যঃ প্রধানাঃ সুতরাং তেষাং চরিতমপ্যলৌকিকমিতি চেত্তত্রাহ ন চেতি। অত্রভবন্তং মাননীয়ং ত্বাম্ অতিরিচ্যতে গুণৈরতিশয়িতো ভবতি। অণুনা অল্পেনাপি গুণলবেন উৎকর্ষলেশেন শেষং তদাখ্যমিমং হারম্ অতিশেতে ন অতিক্রামতি। অল্পীয়স্যাপি আকারানুকৃতিকলয়া আকৃত্যনুকরণলেশেন কাদম্বরীমনুগন্তুমনুকর্ত্তুং নালং ন সমর্থা লক্ষ্মীঃ। কাদম্বরী সৌন্দর্য্যে চ গরীয়সীতি তাৎপর্য্যম্। সুতরাং তৎপ্রীত্যা হারোঽয়ং ভবতা ধারণীয় এবেতি ভাবঃ। অত্র লক্ষ্মীতঃ কাদম্বর্য্যাঃ প্রাধান্যপ্রতিপাদনাদ্ব্যতিরেকোঽলঙ্কারঃ।

(গ) অত ইতি। ইয়ং কাদম্বরী ত্বত্তস্ত্বৎসকাশাৎ ইমং হারধারণরূপং বহুমানমাদরম্ অর্হতি প্রাপ্তুং যোগ্যা ভবতি। এষা কাদম্বরী প্রীতিপ্রসরস্য ভবতঃ প্রণয়াতিরেকস্য অভূমিরপাত্রং ন অপি তু পাত্রমেবেত্যর্থঃ। ভগ্নপ্রণয়া হারপ্রত্যাখ্যানেন খণ্ডিতানুরোধা কাদম্বরী উপালম্ভসহস্রৈঃ ঈদৃশেন নিষ্ঠুরহৃদয়েন সহ ত্বয়া মৈত্রী কৃতা স এব আনীত ইত্যেবংবিধৈস্তিরস্কারসমূহৈঃ মহাশ্বেতাং খেদয়িত্বা বিষাদ্য নিয়তং নিশ্চিতম্ আত্মানম্ উৎস্রক্ষ্যতি পরিত্যক্ষ্যতি।

অঙ্গ অলঙ্কৃত থাকে বলিয়া আপনার ন্যায় লোকেরা, ক্লেশের কারণ ও নির্গুণ লোকেরই আদৃত অলঙ্কারের ভার যদিও অঙ্গে ধারণ করেন না, তথাপি আপনার এই হার ধারণ করার বিষয়ে কাদম্বরীর সন্তোষই কারণ। কৌস্তুভনামক প্রস্তরখণ্ড লক্ষ্মীর সহোদর বলিয়া বিশেষ আদর করিয়া ভগবান্ নারায়ণ কি তাহা বক্ষে ধারণ করেন নাই? (খ) আপনা হইতে নারায়ণ প্রধান নহেন কৌস্তুভমণিও অল্পমাত্র গুণদ্বারাও এই হার হইতে উৎকৃষ্ট নহে এবং লক্ষ্মীদেবীও আকৃতির অল্পমাত্র অনুকরণদ্বারাও কাদম্বরীর অনুসরণ করিতে পারেন না, (গ) অতএব কাদম্বরী আপনার নিকট এই আদর পাইবার যোগ্য কারণ, তিনি আপনার প্রণয়ের অপাত্র নহেন, বিশেষত আপনি এই অনুরোধ রক্ষা না করিলে কাদম্বরী বহুতর তিরস্কারদ্বারা মহাশ্বেতাকে দুঃখিত করিয়া নিশ্চয়ই প্রাণ পরিত্যাগ করিবেন।

(১) ভগ্নপ্রণয়া।

हारमादाय त्वत्सकाशं प्रेषितवती। तयापि कुमारस्य सन्दिष्टमेव "न खलु महाभागेन मनसापि कार्य्यः कादम्बर्य्याः प्रथमप्रणयप्रसरभङ्गः" इत्युक्त्वा च ताराचक्रमिव चामीकराचलस्य तटे तं तस्य वक्षःस्थले बबन्ध (घ)।

चन्द्रापीडस्तु विस्मयमानः प्रत्यवादीत्—"मदलेखे! किमुच्यते (१) निपुणासि, जानासि ग्राहयितुम्, उत्तरावकाशमपहरन्त्या कृतं वचसि कौशलम् (ङ)। अयि मुग्धे! के वयमात्मनः? के वा वयं ग्रहणस्याग्रहणस्य (२) वा? गता खल्वियमस्तं कथा (च)। सौजन्यशालिनीभिर्भवतीभिरुपकरणीकृतोऽयं जनो यथेष्टमिष्टेष्वनिष्टेषु वा (३) व्यापारेषु विनियुज्यताम् (छ)। अतिदक्षिणाया खलु देव्याः कादम्बर्य्या निर्दाक्षिण्यमपि (४) गुणा न कञ्चिन्न दासीकुर्वन्ति" इत्युक्त्वा च कादम्बरीसम्बद्धाभिरेव कथाभिः सुचिरं स्थित्वा विसर्जयाम्बभूव मदलेखाम् (ज)।

(घ) अत इति। हारमादाय स्थितामिति स्थितपदाध्याहारान्नैकवाक्यत्वहानिः। प्रेषितवतीति हारग्रहणं महाश्वेताया अपि महानुरोध इति प्रत्येतव्यम् अन्यथा तरलिकामपहाय कादम्बर्य्याः काचित् परिचारिकैवागच्छेदिति भावः। तया महाश्वेतया तथापि कुमारस्य भवतः समीपे। महाभागेन भवता। प्रथमप्रणयस्य प्रसरभङ्गः प्राप्तिनिरासः। न कार्य्यो हारप्रत्याख्यानेन न विधेयः। चामीकराचलस्य सुमेरुपर्व्वतस्य तटे ऊर्द्ध्वदेशे ताराचक्रं नक्षत्रसमूहमिव। तस्य चन्द्रापीडस्य। बबन्ध मदलेखेति सम्बन्धः। अत्रोपमालङ्कारः।

(ङ) चन्द्रेति। विस्मयमानो मदलेखाया वाक्पटुतया विस्मयापन्नः। किमुच्यते किं मया वक्तव्यम्।

(च) अयीति। आत्मनः स्वस्य के? अपि तु केऽपि नेत्यर्थः। युष्माकं व्यवहारेण वयं युष्मदीया एव सञ्जाता इति भावः। के वेति युष्माकमिच्छया ग्रहणमग्रहणं वा मम सम्पद्यतेति भावः। उभयत्रापि वयमिति चास्मदर्थेति बहुवचनम्। इयं कथा अस्माकं स्वाधीनताप्रस्तावः अस्तं गता युष्माकं व्यवहारेण सर्व्वथैव वशीकृतत्वादित्यभिप्रायः।

(छ) सौजन्येति। उपकरणीकृतः सेवकीकृतः अतएवाह यथेष्टमित्यादि।

(ঘ) এই জন্যই মহাশ্বেতা তরলিকাকেও এই হার লইয়া আপনার নিকট পাঠাইয়া দিয়াছেন এবং তিনিও আপনার নিকট খবর দিয়াছেন যে মহাশয়! আপনি মনে মনেও যেন কাদম্বরীর এই প্রথম প্রণয় ভঙ্গ না করেন এই কথা বলিয়া মদলেখা, সুমেরুর শৃঙ্গে নক্ষত্রসমূহের ন্যায় চন্দ্রাপীড়ের বক্ষঃস্থলে সেই হারছড়া পরাইয়া দিল।

(ঙ) চন্দ্রাপীড় কিন্তু মদলেখার বাক্‌পটুতায় বিস্ময়াপন্ন হইয়া প্রত্যুত্তর করিলেন—"মদলেখে! আমার বলিবার কি আছে? তুমি চতুরা কিভাবে গ্রহণ করাইতে হয় তাহাও জান এবং আমার উত্তর দিবার অবকাশপর্য্যন্ত না দিয়া বিশেষ বাক্‌পটুতা প্রকাশ করিয়াছ। (চ) হে মুগ্ধে! আমি নিজের কে? কি বা গ্রহণ করিতে বা গ্রহণ না করিতেই বা কে? আমার স্বাধীনতার কথা অস্তমিত হইয়াছে। (ছ) কারণ, তোমরা অত্যন্ত সৌজন্যশালিনী, তাই আমাকে একেবারে দাস করিয়া ফেলিয়াছ, এতএব ইষ্টই

(१) उच्यताम्। (२) ग्रहणाग्रहणस्य। (३) अनभीष्टेषु वा। (४) निर्दाक्षिण्या अपि।

অনতিদূরং গতায়াঞ্চ তস্যাং ক্রীড়াপর্ব্বতকগতম্ (১) উদয়গিরিগতমিব চন্দ্রমসং চন্দনদুকূলহারধবলং চন্দ্রাপীড়ং দ্রষ্টুং সমুৎসারিত (২) বেত্রচ্ছত্রচামর-চিহ্না নিষিদ্ধাশেষপরিজনানুগমনা (৩) তমালিকাদ্বিতীয়া চিত্ররথসুতা পুনরপি তদেব সৌধশিখরমারুরোহ (ঝ)। তত্রস্থা চ পুনস্তথৈব বিবিধবিলাস-তরঙ্গিতৈর্বিকারি বিলোকিতৈ (৪) জহারাস্য মনঃ (ঞ)। তথাহি, মুহুর্নিতম্ববিম্বন্যস্তবামহস্ত-পল্লবা প্রাহ্বতাংশুকানুসার (৫) প্রসারিত দক্ষিণকরা নিশ্চলতারকা লিখিতেব, (ট)

(ঞ) অতীতি। অতিদক্ষিণায়া অত্যুদারায়া দেব্যাঃ কাদম্বর্য্যা গুণাঃ সৌজন্যসৌন্দর্য্যাদয়ঃ নিদাক্ষিণ্য-মপি ঔদার্য্যবিহীনমপি কঞ্চিজ্জনং ন দাসীকুর্ব্বন্তি ইতি ন অপি তু সর্ব্বমেব দাসীকুর্ব্বন্তীত্যর্থঃ। অতএব মনোপ-করণীকরণে কিমপি নাসামর্থ্যমিতি ভাবঃ। বিসর্জ্জয়াম্বভূব চন্দ্রাপীড় ইতি সম্বন্ধঃ।

(ঝ) অনতীতি। তস্যাং মদলেখায়াম্। উদয়গিরিগতং চন্দ্রমসমিব চন্দনেন মদলেখাকৃতচন্দনাঙ্গ-রাগেণ দুকূলাভ্যাং তৎপরিধাপিতাভ্যাং সূক্ষ্মবসনাভ্যাং হারেণ চ শেষাখ্যেন ধবলম্ অন্যত্র তু চন্দনদুকূলহারবদ্ধবলম্। সমুৎসারিতানি দূরীকৃতানি বেত্রচ্ছত্রচামরাণ্যেব চিহ্নানি যয়া সা বেত্রযষ্টিধারিণীং প্রতীহারীং ছত্রধারিণীং চামরধারিণীশ্চ পরিচারিকামাগন্তুং নিষিধ্যেত্যর্থঃ নিষিদ্ধম্ অশেষাণাং সর্ব্বেষাং পরিজনানাম্ অনুগমনং যয়া সা তথা তমালিকৈব দ্বিতীয়া যস্যাঃ সা চিত্ররথসুতা কাদম্বরী। অত্র শ্রৌতোপমালঙ্কারঃ।

(ঞ) তত্রস্থেতি। তথৈব পূর্ব্ববদেব। বিবিধা যে বিলাসা ভ্রূসঙ্কোচাদয়স্তৈস্তরঙ্গিতানি চঞ্চলীকৃতানি তৈ বিকারীণি বিলোকিতানি চ তানি দৃষ্টিপাতাশ্চেতি তৈঃ। অস্য চন্দ্রাপীড়স্য।

(ট) বিবিধবিলাসানেব প্রদর্শয়তি ত[illegible]তি। নিতম্ববিম্বে ন্যস্তঃ স্থাপিতঃ বামহস্তপল্লবঃ যয়া সা প্রাহ্বতস্য পরিহিতস্য অংশুকস্য বসনস্য অনুসারেণ [illegible]নাপহৃতস্যানুসরণেনেত্যর্থঃ প্রসারিতো দক্ষিণকরো যয়া সা তথা

হউক বা অনিষ্টই হউক যে কোন কা[illegible]ই ব্যক্তিকে ইচ্ছানুসারে নিযুক্ত করিতে পারে। (ঞ) অত্যন্ত উদারপ্রকৃতি কাদম্বরীদেবীর গুণগ্র[illegible] ঔদার্য্যবিহীন ব্যক্তিকেও যে বশীভূত করে না—ইহা বলা যায় না। এই কথা বলিয়া চন্দ্রাপী[illegible] কাদম্বরীসম্বন্ধীয় কথোপকথনে বহু সময় থাকিয়া মদলেখাকে বিদায় দিলেন।

(ঝ) মদলেখা কিছু দূর চলিয়া গেলে কাদম্বরী প্রতীহারী ছত্রধারিণী ও চামরধারিণী পরিচারিকাদিগকে পরিত্যাগ করিয়া অন্যান্য সকল পরিজনদিগকেও সঙ্গে আসিতে নিষেধ করিয়া, কেবল তমালিকার সহিত যাইয়া উদয়পর্ব্বতস্থিত চন্দ্রের ন্যায় ক্রীড়াপর্ব্বতস্থিত এবং চন্দন সূক্ষ্ম বসন ও হার ধারণ করায় ধবলবর্ণ চন্দ্রাপীড়কে দেখিবার নিমিত্ত পুনরায় সেই অট্টালিকার উপরে আরোহণ করিলেন। (ঞ) সেখানে থাকিয়া পুনরায় সেই ভাবেই নানাবিধ বিলাসবশতঃ চঞ্চল ও বিকারজনক দৃষ্টিপাতদ্বারা চন্দ্রাপীড়ের মন হরণ করিতে লাগিলেন। (ট) নিতম্বমণ্ডলে বামহস্ত বিন্যস্ত করিয়া এবং বায়ুতে পরিধানের বস্ত্র উড়াইয়া নিলে তদনুসারে দক্ষিণ হস্ত প্রসারণ করিয়া ও নয়নের তারা দুইটী নিশ্চল রাখিয়া

(১) ক্রীড়াপর্ব্বতগতম্। (২) উৎসারিত। (৩) পরিজনা।
(৪) তরঙ্গিতৈর্বিলোকিতৈঃ। (৫) অংশুকাহৃত।

মুহুর্জৃম্ভিকারম্ভদত্তোত্তানকরতলতয়া তদ্গোত্রস্খলনভিয়া নিরুদ্ধবদনেব, (ঠ) মুহুরংশুকপল্লব তাড়িত নিশ্বাসামোদ (১) লুব্ধ মধুকর মুখরতয়া প্রস্তুতাহ্বানেব, (ড) মুহুরনিল-গলিতাংশুক সম্ভ্রম (২) দ্বিগুণোকৃত ভুজযুগল প্রাবৃত পয়োধরতয়া দত্তালিঙ্গনসংজ্ঞেব, (ঢ) মুহুঃ কেশপাশাকৃষ্ট কুসুম পূরিতাঞ্জলি-সমাঘ্রাণ লীলয়া কৃতনমস্কারেব, (ণ) মুহুরুভয়-তর্জনী ভ্রমিত মুক্তাপ্রালম্বতয়া (৩) নিবেদিত-হৃদয়োৎকলিকোদ্গমেব, (ত) মুহুরুপহারকুসুমস্খলন বিধুত-করতলতয়া কথিত

নিশ্চলে তারকে কনীনিকাদ্বয় যস্যা সা লিখিতা চিত্রিতেব সতী কাদম্বরী বিলোকয়ন্তী তাবদবতস্থে ইতি বক্ষ্যমাণেনান্বয়। উপরতাম্বোবমন্বয়ী বোধ্য। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার।

(ঠ) মুহুরিতি। জৃম্ভিকায়া গাত্রভঙ্গস্য আরম্ভে দত্ত ন্যাস্তমুখোপরি স্থাপিতম্ উত্তান করতল যয়া তস্যা ভাবস্তয়া হেতুনা তস্য চন্দ্রাপীড়স্য যদ্গোত্রস্খলন ভ্রান্ত্যা নামোচ্চারণ তদ্ভিয়েব নিরুদ্ধবদনা পিহিতমুখী। হেতূৎপ্রেক্ষা।

(ড) মুহুরিতি। অংশুকপল্লবেন বসনাঞ্চলেন তাড়িতা নিশ্বাসস্য আমোদেন সৌরভেণ লুব্ধা যে মধুকরা ভ্রমরাস্তৈর্মুখরতয়া শব্দায়মানতয়া প্রস্তুতমারব্ধম্ আহ্বান যয়া সেব। আহ্বানপ্রস্তাবোৎপ্রেক্ষণাৎ ক্রিয়োৎপ্রেক্ষা।

(ঢ) মুহুরিতি। অনিলেন বায়ুনা গলিতে স্তনমণ্ডলাৎ পতিতে অংশুকে উত্তরীয়বসনে সম্ভ্রমেণ ত্বরয়া দ্বিগুণীকৃতম্ উপর্য্যধোভাবেন বক্ষসি স্থাপিতং যদ্ভুজযুগল তেন প্রাবৃতৌ আচ্ছাদিতৌ পয়োধরৌ স্তনৌ যয়া তস্যা ভাবস্তয়া হেতুনা দত্তা আলিঙ্গনায় সংজ্ঞা সঙ্কেতো যয়া সেব ভুজযুগলেন আলিঙ্গনপ্রকারকরণাদিতি ভাব। ক্রিয়োৎপ্রেক্ষা।

(ণ) মুহুরিতি। কেশপাশাদাকৃষ্টৈরানীতৈ কুসুমৈ পূরিতস্য অঞ্জলে সমাঘ্রাণস্য লীলয়া বিলাসেন কৃত নমস্কারেব প্রা অঞ্জলিকরকপোলসংযোগাদিতি ভাব। ক্রিয়োৎপ্রেক্ষা।

(ত) মুহুরিতি। উভয়তর্জনীভ্যা ভ্রমিত মুক্তাপ্রালম্ব মৌক্তিকহারো যয়া তস্যা ভাবস্তয়া হেতুনা নিবেদিতো

চিত্রিতের ন্যায় থাকিয়া বার বার দেখিতে লাগিলেন। (ঠ) কখনও হাই তুলিতে আরম্ভ করিবার সময়ে মুখের উপরে উত্তানভাবে করতল সংস্থাপন করায় ভ্রমবশত চন্দ্রাপীড়ের নামোচ্চারণ হইবার ভয়েই যেন মুখমণ্ডল আবৃত করিয়া বার বার চন্দ্রাপীড়ের প্রতি দৃষ্টিপাত করিতে লাগিলেন। (ড) কখনও নিশ্বাসের সৌরভলোভে আগত ভ্রমরগণ বস্ত্রাঞ্চলদ্বারা বিতাড়িত হওয়ায় রব করিতেছিল বলিয়া কাদম্বরী যেন চন্দ্রাপীড়কে আহ্বান করিতে আরম্ভ করিয়া বার বার দৃষ্টিপাত করিতে লাগিলেন। (ঢ) কখনও বায়ুবেগে উত্তরীয় বসন পতিত হইলে তাড়াতাড়ি ভুজযুগল দ্বিগুণ করিয়া তাহাদ্বারা স্তনযুগল আবৃত করায় আলিঙ্গনের সঙ্কেত জানাইয়াই যেন বার বার চন্দ্রাপীড়ের প্রতি দৃষ্টিপাত করিতে লাগিলেন। (ণ) কখনও কেশকলাপ হইতে কুসুমসমূহ আনয়নপূর্ব্বক তাহাদ্বারা অঞ্জলি পূর্ণ করিয়া তাহার আঘ্রাণ করার ছলে নমস্কার করিতে থাকিয়াই যেন বার বার চন্দ্রাপীড়কে দেখিতে লাগিলেন। (ত) কখনও দুইটী তর্জ্জনী অঙ্গুলীদ্বারা মুক্তার হার ভ্রমণ করাইতে থাকায়, মনের উৎকণ্ঠা জানাইয়াই যেন বার বার চন্দ্রাপীড়ের প্রতি দৃষ্টিপাত করিতে লাগিলেন। (থ) কখনও

(১) নিশ্বাসামোদ। (২) অংশুকসংবরণসম্ভ্রম। (৩) প্রলম্বতয়া।

कुसुमायुधशरप्रहारवेदनेव, (थ) मुहुर्गलित रशना निगड़-(१) नियमित( ) चरणतया समर्पितेव मन्मथेन, (द) मुहुःस्खलितोरुविधुतदुकूला क्षितितल दोलायमानांशुकैकदेशाच्छादितकुचा, चकित परिवर्त्तन-त्रुट्यत्त्रिवलीलता, च स-स्रस्त (२) चिकुरकलाप सङ्कलनाकुल-करकमला, कटाक्ष क्षेप-धवलीकृतकर्णोत्पल विलक्ष (४) स्मित सुधाधूलि धूसरितकपोल साचीकृत्य, (५) वदनमनेकरस-भङ्गि-भङ्गुर विलोकयन्ती, तावदवतस्थे यावदुपसंहृतालोको दिवसो बभूव (ध)।

हृदयस्य उत्कलिकोद्गम समागमोत्कण्ठोत्पत्तिर्य्या सेव हारभ्रमणेन उत्कण्ठया हृदयभ्रमणस्य सूचनादिति भाव। प्रालम्बमृजुलम्बि स्यादित्यमर। क्रियोत्प्रेक्षा।

(थ) मुहुरिति। उपहारकुसुमेषु विकीर्णपुष्पेषु स्खलनेन विधुत कम्पित करतल यया तस्या भावस्तया हेतुना कथिता सूचिता कुसुमायुधशरप्रहारस्य वेदना यया सेव। क्रियोत्प्रेक्षा।

(द) मुहुरिति। गलिता कटिदेशात् पतिता रशना काञ्चीदामैव निगड शृङ्खला तया नियमितौ बद्धौ चरणौ यस्यास्तया भावस्तया हेतुना मन्मथेन स्वयस्य बद्धा चन्द्रापीडाय अर्पितेव। क्रियोत्प्रेक्षा।

(ध) मुहुरिति। चलिताभ्यां कम्पिताभ्याम् ऊरुभ्यां विधुत दुकूल गलितप्रायवसन यया सा। क्षितितले दोलायमानेन च युक्तकदेशेन वस्त्राञ्चलेन पुनरुत्थापितेनेत्यर्थ आच्छादितौ कुचौ यया सा। चकित ससम्भ्रम यत् परिवर्त्तन तेन त्रुट्यन्ती चर्म्मप्रसारणान्नश्यन्ती त्रिवलीलता यस्या सा। च सयो स्कन्धयो स्रस्ती विगलितौ यश्चिकुर कलाप केशपाशस्तस्य सङ्कलने पुनरेकत्र करणे आकुल व्यग्र करकमल यस्या सा। कटाक्षक्षेपेण तस्य प्रभयेत्यर्थ धवलीकृत कर्णोत्पल यस्मिन् कर्म्मणि तद्यथा तथा। अत्र धवलीकरणासम्बन्धेऽपि तत्सम्बन्धोक्त रतिशयोक्ति रलङ्कार। विलक्षेण लज्जया युक्त यत् स्मित मन्दहास्यमेव सुधाधूलिश्चन्द्रलताभ्याम् चूर्ण पराग विलक्षस्मित सुधाधूलिरिवेति वा तया धूसरितौ धूसरवर्णीकृतौ कपोलौ यस्मिन् कर्म्मणि तद्यथा तथा। अत्रोपमारूपकयो सन्देहसङ्कर एव वदतिशयोक्तिस्थानयो पुनरङ्गाङ्गिभावेन सङ्कर। तथा अनेका विविधा या रसभङ्गय अनुरागेण

বিক্ষিপ্ত কুসুমসমূহের উপরে পতননিবন্ধন করকমল কম্পিত করিতে থাকায় মদন শর প্রহারের বেদনা প্রকাশ করিয়াই যেন বার বার চন্দ্রাপীড়কে দেখিতে লাগিলেন। (দ) কখনও কটিদেশ হইতে নিপতিত চন্দ্রহারম্বরূপ শৃঙ্খলে চরণযুগল বদ্ধ হওয়ায় কামদেবকর্তৃক বন্ধনপূর্ব্বক প্রদত্ত হইয়াই যেন বার বার দৃষ্টিপাত করিতে লাগিলেন। (ধ) কখনও পতিত প্রায় পরিধানের বস্ত্র কম্পিত ঊরুযুগলদ্বারা ধারণ করিয়া কখনও ভূতললুণ্ঠিত বস্ত্রাঞ্চল তুলিয়া তদ্দ্বারা স্তনযুগল আবৃত করিয়া, কখনও তাড়াতাড়ি ফিরিয়া দাঁড়াইলে পেটের উপরের থরগুলিকে লুপ্ত করিয়া কখনও স্কন্ধের উপরে অলুলায়িত কেশগুলিকে একত্র করিবার জন্য হস্ত প্রসারণ করিয়া কখনও মুখমণ্ডল বক্র করিয়া অনুরাগবশত নানাবিধ ভঙ্গীতে বক্রভাবে চন্দ্রাপীড়কে দেখিতে লাগিলেন, তখন কটাক্ষের আলোকে তাঁহার কর্ণোৎপলকে ধবলবর্ণ করিয়াছিল এবং লজ্জাযুক্ত ঈষৎ হাস্যরূপ চূর্ণরেণু তাঁহার গণ্ডযুগলকে

(१) निविड़। (२) पतित। (३) समस्त।
(४) विलक्ष्य विलक्ष्यमाण। (५) साचीकृतवदनम्।

অথ হৃদয়স্থিতকমলিনীরাগেণেব রজ্যমানে রাজীবজীবিতেশ্বরে সকললোক চক্রবাল-চক্রবর্ত্তিনি (১) ভগবতি পূষ্ণি, (ন) ক্রমেণ চ দিনপরিলম্বনরোষ রক্তাভি কামিনীদৃষ্টিভিরিব সংক্রমিতশোণিম্নি ব্যোম্নি (প) সংহৃতশোচিষি জাতে জঠর হারীত হরিত হয়ে হরিতবাজিনি, (ফ) রবি (২) বিরহ মীলিত সরোজ সংহতিষু হরিতায়মানেষু কমলবনেষু, (ব) শ্বেতায়মানেষু কুমুদষণ্ডেষু, (২) লোহিতায়মানেষু দিঙ মুখেষু, ( ) নীলায়মানে শর্ব্বরীমুখে, (ভ) শনৈঃ শনৈঃস্ব

রচনাবিশেষাত্তামিভঙ্গুর বক্র যথা স্যাত্তথা বদন সাচীকৃত্য বক্র বিধায় চন্দ্রাপীড় বিলোকয়ন্তী সতী তাবদব তস্থে যাবত্ উপসংহৃত রবিণা সঙ্কোচিত আলোকো যস্য তাদৃশো দিবসো বভূব।

(ন) অথেতি। রাজীবানাং পদ্মানাং জীবতেশ্বরে প্রকাশনবাজ্জীবনাত্ জীবনবিয়ন্তরি সকললোকচক্রবা স্য সমস্তভুবনমণ্ডলস্য চক্রবর্ত্তিনি সার্ব্বভৌমে অধীশ্বরে ভগবতি পূষ্ণি সূর্য্যে আত্মনো হৃদয়স্থিতো য কমলিনীরাগ পদ্মিনীং প্রত্যনুরাগ স এব রাগো রক্তিমা তেন রজ্যমানে আরক্তিক্রিয়মাণে ইব সতি। অত্র স্ত্রীপুংলিঙ্গাভ্যাং কমলিনী সূর্য্যয়োর্নায়িকানায়কব্যবহারসমারোপাত্ সমাসোক্তি অনুরাগরক্তিম্নোর ভেদাপ শ্লেষেণাভেদাধ্যবসায়াদতিশয়োক্তি ক্রিয়োত্প্রেক্ষা চেত্যেতাসাং স্বভাবেন সঙ্করস্ত্বেকানুপ্রাসেন পুন সংসৃজ্যতে।

(প) ক্রমেণেতি। কিঞ্চ ব্যোম্নি আকাশে দিনস্য পরিলম্বনে পরিণামে যো রোষো দত্তসঙ্কেতস্যাপি নায়কস্যানা গমনাত্ কোপস্তেন রক্তাভির্লোহিতাভি কামিনীনাং দৃষ্টিভির্নয়ন সংক্রমিত আরক্ষিত শোণিমা লৌহিত্য য কন্ তস্মিন্নিব সতি। অত্রাপি শোণিম্ন সংক্রমণোত্প্রেক্ষাত্ ক্রিয়োত্প্রেক্ষা।

(ফ) সংহৃতেতি। জরঠ পরিণতো বয়সো যো হারীত পক্ষিবিশেষস্তদ্বত্ হরিতা পালাশবর্ণা হয়া অশ্বা যস্য তস্মিন্ হরিতবাজিনি হরিদশ্বে সূর্য্যে সংহৃতানি সঙ্কোচিতানি শোচীষি প্রভা যেন তস্মিন্ সতি। অত্র লুপ্তোপমা ছেকানুপ্রাসয়োরেকাশ্রয়ানুপ্রবেশরূপ সঙ্কর তথা জরঠেত্যাদিপদয়োরত্র গতপুনরুক্ততাদোষ কিঞ্চ জরঠেত্যাদিবিশেষণস্য মুখ্যানুপকারিত্বাদপুষ্টার্থ তাদোষশ্চ তেন জরঠেত্যাদিবিশেষণত্যাগেনৈব তয়ো সমাধান বিধেয়ম্।

(ব) রবীতি। রবিবিরহেণ মীলিতা মুদ্রিতা সরোজসংহতি পদ্মসমূহো যেষাং তেষু তথোক্তেষু কমলবনেষু হরিতায়মানেষু পদ্মমুদ্রণাদেব হরিদ্বর্ণায়মানেষু সত্সু।

ধূসরবর্ণ করিয়াছিল—এই অবস্থায় কাদম্বরী তত কাল সেখানে অবস্থান করিলেন যত কাল দিনের আলোক রহিল।

(ন) তাহার পর পদ্মগণের জীবিতেশ্বর ও সমগ্র ভুবনমণ্ডলের সম্রাট্ ভগবান সূর্য্যদেব পদ্মিনীর প্রতি মনের অনুরাগেই যেন আরক্তবর্ণ হইয়া উঠিলেন। (প) ক্রমে দিবাবসানে সঙ্কেতকারী নায়কের অনুপস্থিতিনিবন্ধন ক্রোধে আরক্তবর্ণ কামিনীগণের দৃষ্টিই যেন আকাশে রক্তিমা সঞ্চারিত করিল। (ফ) বৃদ্ধ হারিলপক্ষীর ন্যায় হরিতবর্ণ অশ্বসমন্বিত সূর্য্য, কিরণ জাল সঙ্কুচিত করিলেন। (ব) সূর্য্যের বিরহে পদ্মসমূহ মুদ্রিত হওয়ায় পদ্মবন হরিতবর্ণ

(১) সকলচক্রবালচক্রবালহৃদয়চক্রবর্ত্তিনি। (২) হরিতবাজি ।

(৩) তত্কালজলিনতিমিরপীতভুজঙ্গসঙ্ঘবিসারিতত্বব পুরস্তাদগজবর্ম্মণীব।

(৪) নিজসুহৃদমৃতমূর্ত্তিসমালোকনাশয়া মণ্ডপসন্দৃশ্যিতস্মিতেষ্বিবোন্মুখেষু ধবলায়মানেষু।

पुनर्दिनश्री-समागमाशाभिरिवानुरागिणीभि सहैव दीधितिभिरदर्शनतामुपगते भगवति गभस्तिमालिनि, (म) तत्कालविजृम्भितेन च कादम्बरीहृदयरागसागरेणेव (१) आपूरिते सन्ध्यारागेण जीवलोके (य) कुसुमायुधानल-दह्यमानहृदय (२) सहस्रधूम इव जनितमानिनीनयनवारिणि ( ) विस्तीर्य्यमाणे तरुणतमालत्विषि तिमिरे, (र) दिक्करि करावकीर्ण (४) शीकरासार इव श्वेतायमानतारागणे गगने, (ल) जातायामदर्शनक्षमायां वेलायां सौधशिखरादवततार कादम्बरी क्रीडापर्वतक

(भ) श्वेतेति। कुमुदानां षण्डेषु समूहेषु श्वेतायमानेषु सत्सु प्रकाशादिति भाव। दिङ्मुखेषु लोहितायमानेषु सत्सु सन्ध्यारागादित्याशय। अथ वैमुखे प्रदोषे नीलायमाने सति अन्धकारागमादित्यभिप्राय।

(म) पुनरिति। किञ्च भगवति गभस्तिमालिनि सूर्य्ये पुनरपि दिनश्रिय समागमाशाभि सम्मेलनाकाङ्क्षाभिरिव अनुरागिणीभिरासक्तिमतीभिर्लोहिताभि दीधितिभि किरणै सहैव अदर्शनतां दर्शनायोग्यतामुपगते सति। अत्र लिङ्गेन रविदिनश्रियोर्नायकनायिकाव्यवहारसमारोपात् समासोक्ति पूर्णोपमा चानयोरङ्गाङ्गिभावेन सङ्कर।

(य) तदिति। किञ्च यस्मिन् काले विजृम्भितेन उद्वेलितेन कादम्बर्य्या हृदयस्य रागसागरेणेव चन्द्रापीडप्रत्यनुरागसमुद्रेणेव सन्ध्यारागेण जीवलोके आपूरिते सति। अत्र निरङ्गकेवलरूपकश्रौतोपमयोरेकाश्रयानुप्रवेशरूप सङ्कर।

(र) कुसुमेति। कुसुमायुधो मदन एवानलस्तेन दह्यमानं यत् हृदयसहस्रं विरहिजनमन समूहस्तस्य धूमैर्बाष्प इव जनितानि पतिविच्छेदादुत्पादितानि मानिनीनां नयनवारीणि अश्रूणि येन तस्मिन् तथा तरुणतमालस्येव नवीनतमालतरोरिव त्विट् प्रभा यस्य तस्मिन् तिमिरे अन्धकारे विस्तीर्य्यमाणे सति। अत्र निरङ्गकेवलरूपकजात्युत्प्रेक्षयोरङ्गाङ्गिभावेन सङ्कर स पुनस्तु ोपमया संसृज्यते। विस्तीर्य्यमाण इति कर्म्मकर्त्तरि प्रयोग।

(ल) दिगिति। गगने दिक्करिभिर्दिग्हस्तिभि कर शुण्डाभिरवकीर्णो विक्षिप्त शीकरासारो जलबिन्दुधारा यस्मिन् तस्मिन्निव श्वेतायमानस्तारागणो यत्र तादृशे सति शीकरासारतारगणयो सादृश्यादिति भाव। अत्र शीकरासारविक्षेपोत्प्रेक्षणात् क्रियोत्प्रेक्षालङ्कार।

(व) जातायामिति। किञ्च अदर्शनक्षमायां परस्परदर्शनायोग्यायाम् वेलायां समये।

হইয়া উঠিল। (ভ) কুমুদবন শ্বেতবর্ণ হইতে লাগিল দিঙ্মণ্ডল রক্তবর্ণ হইল এবং প্রদোষকাল কৃষ্ণবর্ণ ধারণ করিল। (ম) ভগবান্ সূর্য্যদেব পুনরায় দিনলক্ষ্মীর সহিত সম্মেলনের আশার ন্যায় রাগসমন্বিত কিরণজালের সহিত ধীরে ধীরে অদৃশ্য হইয়া গেলেন। (য) কাদম্বরীর মনের অনুরাগ সাগরের ন্যায় সেই সময়ে বৃদ্ধিপ্রাপ্ত সন্ধ্যারাগে জগৎসংসার পরিপূর্ণ করিল। (র) কামানলে দহ্যমান বিরহীদিগের মনের ধূমের ন্যায় এবং নূতন তমালবৃক্ষতুল্যপ্রভাসম্পন্ন অন্ধকার মানিনীগণের অশ্রুজল জন্মাইয়া বিস্তার পাইতে লাগিল। (ল) আকাশে শ্বেতবর্ণ নক্ষত্র প্রকাশ পাইলে বোধ হইতে লাগিল যেন দিগহস্তিগণ শুণ্ডদ্বারা জলবিন্দু বিক্ষিপ্ত করিতেছে (ব) এবং অন্ধকার উপস্থিত হওয়ায় পরস্পর দর্শন করিবার অযোগ্য সময় উপস্থিত হইল এমন সময়ে কাদম্বরী অট্টালিকার উপর হইতে অবতরণ

(१) रागरससागरेणेव। (२) अङ्गवाकहृदय। (३) नयनासारवारिणि। (४) आकीर्ण।

নিতম্বাশ্চ চন্দ্রাপীড (ব)। ততোঽচিরাদিব (১) গৃহীতপাদ প্রসাদ্যমান ইব কুমুদিনীভি, (য়) কলুষমুখী কুপিতা ইব প্রসাদয়ন্নাশা, (ষ) প্রবোধাশঙ্কয়েব পরিহরন্ সুপ্তা কমলিনী, (স) লাঞ্ছনচ্ছলেন নিশামিব হৃদয়েন সমুদ্বহন্, (হ) রোহিণীচরণতাড়নলগ্নমলক্তকরসমিবোদয়রাগ দধান, (ক্ষ) তিমির-নীলাম্বরা দিবমভিসারিকামিবোপসর্পন (ক) অতিবল্লভতয়া বিকিরন্নিব সৌভাগ্যম্, (খ) উদগাজ্জগদানন্দনোৎসব সুধাসূতি (গ)। উদ্ভূতে চ (২)

(য়) ততইতি। ততঃ কুমুদিনীভি গৃহীতা ধৃত পাদ কিরণশ্চরণশ্চ যস্য স প্রসাদ্যমান প্রসন্নীক্রিয়মাণ ইব সন্ সুধাসূতিশ্চন্দ্র অচিরাদিব উদগাদিতি পরেণান্বয়। অত্র লিঙ্গেন কাব্যে য ঘ কুমুদিনীষু মানিনীব্যবহারসমারোপাৎ শ্লেষগর্ভা সমাসোক্তি ক্রিয়োৎপ্রে ক্ষা চানয়োরঙ্গাঙ্গিভাবেনানুপ্রবেশরূপ সঙ্কর।

(ষ) কলুষেতি। কলুষমুখীরন্ধকারাচ্ছন্নাদ্যভাগা ক্রোধেন মলিনবদনাশ্চ কুপিতা ইব আশা দিশ প্রসাদয়ন্ কিরণৈশ্চ বলীকুর্বন্ প্রসাদয়ন্। অত্রাপি পূর্ববদলঙ্কার।

(স) প্রবোধেতি। প্রবোধাশঙ্কয়েব জাগরণাতঙ্কেনেব সুপ্তা মুদ্রিতা নিদ্রিতাশ্চ কমলিনী পদ্মিনী নায়িকান্তরাণি চ পরিহরন্ পরিত্যজন্। অত্র লিঙ্গেন কাব্যে য ঘ চন্দ্রে শঠব্যবহারসমারোপাৎ শ্লেষগর্ভা সমাসোক্তিরুৎপ্রেক্ষা চানয়োরপি পূর্ববৎ সঙ্কর।

(হ) লাঞ্ছনেতি। লাঞ্ছনচ্ছলেন কলঙ্কব্যাজেন হৃদয়েন নিশামুদ্বহন্নিব। অত্র সাপহ্নবা ক্রিয়োৎপ্রেক্ষালঙ্কার।

(ক্ষ) রোহিণীতি। রোহিণ্যা স্বভার্যায়াশ্চরণতাড়নেন লগ্নম্ অলক্তকরসমিব উদয়রাগম্ উদয়কালীন রক্তিমান দধানো ধারয়ন্। অত্র জাত্যুৎপ্রেক্ষালঙ্কার।

(ক) তিমিরেতি। অভিসারিকাং প্রাগুক্তলক্ষণা নায়িকামিব তিমিরৈর্নীলম্ অম্বরম্ আকাশ স্বাংশুকং আকাশৈকদেশ ইত্যর্থ যস্যা তাম্ অন্যত্র তু তিমিরবন্নীলম্ অম্বর যস্যাস্তাম্ দিবমাকাশম্ উপসর্পন্ অভিগচ্ছন্। অত্র পূর্ণোপমালঙ্কার।

(খ) অতীতি। অতিবল্লভতয়া লোকানামতীবপ্রিয়তয়া সৌভাগ্য তেষু প্রীতি বিকিরন্ বিক্ষিপন্নিব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার।

করিলেন চন্দ্রাপীড়ও ক্রীড়াপর্ব্বতের শৃঙ্গ হইতে নামিলেন। (১) তাহার পর অচিরকাল মধ্যেই নয়নানন্দকারী ভগবান্ চন্দ্র উদয় পাইলেন, তখন কুমুদিনীগণ যেন তাঁহার পাদ ধারণ করিয়া তাঁহাকে প্রসন্ন করিতে লাগিল, (ষ) তিনি কুপিতের ন্যায় মলিনমুখ দিঙমণ্ডলকে প্রসন্ন করিলেন (স) জাগিবার আশঙ্কায়ই যেন সুপ্ত পদ্মিনীগণকে পরিত্যাগ করিলেন (হ) কলঙ্কচ্ছলে রাত্রিকেই যেন বক্ষে ধারণ করিলেন (ক্ষ) রোহিণীদেবীর চরণপ্রহারের সময় তাহা হইতে সংলগ্ন আলতার রসের ন্যায় উদয়কালের রক্তিমা ধারণ করিলেন (ক) অভিসারিকা নায়িকার ন্যায় অন্ধকারে নীলবর্ণ একদেশবিশিষ্ট (পক্ষে অন্ধকারের ন্যায় নীলাম্বরধারিণী) আকাশের দিকে যাইতে লাগিলেন (খ) এবং লোকের অত্যন্তপ্রিয়

(১) নচিরাদিব। (২) উদিতে চ।

कुसुमायुधाधिराज्यैकातपत्रे कुमुदिनीवधूवरे विभावरीविलासदन्तपत्रे श्वेतमानौ धवलितदिशि, (घ) दन्तिदन्तादिवोत्कीर्णे भुवने, (ङ) चन्द्रापीडश्चन्द्रातप-निरन्तरतयैव कुमुदमय्या इव (१) गृहकुमुदिन्याः कल्लोल-धौत-सुधा-धवल-सोपाने तनु-तरङ्ग-तालवृन्त-वात-वाहिनि सुप्तहंसमिथुने, विरह-वाचाल-(२) चक्रवाक-युगले तीरे, (च) कुमुददलावलीभिः पर्य्यन्त-लिखित-दन्तपत्र-लतम्, (३) अवदात

(ग) उदगादिति। ईक्षणोत्सवो नयनानन्दहेतुरित्यर्थः। सुधया सूतिरुत्पत्तिर्यस्मात् स सुधासूतिश्चन्द्र उदगात्। अत्र कारणस्य सुधासूतेः कार्य्येण ईक्षणोत्सवेन सहाभेदेनाभिधानात् हेतुर्नामालङ्कारः।

(घ) उच्छ्रित इति। किञ्च कुसुमायुधस्य मदनस्य यदधिराज्यं साम्राज्यं तस्य एकातपत्रे अद्वितीयच्छत्रस्वरूपे। अत्र चन्द्रे आतपत्रत्वारोपः शाब्दः कुसुमायुधे राजत्वारोपस्त्वार्थ इत्येकदेशविवर्त्तिरूपकमलङ्कारः। कुमुदिन्येव वधूस्तस्या वरे भर्त्तरि। अत्र परम्परितरूपकम्। विभावर्य्या रात्रेर्विलासाय दन्तपत्रे गजदन्तनिर्म्मितकर्णालङ्कारस्वरूपे तस्मिन्। अत्रापि चन्द्रे दन्तपत्रत्वारोपः शाब्दः विभावर्य्या विलासस्त्रीत्वारोपस्त्वार्थ इत्येकदेशविवर्त्तिरूपकम्। धवलिता किरणैः शुभ्रीकृता दिशो येन तस्मिन्। श्वेतभानौ चन्द्रे उच्छ्रिते उपर्य्युत्थिते।

(ङ) दन्तीति। भुवने दन्तिदन्तादुत्कीर्णे तं निस्तक्ष्य निर्म्मित इव सति चन्द्रकिरणैः शुभ्रत्वादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः।

(च) चन्द्रेति। चन्द्रस्य आतपेन आलोकेन निरन्तरतया घनतया सर्व्वतो व्याप्ततयेत्यर्थः कुमुदमय्या इव विरलकुमुदाया अपि कुमुदैः पूर्णाया इव चन्द्रातपस्यैव कुमुदवद्दृश्यमानत्वादिति भावः। अत्र क्रियोत्प्रेक्षालङ्कारः। गृहकुमुदिन्या भवनसन्निहितकुमुदयुक्तसरोवरस्य तीरे इति सम्बन्धः। कल्लोलास्तस्या एव बृहत्तरङ्गाः धौतानि क्षालितानि सुधाधवलानि चूर्णलेपनेन शुभ्राणि सोपानानि यस्मिन् तत्र। तनवः क्षुद्रास्तरङ्गा एव तालवृन्तानि व्यजनानि तेषां वातं वायुं वहति दधातीति तस्मिन्। अत्र निरङ्गकेवलरूपकमलङ्कारः। सुप्तानि हंसमिथुनानि यस्मिन् तत्र। तथा विरहेण रात्रिवशात् परस्परविच्छेदेन वाचालानि विषादरवेण मुखराणि चक्रवाकानां युगलानि दम्पतयो यत्र तस्मिन् तीरे।

(छ) कुमुदेति। कुमुददलावलीभिः कैरवपत्रश्रेणीभिः पर्य्यन्तेषु प्रान्तदेशेषु लिखिता विहिता दन्तपत्रलता

বলিয়া তাহাদের প্রতি যেন প্রীতি বর্ষণ করিতে লাগিলেন (ঘ) ক্রমে কন্দর্পসাম্রাজ্যের অদ্বিতীয় ছত্র কুমুদিনীবধূর বর এবং রজনীনায়িকার বিলাসের গজদন্তাভরণ চন্দ্র সকল দিক্ ধবলবর্ণ করিয়া উপরে উঠিলেন। (ঙ) ভুবনমণ্ডল যেন গজদন্ত হইতে খোদিত করিয়া বাহির করা হইল। (চ) এমন সময়ে চন্দ্রাপীড় গৃহের নিকটবর্ত্তী কুমুদপূর্ণ সরোবরের তীরে একখানি প্রস্তরখণ্ডের উপরে শয়ন করিলেন সেই সরোবরটীর উপরে চন্দ্রের নিবিড় আলোক পড়িয়াছিল বলিয়া সেটীকে যেন কুমুদপূর্ণ বলিয়া বোধ হইতে লাগিল, বৃহৎ বৃহৎ তরঙ্গে তাহার শুভ্রবর্ণ সোপানগুলি প্রক্ষালিত হইতেছিল ক্ষুদ্রতরঙ্গরূপ তালবৃন্তের বায়ু বহিত হইতেছিল সেই তীরদেশে বহুতর হংসদম্পতি নিদ্রা করিয়াছিল এবং পরস্পর বিরহবশত চক্রবাকদম্পতিগণ রব করিতেছিল। (ছ) আর সেই প্রস্তরখণ্ডের চারিদিকে

(१) कुमुदे इव। (२) वाचालित। (३) लतादन्तुरम्।

सिन्दुवारदामोपहारम्, हरिचन्दनरसे प्रक्षालितम्, कादम्बरीपरिजनोपदिष्टम्, मुक्ताशिलापट्ट चन्द्रशीतलमधिशिश्ये (छ)। ततस्तस्य चास्यागत्याऽथयत् केयूरक —"देवी कादम्बरी देव द्रष्टमागता" इति (ज)।

अथ चन्द्रापीड़ ससम्भ्रममुत्थायागच्छन्तीम्, अल्पसखीजनपरिवृताम्, अपनीताशेषाराजचिह्नाम्, इतरामिव एकावलीमात्राभरणाम्, अच्छाच्छेन चन्दनरसेन धवलीकृततनुलताम्, एककर्णावसक्तदन्तपत्राम्, इन्दुकलाकलिकाकोमल कर्णपूरीकृत कुमुददल दधानाम्, ज्योत्स्नाशुचिनी कल्पद्रुमदुकूले बिभ्रतीम्, ततकाल रमणीयेन वेशेन साक्षादिव चन्द्रोदयदेवताम्, मदलेखया दत्तहस्तावलम्बा कादम्बरीमपश्यत् (झ)। आगत्य च सा प्रीतिपेशलता दर्शयन्ती प्राकृतेव (१)

लतावल्लम्बमानपत्रावल्यो यस्य तम्। अवदातानि शुभ्राणि सिन्दुवारकुसुमानां दामानि माल्यानि उपहारा शोभाय समन्ताद्विन्यस्तानि यस्य तम्। हरिचन्दनरस श्वेतचन्दनजल। चन्द्रवत् शीतलमिति चन्द्रशीतलम्। मुक्तावत् शिलापट्टो मुक्ताशिलापट्टस्त मुक्ताशिलापट्ट शुभ्रमेक शिलाखण्डमित्यर्थ। अधिशिश्ये आश्रित्य शयितवान्।

(ज) ततेति। अस्य चन्द्रापीड़स्य समीपे। देव भवन्तम्।

(झ) अथेति। अपनीतानि परित्यक्तानि अशेषाणि समस्तानि राजचिह्नानि तदुपयुक्तविशेषाभरणच्छत्रचामरादीनि यया ताम् अतएव इतरामपरामिव दृश्यमानाम् एकावलीमात्रम् एकयष्टीकहारमात्रमाभरण यस्यास्ताम्। अच्छाच्छेन अत्यन्तनिर्म्मलेन। एकस्मिन् कर्णे अवसक्त लग्न दन्तपत्र गजदन्तनिर्म्मितपत्राकारालङ्कारो यस्यास्ताम्। इन्दुकल व कलिका अथवा इन्दुकला च कलिका च तद्वत् कोमलम्। ज्योत्स्नावत् शुचिनी शुभ्रवर्णे कल्पद्रुमदुकूले कल्पवृक्षजातसूक्ष्मवसनयुगलम्। साक्षात् प्रत्यक्षगतां चन्द्रोदयदेवतामिव। अत्र उत्प्रेक्षालङ्कार। दत्तो हस्तावलम्ब स्वहस्तावलम्बो यया ताम्।

শ্বেতোৎপলদলসমূহদ্বারা পত্রলতা নির্ম্মা। করিয়া দিয়াছিল, শ্বেতবর্ণ নিসিন্দাফুলের মালাদ্বারা চারিদিক্ বেষ্টন করিয়া রাখিয়াছিল শ্বেতচন্দনের জলে প্রক্ষালন করিয়াছিল এবং সেই প্রস্তর খণ্ডখানি মুক্তার ন্যায় শুভ্রবর্ণ ও চন্দ্রের ন্যায় শীতল ছিল আর কাদম্বরীর পরিজনেরা তাঁহাকে তাহার উপরে শয়ন করিতে বলিয়া দিয়াছিল। (জ) চন্দ্রাপীড় সেই শিলাখণ্ডের উপরে অবস্থান করিতে লাগিলেন—এমন সময় কেয়ূরক আসিয়া তাঁহার নিকট বলিল— কাদম্বরীদেবী আপনার সহিত সাক্ষাৎ করিতে আসিয়াছেন।

(ঝ) তাহার পর চন্দ্রাপীড় তাড়াতাড়ি গাত্রোত্থান করিয়া কাদম্বরীকে আসিতে দেখিলেন, তখন কাদম্বরী অল্প কয়েকটী সখীজনে পরিবেষ্টিত হইয়া আসিতেছিলেন এবং সকল রাজচিহ্নই পরিত্যাগ করিয়াছিলেন তাহাতে তাঁহাকে অন্যের ন্যায় দেখা যাইতেছিল একছড়া একলহরী হারমাত্র অলঙ্কার ছিল, অত্যন্ত নির্ম্মল চন্দনে কোমল দেহখানি শুভ্রবর্ণ করিয়াছিল এক কর্ণে একটী দন্তপত্র সংলগ্ন ছিল অপর কর্ণে চন্দ্রকলা ও পুষ্পকলিকার ন্যায় কোমল একটী কুমুদদল ধারণ করিতেছিলেন জ্যোৎস্নার ন্যায় শুভ্রবর্ণ কল্পবৃক্ষ হইতে উৎপন্ন

(१) प्रकृते।

परिजनोचिते भूतले समुपाविशत्। चन्द्रापीडोऽपि "कुमार! अध्यास्यतां शिलातलमिव" इत्यसकृदनुबध्यमानोऽपि मदलेखया भूमिमेवाभजत (ञ)।

अथ (१) सर्वासु चासीनासु तासु मुहूर्त्तमिव स्थित्वा वक्तुमुपचक्रमे चन्द्रापीडः—"देवि! दृष्टिपातमात्रप्रीते (२) दासजने सम्भाषणादिकस्यापि प्रसादस्य नास्त्यवकाशः किमुत तावतोऽनुग्रहस्य। न खलु चिन्तयन्नपि निपुणं तमात्मनो गुणलवमवलोकयामि, यस्यायमनुरूपोऽनुग्रहातिरेकः (ट)। अतिसरला तवेयमपगताभिमानमधुरा च सुजनता, यदभिनवसेवकजनेऽप्येवमनुरुध्यते (ठ)। प्रायेण मामुपचारहार्य्यमदक्षिणं देवो मन्यते (ड)। धन्यः खलु परिजनस्ते,

(ञ) आगत्येति। प्रीतिपेशलता स्नेहस्य सौन्दर्य्यम्। प्राकृतेव साधारणस्त्रीव। अध्यास्यताम् अधिष्ठीयताम् अनुबध्यमानोऽपि अनुरुध्यमानोऽपि। भूमिमेवाभजत भूतल एवोपाविशदित्यर्थः।

(ट) अथेति। दासजने मयीति तात्पर्य्यम्। प्रसादस्य अनुग्रहस्य। एतावतः सम्भाषणायागमनपर्य्यन्तस्य। निपुणं सविशेषम्। गुणलवं गुणलेशम्।

(ठ) अतीति। तवेयं सुजनता सौजन्यम् अतिसरला कापट्यरहिता अपगतो दूरीभूत अभिमानो यस्याः सा चासौ अतएव मधुरा चेति सा। अनुरुध्यते अनुसरति प्रवर्त्तते सा सुजनतेत्यर्थः। अवज्ञास्थानेऽपि प्रयुक्तायाः सुजनताया माधुर्य्यं स्यादेवेति भावः।

(ड) प्रायेणेति। देवी भवती कादम्बरी माम् उपचारेण सम्भाषणादिबाह्यव्यवहारेण हार्य्यं वशीकर्त्तुं योग्यम् अतएव अदक्षिणमनुदारप्रकृतिमगुणज्ञमिति यावत्। अन्यथैवमुपचाराय न यतेतेति भावः। एतेनाहं दाक्षिण्यवशाद्युष्माकं गुणेन च वशीभूतोऽस्मीति व्यज्यते।

ছ খানি সূক্ষ্মবস্ত্র পরিধান করিয়াছিলেন সেই সময়ের সেই মনোহর বেশে কাদম্বরীকে সাক্ষাৎ চন্দ্রোদয়ের দেবতার ন্যায় দেখা যাইতেছিল, আর তিনি মদলেখার হস্ত ধারণ করিয়া আসিতেছিলেন। (ঞ) কাদম্বরী আসিয়া স্নেহের সৌন্দর্য্য দেখাইয়া সাধারণ স্ত্রীলোকের ন্যায় ভূতলে উপবেশন করিলেন। "রাজকুমার! আপনি প্রস্তরখণ্ডের উপরেই উপবেশন করুন" মদলেখা এরূপ বার বার অনুরোধ করিলেও চন্দ্রাপীড়ও ভূতলেই উপবেশন করিলেন।

(ট) তাহার পর তাহারা সকলেই উপবেশন করিলে চন্দ্রাপীড় বলিতে আরম্ভ করিলেন—"দেবি! কেবল দৃষ্টিপাত করিলেই যে ব্যক্তি সন্তুষ্ট হইয়া থাকে সেই দাসের প্রতি সম্ভাষণ-প্রভৃতি অনুগ্রহেরও প্রয়োজন নাই, সুতরাং এত অনুগ্রহের কথা আর কি বলিব। আমি বিশেষ চিন্তা করিয়াও নিজের সেরূপ গুণের লেশও দেখিতেছি না—যাহার উপযুক্ত মনে করিয়া আপনি এরূপ অত্যন্ত অনুগ্রহ করিয়াছেন। (ঠ) আপনার এই সৌজন্য অত্যন্ত সরল ও অভিমান নাই বলিয়া বড়ই মধুর যেহেতু নূতন সেবকের প্রতিও এইভাবে উপস্থিত হইয়াছে। (ড) সম্ভবত আপনি আমাকে অনুদারস্বভাব ও বাহিরের ব্যবহারেই বশ

(१) क्वचित् अथ इति नास्ति। (२) दृष्टिमात्रप्रीते।

यस्योपरि नियन्त्रणा स्यात् (ढ)। आज्ञास विभागकरणोचिते भृत्यजने क इवादर (ण)। परोपकारोपकरणं शरीरम्, तृण लव-लघु च जीवितमपत्रपे (१) त्वत्प्रतिपत्तिभिरुपायनीकर्त्तुमागतायास्ते (२) (त)। वयमेते शरीरमिदमेतज्जीवितमेतानीन्द्रियाणि, एतेषामन्यतरदारोपय परिग्रहेण गरीयस्त्वम्" इति (थ)।

अथैव वादिनोऽस्य वचनमाक्षिप्य मदलेखा सस्मितमवादीत्—"कुमार! भवतु, अतियन्त्रणया खिद्यते खलु सखी कादम्बरी, (३) किमर्थमेवमुच्यते सर्वमिदमन्तरेणापि वचनमनया परिगृहीतम्, किं पुनरमुनोपचारफल्गुना वचसा

(ढ) धन्य इति। नियन्त्रणा दुष्करकार्य्यभारार्पणेन यातना। तादृशनियन्त्रणाभावादहमधन्य इति भाव।

(ण) आज्ञेति। आज्ञाया सविभागकरणे सम्यग विभज्यार्पणे उचिते योग्यस्मिन् भृत्यजने क इवादर को बहुमान अपि तु कोऽपि नेत्यथ। अतएव मम सम्भाषणायागमनस्य किमपि प्रयोजन नासीदिति भाव।

(त) परेति। आगताया अत्रोपस्थितायास्ते तव समीपे त्वत्प्रतिपत्तिभिस्त्वां प्रति भक्तिभि परोपकारस्य उपकरण साधनम् इद शरीरम् तथा तृणस्य लववत् कणवत् लघु इद जीवितञ्च उपायनीकर्त्तुम् उपहारभावेन दातुम् अहमपत्रपे लज्जे शरीरस्य स्वभावत एव यस्य कस्यापि परस्योपकारसाधनत्वे न त्वयि विशेषाभावात् जीवनस्य च तृणलवलघुत्वे न तुच्छतया तद्दानेन गौरवप्रदर्शनाभावादिति भाव।

(थ) वयमिति। एते वयम् इद शरीरम् एतज्जीवितम् एतानि इन्द्रियाणि परिग्रहेण एतेषा मध्ये अन्यतरत् एकतम दत्यथ गरीयस्त्व महागौरव भवतीति भाव। वयमिति वास्मदस इति बहुवचनम्। अन्यतरदिति दर्शनादबहूनामेकतमप्रत्यायनेऽपि डतरप्रत्यय इति दुर्गमतम्।

(द) अथेति। अस्य चन्द्रापीडस्य। आक्षिप्य बाधित्वा। अतियन्त्रणया अत्यन्तस्तुतिवादबाधया। खिद्यते आत्मनि तादृग्गुणाभावेनोपहासप्रतीतेरिति भाव। इद वचनमन्तरेणापि भवतोक्त वयमेते इत्यादि वाक्य विनापि अनया कादम्बर्य्या सर्व त्वदादिक परिगृहीतमिति परिहसितम् अथ च पतित्वेन मनसा परिगृहीतमिति ध्वनितम्। अतएव उपचारे बहिर्व्य वहारे फल गुना असारेण निरथकेन अमुना वयमित्यादिना वचसा कि पुन

করার যোগ্য বলিয়া মনে করেন। (ঢ) আপনার পরিজনবর্গই ধন্য যাহাদের উপরে আপনার আজ্ঞাপ্রয়োগ হইয়া থাকে। (ণ) পৃথক্ পৃথক্ ভাবে আজ্ঞা করিবার যোগ্য ভৃত্যজনের প্রতি আবার আদর কি? (ত) এই শরীর স্বভাবতই পরের উপকারের জন্য, জীবনও তৃণবিন্দুর ন্যায় লঘু, সুতরা আপনার প্র ত ভক্তিবশত সেই শরীর ও সেই জীবন আপনাকে উপহার দিতে আমি লজ্জিত হইতেছি। (থ) এই আমি এই শরীর এই জীবন এব এই ইন্দ্রিয় সকল—ইহার মধ্যে যে কোন একটীকে আপনি গ্রহণ করিয়া তাহাকে অত্যন্ত গৌরবান্বিত করুন।"

(দ) চন্দ্রাপীড় এইরূপ বলিতেছিলেন, তখন তাঁহার বাক্যে বাধা দিয়া মদলেখা ঈষৎ হাস্য করিয়া বলিল—"রাজপুত্র! হউক, আপনার অত্যন্ত স্তুতিবাদের যন্ত্রণায় সখী কাদম্বরী গ্লানি ভোগ করিতেছেন, আপনি কেনই বা এইরূপ বলিতেছেন আপনার এই সকল বাক্য

(१) अत्र पे। (२) तत्प्रतिपत्तिभिरुपायनीकर्त्तुमागतास्ते। (३) सखीयं कादम्बरी।

सन्देहदोलामारोप्यते" इति (द)। स्थित्वा च कञ्चित् कालं कृतप्रस्तावा "कथं राजा तारापीड, कथं देवी विलासवती कथमार्य्य शुकनास, कीदृशी चोज्जयिनी, कियत्यध्वनि सा च, कीदृग भारतं वर्षम्, रमणीयो वा मर्त्त्यलोक" इत्यशेष पप्रच्छ (ध)। एवंविधाभिश्चान्याभि कथाभि सुचिरं स्थित्वोत्थाय कादम्बरी केयूरकं चन्द्रापीडसमीपशायिनं समादिश्य परिजनञ्च, शयनसौधशिखरमारुरोह (न)। तत्र च सितदुकूलवितानतलास्तीर्णं शयनीयमलञ्चकार। चन्द्रापीडोऽपि तस्मिन्नेव शिलातले निरभिमानतामभिरूपतामतिगम्भीरताञ्च कादम्बर्य्याः, निष्कारण-वत्सलताञ्च महाश्वेतायाः सुजनताञ्च मदलेखायाः, महानुभावताञ्च परिजनस्य, अतिसमृद्धिञ्च गन्धर्वराजलोकस्य, रम्यताञ्च किम्पुरुषदेशस्य मनसा भावयन् केयूरकेण संवाह्यमानचरण क्षणादिव क्षणदा क्षपितवान (प)।

सन्देहदोलामारोप्यते कादम्बरी संशयाकुला क्रियते। निहि इविषये पुनरिव न्येन संशयोदयस्य स्वाभाविकत्वा दिति भाव।

(ध) स्थित्वेति। कृतप्रस्तावा जिज्ञासायां गृहीतावसरा मदलेखा। कथं कीदृश इत्यर्थ। सा उज्जयिनी कियत्यध्वनि इत कियद्दूरे इत्यर्थ।

(न) एवमिति। चन्द्रापीड़स्य समीपशायिनं समीपे शयितुमित्यर्थ। परिजनञ्च सेवितु समादिश्येत्यन्वय। शयनसौधस्य शिखरम् उपरितलम्।

(प) तत्रेति। सित शुभ्र यद्दुकूलस्य वितान क्षौमवसनस्य चन्द्रातपस्तस्य तले आस्तीर्ण पातित

ব্যতীতও ইনি সমস্তই গ্রহণ করিয়াছেন অতএব বাহিরের ব্যবহারের অনর্থক বাক্যে কেন আবার ইঁহাকে সন্দেহদোলায় আরোহণ করাইতেছেন। (ধ) তাহার পর কিছুকাল থাকিয়া জিজ্ঞাসা করিবার প্রস্তাব করিয়া মদলেখা এই সমস্ত জিজ্ঞাসা করিল—"মহারাজ তারাপীড় কেমন মহারাণী বিলাসবতীই বা কেমন মাননীয় শুকনাস কিরূপ উজ্জয়িনী কি রকম এখান হইতে উজ্জয়িনী কত দূরে ভারতবর্ষটী কেমন এবং মর্ত্ত্যলোকই বা সুন্দর কি না।" (ন) কাদম্বরী এই রকম ও অন্যান্য অনেক রকম কথাবার্ত্তায় বহু সময় সেখানে থাকিয়া উঠিয়া কেয়ূরককে চন্দ্রাপীড়ের নিকটে শয়ন করিতে এবং পরিজনদিগকে তাঁহার পরিচর্য্যা করিতে আদেশ করিয়া শয়নের অট্টালিকার উপরে যাইয়া আরোহণ করিলেন। (প) সেখানে শুভ্রবর্ণ পট্টবসননির্ম্মিত চন্দ্রাতপের নীচে একখানি শয্যা পাতিত ছিল, কাদম্বরী শয়ন করিয়া, সেখানিকে অলঙ্কৃত করিলেন। চন্দ্রাপীড়ও কাদম্বরীর নিরহঙ্কারতা, সৌন্দর্য্য ও গাম্ভীর্য্য, মহাশ্বেতার অকারণবাৎসল্য মদলেখার সৌজন্য, পরিজনবর্গের উদার স্বভাব গন্ধর্ব্বরাজের অত্যন্ত সমৃদ্ধি এবং কিন্নরদেশের রমণীয়তা ভাবিতে লাগিলেন, এদিকে কেয়ূরক তাঁহার চরণযুগল সংবাহন করিতে লাগিল—এই অবস্থায় চন্দ্রাপীড় সেই প্রস্তরখণ্ডের উপরে থাকিয়াই, ক্ষণকালের ন্যায় সেই রাত্রি অতিবাহিত করিলেন।

অথ ক্রমেণ কাদম্বরীদর্শন-প্রজাগরখিন্ন স্বপ্ন মিব তাল তমাল তালী কদলী কন্দলিনী প্রবিরল-কল্লোলানিল শীতলা বেলাবনরাজিমবততার তারাপতি (ফ)। অভ্যর্ণবিরহবিধুরস্য চ কামিনীজনস্য নিশ্বসিতৈরিব (১) উষ্ণৈর্ম্লানিমনীয়ত চন্দ্রিকা (ব)। চন্দ্রাপীডবিলোকনারূঢমদনেব কুমুদদলোদরনীতনিশা পঙ্কজেষু নিপপাত লক্ষ্মী (ভ)। অপদাপগমে চ স্মৃত্বা কামিনীকর্ণোৎপল-প্রহারাণাম্ (২) উৎকণ্ঠিতেষ্বিব শ্যামতা ব্রজৎসু পাণ্ডুতনুষু বাসগৃহপ্রদীপেষু, (ম) অনবরত-শর-ক্ষেপ খিন্নানঙ্গ-নিশ্বাস (৩) বিভ্রমেষু বহৎসু তরুলতা (৪) কুসুমপরিমলেষু

শয়নীয় শয্যাম্ অলঙ্কার শয়নেনেতি শব। অভিরূপতা সৌন্দর্য্যম্। অতিগম্ভীরতাম্ অত্যন্তদুর্বোধস্বভাবতাম্। মহানুভাবতাম্ উদারস্বভাবতাম্। ক্ষপাং রাত্রিম্। অপিতবান্ অতিবাহিতবান্।

(ফ) অথেতি। কাদম্বর্য্যা দর্শনেন য প্রজাগর কামোৎকণ্ঠয়া জাগরণ তেন খিন্ন ক্লান্ত তারাপতিশ্চন্দ্র স্বপ্নম্ নিদ্রাতুমিব তালতমালতালীকদলীনাং কন্দল সমূহ অস্যা অস্তীতি তাম্ প্রবিরলৈরল্পৈ কল্লোলানিলৈ সাগরস্য তরঙ্গবাতৈ শীতলাম্ বেলাবনরাজি তীরস্থবনশ্রেণীম্ অবততার অস্তোন্মুখো বভূবেত্যর্থ। অন্যোঽপি জাগরণক্লান্তো নিদ্রাতু নিভৃতশীতলস্থানমবলম্বতে। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার।

(ব) অভ্যর্ণেতি। চন্দ্রিকা জ্যোৎস্না অভ্যর্ণে ন দিনোপস্থিতৈর্নিকটবর্ত্তিনা বিরহেণ প্রিয়বিচ্ছেদেন বিধুরস্য বিহ্বলস্য কামিনীজনস্য উষ্ণৈর্নিশ্বসিতৈর্ম্লানিমনীয়তেব। উষ্ণবায়ুনা কোমলপল্লববদিতি ভাব। দিনাগমাৎ জ্যোৎস্নায়া উজ্জ্বলতা বিলুপ্তেত্যর্থ। ক্রিয়োৎপ্রেক্ষা।

(ভ) চন্দ্রেতি। চন্দ্রাপীডস্য বিলোকনেন আরূঢ উপস্থিতো মদনো যস্যাং সা তাদৃশীব লক্ষ্মী শোভা কাপি নায়িকা চ কুমুদদলানাম্ উদরেষু অভ্যন্তরেষু নীতা অতিবাহিতা নিশা যয়া সা তাদৃশী সতী পঙ্কজেষু পদ্মেষু নিপপাত অধিতস্থৌ। অন্যাপি কামোন্মত্তা শৈত্যসেবনায় কুমুদেষু ক্বচিৎ পদ্মেষু চ নিপততি। রাত্রৌ কুমুদানাং বিকাসাত্তেষু শোভাসীৎ দিনাগমে তু মুদ্রিততয়া তানি বিহায় বিকসৎসু পঙ্কজেষু গতেতি ভাব। ক্রিয়োৎপ্রেক্ষা।

(ম) অপদেতি। কিঞ্চ রিরংসুনা বল্লভেন সমাক্রম্যমাণা বসনে কা সখী লজ্জয়া কর্ণোৎপলপ্রহারৈঃ প্রদীপা নির্ব্বাপয়ন্তীতি প্রসিদ্ধি। সুতরাং অপদাপগমে রাত্রিশেষে পাণ্ডু তনুষু ক্রমেণ দিবালোকপ্রকাশাদিরূপাস্বেতি ভাব। বাসগৃহপ্রদীপেষু কামিনীনাং কর্ণোৎপলৈর্য প্রহারাস্তান্ স্মৃত্বা তান্ বিচিন্ত্যেত্যর্থ। স্মৃত্যর্থ কর্ম্মণী তি কর্ম্মণি ষষ্ঠী। উৎকণ্ঠিতেষ্বিব পুনস্তদর্থ সমুৎসুকেষ্বিব শ্যামতা কৌশল্য ব্রজৎসু গতেষু। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার।

(ফ) তাহার পর চন্দ্র কাদম্বরীর দর্শনে উৎকণ্ঠাবশত জাগরণ করায় ক্লান্ত হইয়া নিদ্রা যাইবার জন্যই যেন, তাল তমাল তাড়িয়াৎ ও কদলীবৃক্ষে পরিপূর্ণ এবং অল্প অল্প তরঙ্গবায়ুতে শীতল সমুদ্রতীরস্থ বনশ্রেণীর ভিতরে ক্রমে ক্রমে নামিতে লাগিলেন। (ব) আসন্ন বিরহে বিহ্বল কামিনীগণের উষ্ণ নিশ্বাসেই যেন জ্যোৎস্নাকে মলিন করিল। (ভ) চন্দ্রাপীড়কে দর্শন করায় কামসন্তপ্ত হইয়াই যেন শোভা কুমুদপত্রের মধ্যে রাত্রি অতিবাহিত করিয়া, সেই সময়ে পদ্মের উপরে পতিত হইতে লাগিল। (ম) রাত্রিশেষে বাসগৃহের প্রদীপগুলি, কামিনীগণের কর্ণোৎপলের প্রহার স্মরণ করিয়া উৎকণ্ঠিত হইয়াই যেন পাণ্ডুশরীরে ক্ষীণ হইতে লাগিল। (য) রাত্রিতে কামুকগণের প্রতি অবিশ্রান্ত বাণ বর্ষণ করায় পরিশ্রান্ত কামদেবের

(১) নিশ্বসিতৈরিব। (২) প্রহারান্। (৩) নিশ্বাস। (৪) লতা।

प्रभातमातरिश्वसु, (य) मन्दरगिरिलतागृहगमनानि च (१) भियेव भजन्तीष्वरुणो दयोपप्लवविनाशु तारकासु, (र) क्रमेण च समुद्गते चक्रवाक (२) हृदय निवास-लग्नानुरागमिवालोहित (३) मण्डलमुद्वहति सवितरि, (ल) चन्द्रापीड़ शिलातलादुत्थाय प्रक्षालितमुखकमल कृतसन्ध्यानमस्कृतिर्गृहीततांबूल (४) "केयूरक! विलोकय देवी कादम्बरी प्रबुद्धा न वा, क्व वा तिष्ठति" इत्यवोचत् (व)।

गतप्रतिनिवृत्तेन च तेन "मन्दरप्रासादस्याधस्तादङ्गनसौधवेदिकाया महाश्वेतया सहावतिष्ठते" इत्यावेदिते गन्धर्वराजतनयामालोकयितुमाजगाम (श)।

(य) अनेति। अनवरतशरक्षेपेण रात्रौ कामुकान् प्रति अजस्रबाणवर्षेण खिन्नस्य परिश्रान्तस्य अनङ्गस्य मदनस्य ये निश्वासास्तेषां विभ्रमा इव विभ्रमा विलासा येषां तेषु तरुलताकुसुमानां परिमला विमर्द्दगन्धा येषु तेषु प्रभातमातरिश्वसु प्रत्यूषवायुषु वहत्सु सत्सु। अत्र लुप्तोपमालङ्कार।

(र) मन्दरेति। किञ्च अरुणोदयेन उपप्लवस्तेजोविनाशादिविपदस्तासामस्तीति तासु तारकासु नक्षत्रेषु भियेव सूर्य्योदयभयेनेव मन्दरगिरिलतागृहेषु गमनानि भजन्तीषु कुर्व्वतीषु सतीषु। अत्र हेतूत्प्रेक्षालङ्कार। मन्दरस्य प्राच्यां स्थितत्वान्नक्षत्राणाञ्च प्रायेण तस्यामेव स्तगमनादियमुक्तिरिति बोध्यम्।

(ल) क्रमेणेति। किञ्च चक्रवाकानां रात्रिविरहिणां चक्रवाकदम्पतीनां हृदये निवासेन स्वोदये तेषां पुन संयोगस्य भावित्वेन रात्रौ सततमेव तैः स्वस्य भावितत्वादिति भाव लग्नस्तेषां हृदयादिव संसक्त अनुराग सूर्य्यं प्रति स्नेह एवानुरागो लौहित्य यत्र तदिव आलोहितम् आरक्तवर्ण मण्डलम् उद्वहति धारयति सवितरि सूर्य्ये क्रमेण समुद्गते सति। अत्र स्नेहलौहित्ययोर्भेदेऽपि श्लेषेणाभेदाध्यवसायादतिशयोक्ति क्रियोत्प्रेक्षा चानयो रैकाश्रयानुप्रवेशरूप सङ्कर।

(व) चन्द्रेति। कृते सन्ध्यानमस्कृती सन्ध्यावन्दनाभीष्टदेवतानमस्कारौ येन स। प्रबुद्धा जागरिता।

(श) गतेति। आदौ गत अनन्तर प्रतिनिवृत्त इति तेन तथोक्तेन तेन केयूरकेण। मन्दरनामक प्रासादो मन्दरप्रासादस्तस्य अङ्गने चत्वरे या सौधवेदिका सुधाशुभ्रेण लिप्तबद्धभूमिस्तस्याम्।

নিশ্বাসবায়ুর ন্যায় বিলাসসম্পন্ন এবং তরুলতাজাত পুষ্পের সৌরভবাহী প্রভাত বায়ু বহিতে লাগিল। (র) অরুণোদয়ে বিপন্ন নক্ষত্রগণ ভয়বশতই যেন মন্দরপর্ব্বতের লতাগৃহে প্রবেশ করিতে লাগিল (ল) এবং চক্রবাকদম্পতিগণের হৃদয়ে নিবাসবশত তাহা হইতে রাগ সংলগ্ন হওয়াই যেন আরক্তবর্ণ মণ্ডল ধারণ করিয়া সূর্য্যদেব, ক্রমে উদয় পাইলেন। (ব) এমন সময় চন্দ্রাপীড় সেই শিলার উপর হইতে উঠিয়া মুখকমল প্রক্ষালন, সন্ধ্যাবন্দন, ইষ্টদেবতা নমস্কার ও তাম্বূল চর্ব্বণ করিয়া বলিলেন—"কেয়ূরক! দেখ দেখি, কাদম্বরীদেবী জাগিয়াছেন কি না এবং কোথায়ই বা আছেন।"

(শ) কেয়ূরক যাইয়া পুনরায় ফিরিয়া আসিয়া জানাইল যে—"দেব! তিনি মন্দর-দালানের নীচে উঠানের রোয়াকের উপরে মহাশ্বেতার সহিত অবস্থান করিতেছেন।"

(१) गहनानि च। (२) समुद्गतचक्रवाक।
(३) लोहित। (४) आचम्यैवासौ गृहीततांबूल।

ददर्श च धवलभस्मकृतललाटिकाभि (१) अक्षमालिका-(२) परिवर्त्तनप्रचल-करतलाभि पाशुपतव्रतचारिणीभिर्धातुरागारुणाम्बराभिश्च परिव्राजिकाभि, (घ) परिणत-तालफल-वल्कल लोहित वस्त्राभिश्च रक्तपटव्रतवाहिनीभि सित वसन निविड़ निबद्ध स्तन परिकराभिश्च श्वेतपटव्यजनाभि ( ) जटाजिन मौञ्जी-वल्कलाषाढधारिणीभिर्वर्णि चिह्नाभिस्तापसीभि, साक्षादिव मन्त्रदेवताभि पठन्तीभिर्भगवतस्त्र्यम्बकस्याम्बिकाय कार्त्तिकेयस्य विष्टरश्रवस (४) कृष्णस्य(५) आर्य्यविलोकितेश्वरस्यार्हतो विरिञ्चस्य (६) पुण्या स्तुतीरुपास्यमानाम, (ङ) अन्त

(घ) ददर्शेति। चन्द्रापीड़ो महाश्वेतां कादम्बरीञ्च ददर्श चेत्यन्वय। प्रथम महाश्वेतां विशेषयन्नाह धवलेति। धवलभस्मभि कृता ललाटिका ललाटे क्षुद्रतिलकविशेषा याभिस्ताभि। अक्षमालिकानां जपमालानां परिवर्त्तने प्रचलानि चलितानि करतलानि यासां ताभि। पाशुपतव्रतचारिणीभि शैवव्रतानुष्ठायिनीभि तथा धातु रागेण गैरिकरञ्जनेन अरुणानि रक्तवर्णानि अम्बराणि वसनानि यासां ताभिश्च परिव्राजिकाभि सन्न्यासिनीभि उपास्यमानामिति परेणान्वय।

(ङ) परीति। किञ्च परिणत पक्व यत्तालफल तस्य वल्कलवत् लोहित वस्त्र यासां ताभि। रक्तपट शाक्यभिक्षुविशेषस्तस्य व्रत नियम वहन्ति धारयन्तीति ताभि। सितवसनै शुभ्रवस्त्रै निविड़ दृढ निबद्धा स्तन परिकरा स्तनमण्डलानि याभिस्ताभि। श्वेतपट एव व्यजन यासां ताभि। जटाम् अजिन कृष्णसारचर्म्म मौञ्जीं मेखलाम् वल्कलम् आषाढ दण्डञ्च धारयन्तीति ताभि। वर्णिनो ब्रह्मचारिणश्चिह्न लक्षण यासु ताभि। साक्षान्मन्त्रदेवताभिरिव स्थिताभि। त्र्यम्बकस्य शिवस्य अम्बिकाया दुर्गाया कार्त्तिकेयस्य विष्टरश्रवसो नारायणस्य कृष्णस्य वासुदेवस्य आर्य्यविलोकितेश्वरस्य बौद्धस्य अर्हतस्तीर्थकरस्य विरिञ्चस्य ब्रह्मणश्च पुण्या पवित्रा स्तुती स्तवान् पठन्तीभिस्तापसीभिश्च उपास्यमानां सेव्यमानाम्। अत्र साक्षान्मन्त्रदेवताभिरिवेति जात्युत्प्रेक्षालङ्कार।

তাহার পর চন্দ্রাপীড় কাদম্বরীর সহিত সাক্ষাৎ করিবার জন্য সেখানে আসিলেন। (ঘ) আসিয়া মহাশ্বেতা ও কাদম্বরীকে দেখিতে পাইলেন, কতকগুলি পরিব্রাজিকা মহাশ্বেতার সন্তোষবিধান করিতেছিল, তাহারা শুভ্রবর্ণ ভস্মদ্বারা ললাটে তিলক করিয়াছিল জপের মালা ফিরাইতে থাকায় তাহাদের করতল চলিতেছিল, তাহারা শৈবব্রত আচরণ করিতেছিল এবং তাহাদের পরিধানে গৈরিকরাগে রঞ্জিত রক্তবর্ণ বস্ত্র ছিল। (ঙ) কতকগুলি তপস্বিনীও মহাশ্বেতার সেবা করিতেছিল, তাহারা পক্বতালফলের বল্কলের ন্যায় রক্তবর্ণ বস্ত্র পরিধান করিয়াছিল শাক্যভিক্ষুর ব্রত আচরণ করিতেছিল, শুভ্রবর্ণ বস্ত্রদ্বারা দৃঢ়ভাবে স্তনমণ্ডল বন্ধন করিয়াছিল শুভ্রবর্ণ বসনের ব্যজন ধারণ করিতেছিল, জটা কৃষ্ণসারের চর্ম্ম মুঞ্জমেখলা বল্কল ও দণ্ড ধারণ করিতেছিল এবং তাহাদের সমস্তই ব্রহ্মচারীর লক্ষণ ছিল, আর তাহাদের মধ্যে কেহ ভগবান্ মহাদেবের কেহ দুর্গার, কেহ কার্ত্তিকেয়ের, কেহ নারায়ণের কেহ কৃষ্ণের কেহ বৌদ্ধের, কেহ তীর্থকরের (গুরুবিশেষের) এবং কেহ ব্রহ্মার স্তব পাঠ করিতেছিল এবং

(१) धवलभस्मललाटिकाभि। (२) अक्षमाला। (३) व्यजनाभि।
(४) विश्रवस। (५) अनु नस्य जिनस्य। (६) वंश्यदैवस्य नानानुजस्य विरिञ्चस्य।

शलाकेन, (ष) प्रत्यह कटुकालाबु-स्वेद-प्रारब्ध दन्तुरताप्रतीकारेण, (स) कथञ्चि दस्थान-दत्तेष्टका प्रहारतया शुष्कैक भुजोपशान्त-मर्द्दन-व्यसनेन, (ह) उपर्य्युपर्य्य-विश्रान्त-(१) कटुकवर्त्ति प्रयोग वर्द्धिततिमिरेण, (क्ष) अश्मभेद सङ्गृहीत वराह दंष्ट्रेण, (क) इङ्गुदीकोष-कृतौषधाञ्जनसंग्रहेण, (ख) सूची स्यूत शिरा-सङ्कोचित-वाम कराङ्गुलिना, (ग) कौशेयक कोषावरण-(२) अति प्रयत्न

---

कज्जलार्पणे न तु कुवादिदत्तसिद्धाञ्जनदाने इत्यर्थः आ रेण यत्नेन श्लक्ष्णीकृता दारुशलाका दारुनिर्म्मिता कज्जलदानशलाका येन तेन कुवादिदत्तसिद्धाञ्जनदोषेण वा अश्लक्ष्णमुखशलाकादोषेण वा लोचनमेकं स्फाटितमित्युभयथा प्याशङ्काभावादिति भावः ।

(स) प्रत्यहमिति । कटुकालाबु कटुतुम्बी तस्याः स्वेदेन प्रारब्धो दन्तुरताया उन्नतदन्ततायाः प्रतीकारश्चिकित्सा येन तेन । तादृशस्वेदेन दन्तपातावश्यम्भावात् वधिरताप्रतीतिः ।

(ह) कथञ्चिदिति । कथञ्चित् केनापि प्रकारेण अस्थाने अविहितस्थाने दत्तः इष्टकाप्रहारो यस्य तस्य भावस्तया हेतुना शुष्के शुष्कीभूते एकस्मिन् भुजे उपशान्तं प्रयोजनाभावान्निवृत्तं मर्द्दनव्यसनं वातविनाशकतैलमर्द्दनाग्रहो यस्य तेन । आमवातजर्जरीकृतदेहस्य तद्वातविनाशाय तैलविशेषमर्द्दनानन्तरं स्थानविशेषे कारणाश्रितं इष्टकाप्रहारश्चिकित्साशास्त्रनिर्द्दिष्टः तस्मिन्नस्थाने कृते कश्चिद्भुजः शुष्कतामापद्यते सा च शुष्कतास्य जाता तथा चासौ तस्मिन् भुजे वातो विनष्ट इति मत्वा तैलमर्द्दनाग्रहं परिहृतवानिति सरलार्थः ।

(क्ष) उपरीति । पर्य्युपरि अधिकाधिकम् अविश्रान्तञ्च यथा स्यात्तथा यः कटुकवर्त्तिप्रयोगः कटुपदार्थनिर्म्मितनेत्ररोगनाशकवर्त्तिकादानं तेन वर्द्धितं तिमिरं नेत्ररोगविशेषो यस्य तेन ।

(क) अश्मेति । अश्मभेदाय पाषाणभञ्जनाय सङ्गृहीता वराहदंष्ट्रा येन तेन ।

(ख) इङ्गुदीति । इङ्गुदीकोषे इङ्गुदीफलकोषे कृतः औषधाञ्जनस्य नेत्ररोगौषधीभूतकज्जलस्य संग्रहो येन तेन ।

(ग) सूचीति । सूच्या स्यूताभिरित्यन्वयः सूत्रेण ग्रथिताभिः शिराभिः सङ्कोचिता दृढाकर्षणेन खर्व्वीकृता वामकराङ्गुलयो यस्य तेन ।

(घ) कौशेयकेति । कौशेयककोषेण कृमिसूत्रकोषेण यदावरणं तेन या अति सयत्नेन प्रथित अन स्वरणाङ्गुष्ठौ यस्य तेन । कुष्ठादिरोग वारणाय कौशेयककोषेणाङ्गुष्ठावरणम् ।

দারুশলাকাটীকে পালিস করিয়াছিল। (স) প্রতিদিন তিতলাউর স্বেদ দিয়া উচু দাঁত গুলির চিকিৎসা আরম্ভ করিয়াছিল। (হ) কোন প্রকারে অস্থানে ইষ্টক প্রহার করায় একখানা হাত শুকাইয়া গিয়াছিল, সুতরাং তাহাতে তাহার তেল মর্দ্দন করিবার আগ্রহ নিবৃত্তি পাইয়াছিল। (ক্ষ) সর্ব্বদা বেশী বেশী করিয়া কটু বর্ত্তি প্রয়োগ করায় নেত্ররোগ বৃদ্ধি পাইয়াছিল। (ক) পাথর ভাঙ্গিবার জন্য শূয়রের দাঁত সংগ্রহ করিয়াছিল। (খ) ইঙ্গুদীফলের কোষে নেত্ররোগের ঔষধ কজ্জল সংগ্রহ করিয়াছিল। (গ) সূচ দিয়া শিরাগুলিকে সেলাই করায় বামহাতের আঙ্গুলগুলি সঙ্কুচিত হইয়াছিল। (ঘ) কৃমির চাক দিয়া

---

(१) उपर्य्युपर्य्यविश्रान्त । (२) कौशेयककोषावरण ।

চরণাঙ্গুষ্ঠকেন, (ঘ) অসম্যক্কৃত রসায়নানীতাকালজ্বরেণ, (ঙ) জরাং গতেনাপি দক্ষিণাপথাধিরাজ্যবরপ্রার্থনা কদর্থিত দুর্গেণ, (চ) দুঃশিক্ষিত-শ্রমণাদিষ্ট-(১) তিলকাবদ্ধবিভবপ্রত্যাশেন (ছ) হরিত পত্র রসাঙ্গার মসী-(২) মলিন-শঙ্খক বাহিনা, (জ) পট্টিকা লিখিত দুর্গাস্তোত্রেণ, (ঝ) ধূম রক্তালক্তকাক্ষর-তালপত্র কুহক তন্ত্র মন্ত্র পুস্তিকা-সংগ্রাহিণা, (ঞ) জীর্ণ পাশুপতোপদেশ-(৩) লিখিত-মহাকালমতেন, (ট) আবির্ভূত নিধি বাদ ব্যাধিনা, (ঠ) সঞ্জাত ধাতুবাদ-

(ঙ) অসম্যগিতি। অসম্যক্কৃতেন অযথাবিধিহিতেন রসায়নেন জরাব্যাধিনিধ্বংসিভেষজসেবনেন আনীত অকালজ্বরো যেন তেন। যজ্জরাব্যাধিবিধ্বংসি ভেষজং তদ্রসায়নমিতি চরক।

(চ) জরামিতি। জরাং গতেনাপি নিতান্তবৃদ্ধেনাপি সতা দক্ষিণাপথস্য দাক্ষিণাত্যদেশস্য যদধিরাজ্যং তস্য বরপ্রার্থনয়া কদর্থিতা বিরক্তীকৃতা দুর্গা চণ্ডিকা যেন তেন।

(ছ) দুরিতি। দুঃশিক্ষিতেন কুশিক্ষাপ্রাপ্তেন শ্রমণেন কেনচিৎ সন্ন্যাসিবিশেষেণ আদিষ্টে তিলকে অবদ্ধা কৃতা বিভবপ্রত্যাশা ধনসম্পদাকাঙ্ক্ষা যেন তেন।

(জ) হরিতেতি। হরিতপত্ররসেন হরিদ্বর্ণদলনির্যাসেন যুক্তা যা অঙ্গারমসী তয়া মলিনং শঙ্খকং বহতীতি তেন শঙ্খকময়মসীপাত্রধারিণেত্যর্থঃ।

(ঝ) পট্টিকেতি। পট্টিকায়াং কাষ্ঠফলকে লিখিতং দুর্গাস্তোত্রং যেন তেন।

(ঞ) ধূমেতি। ধূমেন রক্তানি রঞ্জিতানি অলক্তকাক্ষরাণি অলক্তকলিখিতবর্ণা যেষু তৈস্তাদৃশৈস্তালপত্রৈঃ কুহকায় ইন্দ্রজালায় তন্ত্রমন্ত্রাত্মিকা পুস্তিকা তাং সংগৃহ্ণাতীতি তেন।

(ট) জীর্ণেতি। জীর্ণো বৃদ্ধো যঃ পাশুপতঃ শৈবস্তস্য উপদেশেন লিখিতং মহাকালমতং যেন তেন।

(ঠ) আবিরিতি। আবির্ভূতো নিধিবাদঃ অনেনানুষ্ঠানেন নিধির্লভ্যেত ইতি ধনমাত্রবাদ এব ব্যাধির্যস্য তেন।

আবরণ করায় তাহার ঘসাতে পায়ের বুড়ে আঙ্গুল ক্ষত বিক্ষত হইয়াছিল। (ঙ) অসংগত ভাবে রসায়ন সেবন করায় অকালে জ্বর আনয়ন করিয়াছিল। (চ) প্রাচীন হইলেও দাক্ষিণাত্যদেশের রাজত্বের বর প্রার্থনা করায় দুর্গাদেবীকে বিরক্ত করিতেছিল। (ছ) কুশিক্ষায় শিক্ষিত কোন সন্ন্যাসীর আদেশে তিলক ধারণ করিয়া তাহাতেই ধনসম্পত্তির প্রত্যাশা করিতেছিল। (জ) হরিদ্বর্ণ পাতার রস ও অঙ্গারের কালী এই উভয়ে মলিনবর্ণ একটা ঝিনুক লইয়া চলিত। (ঝ) একখানা কাষ্ঠফলকে দুর্গার স্তব লিখিয়া রাখিয়াছিল। (ঞ) ইন্দ্রজালের জন্য একখানা তান্ত্রিকমন্ত্রের পুস্তক সংগ্রহ করিয়াছিল, তাহার তালপাতাগুলিতে আল্তার রস দিয়া অক্ষর লেখা ছিল তাহা আবার ধূমে রঞ্জিত করিয়াছিল। কোন প্রাচীন শৈবের উপদেশে মহাকালের মত লিখিয়া রাখিয়াছিল। (ঠ) "এই অনুষ্ঠান করিলে নিধি (ধনের মাঠী) লাভ করা যায়" এই জাতীয় প্রবাদরূপ ব্যাধি তাহার হৃদয়ে আবির্ভূত হইয়াছিল। (ড) "এই কার্য্য করিলে লোহা সোণা হয় এই প্রবাদমূলক তাহার

(১) শ্রমণাদিষ্ট। (২) মষী। (৩) জীর্ণ মহাপাশুপতোপদেশ।

वायुना, (ड) लग्नासुरविवर-प्रवेश-पिशाचेन, (ढ) प्रवृत्त यक्ष कन्यका कामित्व मनोरथ व्यामोहेन, (ण) वर्द्धितान्तर्धान मन्त्रसाधनसंग्रहेण, (१)(त) श्रीपर्वताश्चर्य्य वार्त्तासहस्राभिज्ञेन, (थ) असकृदभिमन्त्रित सिद्धार्थक प्रहति प्रधावितै (२) पिशाचगृहीतकै करतल ताडन चिपिटीकृत (३) श्रवणपुटेन, (द) अवि-मुक्त (४) शैवाभिमानेन (ध) दुर्गृहीतालावुवीणा वादनोद्वेजित-पथिक-परि-हृतेन, (न) दिवसमेव मशककणितानुकारि किमपि कम्पितोत्तमाङ्ग गायता,

(ड) सञ्जातेति। सञ्जातो धातुवाद अनेनानुष्ठानेन लोह स्वर्ण भवति इति धातुविषयकप्रवाद एव वायुर्वायुरोगो यस्य तेन।

(ढ) लग्नेति। लग्न असुरविवरे प्रवेश प्रवेशाग्रह एव पिशाचो यस्मिन् तेन।

(ण) प्रवृत्तेति। प्रवृत्तो जातो यक्षकन्यासु कामित्वमनोरथेन सम्भोगाभिलाषेण व्यामोहो विशेषेण मतिभ्रमो यस्य तेन।

(त) वर्द्धितेति। वर्द्धितो वृद्धिं प्रापित अन्तर्धानमन्त्रसाधनाय सग्रह आग्रहो येन तेन।

(थ) श्रीति। श्रीपर्वते यदाश्चर्य्यवार्त्तासहस्रम् अद्भुतकि वदन्तीसमूहस्तस्याभिज्ञेन।

पुरा किल कस्मिंश्चित् पर्वते सरस्वत्या अपि सौभाग्यमभिलषन्ती लक्ष्मीर्भृश तपस्यन्ती स्वकीयस्तन छित्त्वा अग्नौ जुहाव तत प्रभृति पर्वतोऽसौ श्रीपर्वत इति प्रथितोऽभूदिति पौराणिकप्रवाद।

( ) असकृदिति। असकृदभिमन्त्रितानां सिद्धार्थकानां सर्षपाणां प्रहत्या भूतापसारणार्थं तद्गात्रेषु वार वार प्रक्षेपेण प्रधावितै क्रोधाद्द्रुतमागतै पिशाचगृहीतकैर्भूताविष्टजनै करतलताडनेन चिपिटीकृत चिपीटकवत् प्रसारितीकृत श्रवणपुट कर्णपुट यस्य तेन।

(ध) अवीति। अविमुक्त अपरित्यक्त शैवाभिमान शैवोऽहमित्यहङ्कारो येन तेन।

(न) दुर्गृहीतेति। दुर्गृहीता अयथाविधिधृता या अलावुवीणा तुम्बीनिर्म्मितवीणायन्त्र तस्य वादनेन उद्वेजित विरक्तीकृतै पथिकै परिहृत परित्यक्तस्तेन।

বায়ুরোগ জন্মিয়াছিল। (ঢ) অসুরের হ্রদে প্রবেশ করিবার আগ্রহরূপ পিশাচ তাহার পিছনে লাগিয়াছিল। (ণ) যক্ষকন্যাগণের সহিত সম্ভোগ করিবার অভিলাষ হওয়ার তাহার মতিভ্রম জন্মিয়াছিল। (ত) অন্তর্ধান করিবার উপযোগী মন্ত্র সাধন করিবার জন্য তাহার আগ্রহ বৃদ্ধি পাইয়াছিল। (থ) সে শ্রীপর্ব্বতের আশ্চর্য্য বৃত্তান্তসমূহ জানিত। (দ) মন্ত্রপাঠ করিয়া বার,বার গাত্রে সর্ষপ নিক্ষেপ করায় ভূতাবিষ্ট লোকগুলি দ্রুত আসিয়া হস্ত তাড়ন করিয়া তাহার কাণ দুইখানা চেপটা করিয়া দিয়াছিল। (ধ) সে নিজের শৈবাভিমান ত্যাগ করিয়াছিল না। (ন) বিপরীতভাবে ধরিয়া অলাবুর বীণা বাদন করায় পথিকগণ বিরক্ত হইয়া তাহাকে পরিত্যাগ করিয়া যাইত। (প) সে মস্তক কম্পিত করিয়া দিনের

(१) अन्तर्धानमन्त्रसंग्रहेण। (२) आहतिधावितै। (३) निविडीकृत। (४) अनवमुक्त अवमुक्त।

(प) स्वदेशभाषा-निबद्ध भागीरथी भक्ति-स्तोत्र नर्त्तकेन, (फ) गृहीत तुरग-ब्रह्मचर्य्यतया अन्यदेशागतोषितासु जरत्प्रव्रजितासु बहुकृत्व सम्प्रयुक्त-स्त्रीवशी-करणचूर्णेन (ब) अतिरोषणतया कदाचिद्दुग्ध स्नाष्टपुष्पिकापातोत्पादित-क्रोधेन चण्डिकामपि मुखभङ्गि विकारैर्भृशमुपहसता, (भ) कदाचिन्निवार्य्यमाणा-वास-रुषिताध्वगारब्ध बहु बाहुयुद्ध पात-भग्न पृष्ठकेन (म) कदाचित् कृतापराध बालक पलायनामर्ष पश्चात्-प्रधावित-स्खलिताधोमुख पात स्फुटित शिर -कपाल-

(प) दिवसमिति। दिवसमेव यन्मशकस्य क्वणित शिञ्जित तदनुकर्तुं शील यस्य तद्यथा तथा कम्पितम् उत्तमाङ्ग मस्तक यस्मिन् कर्म्मणि तद्यथा तथा च किमपि अनिर्व्वचनीय गायता। दिवसमिति तत्प्रत्ययेऽस्य कालादि शौव्यस्य ति कर्म्मत्वम्।

(फ) स्वदेशेति। स्वदेशभाषा द्राविडी तया निबद्ध यद्भागीरथ्या भक्तिस्तोत्र तेन नृत्यतीति तेन।

(ब) गृहीतेति। गृहीत तुरगस्य अश्वस्य व ब्रह्मचर्य्य येन स तथोक्तस्तस्य भावस्तया हेतुना यथा तुरगा सततबन्धनप्रतिबन्धादेव ब्रह्मचर्य्यमवलम्बन्ते न पुनश्च र्म्मलाभलोभात् तथा अयमपि स्त्रीलाभाभावादेव ब्रह्मचर्य्यमव लम्बितवान् न पुनश्च र्म्माज नप्रत्याशयेति भाव। अन्यदेशादागता तत्र उषितास्तत्रावस्थितास्तासु जरत्प्रव्रजितासु जराजीर्ण सन्न्यासिनीषु बहुकृत्वो बहून् वारान् सम्प्रयुक्त निक्षिप्त स्त्रीवशीकरणचूर्ण येन तेन।

(भ) अतीति। अष्टानां पुष्पाणां समाहार इत्यष्टपुष्पी अज्ञाता अष्टपुष्पीत्यष्टपुष्पिका अज्ञाने कप्रत्यय टापि कानिचिदष्टौ पुष्पाणीत्यर्थ। तथा च अतिरोषणतया नितान्तक्रोधशीलतया कदाचित् दुग्ध स्नाया अयथाभावेन स्थापिताया अष्टपुष्पिकाया पातेन कौतुकाद् वाहा केनचिज्जनेन चण्डिकापीठात् पातनेन उत्पादित क्रोधो यस्य तेन अतएव मुखभङ्गिविकार श्चण्डिकामपि भृशमुपहसता तानि पुष्पाणि रक्षितुमशक्तत्वादिति भाव।

(म) कदाचिदिति। निवार्य्यमाणेन अत्र न वास कर्त्तव्य इति निषिध्यमानेन आवासेन वासस्थानेन हेतुना रुषितै क्रुद्ध अध्वगै पथिक रारब्धेषु बहुषु बाहुयुद्धेषु पातेन भग्न पृष्ठ यस्य तेन।

(य) कदाचिदिति। कृतो धूलिप्रक्षेपादिना विहित अपराधो येन तस्य तादृशस्य बालकस्य पलायनेन

বেলায়ই মশকশব্দের ন্যায় অনির্ব্বচনীয় গান করিতেছিল। (ফ) স্বদেশীয় ভাষায় গঙ্গার ভক্তিস্তোত্র রচনা করিয়া তাহা পাঠ করত নৃত্য করিতেছিল। (ব) অশ্বের ন্যায় ব্রহ্মচর্য্য অবলম্বন করায় অন্যদেশ হইতে আসিয়া সেইস্থানে অবস্থিত বৃদ্ধ সন্ন্যাসিনীগণের গাত্রে স্ত্রীবশীকরণের চূর্ণ নিক্ষেপ করিয়াছিল। (ভ) একে সে অত্যন্ত রোপনস্বভাব ছিল, তাহাতে আবার চণ্ডীর নিকটে যে আটটী ফুল পাতাইয়া রাখিয়াছিল তাহা কেহ ফেলাইয়া দেওয়ায় নূতন ক্রোধ জন্মিয়াছিল, সুতরা সেই ফুল রক্ষা করিতে না পারায়, নানাবিধ মুখভঙ্গী করিয়া চণ্ডীদেবী'কেও অত্যন্ত উপহাস করিতেছিল। (ম) পথিকগণ আসিয়া থাকিবার ইচ্ছা করিলে সে বাধা দিত, তাহাতে পথিকগণ ক্রুদ্ধ হইয়া গেলে তাহাদের সহিত তাহার অনেক বাহুযুদ্ধ আরম্ভ হইয়া যাইত কোন সময় তাহাতে পড়িয়া যাওয়ায় তাহার পিঠ ভাঙ্গিয়া গিয়াছিল। (য) কোন সময় কোন বালক অপরাধ করিয়া পলায়ন করিলে সে ক্রোধবশত তাহার পশ্চাৎ ধাবন করিবার সময়ে পদস্খলন হওয়ায় অধোমুখ হইয়া পড়িয়া গিয়াছিল, তাই

ভুগ্নগ্রীবেণ, (য) কদাচিজ্জানপদজন (১) নবাগতাপরধার্ম্মিকাদরমৎসরোদ্বদ্ধাত্মনা, (২) (র) নিঃসংস্কারতয়া যৎকিঞ্চনকারিণা, (ল) খঞ্জতয়া মন্দ-মন্দ-সঞ্চারিণা, (৩) (ব) বধিরতয়া সংজ্ঞাব্যবহারিণা, (শ) রাত্র্যন্ধতয়া দিবাবিহারিণা, (ষ) লম্বোদরতয়া প্রভূতাহারিণা, (স) অনেকশঃ ফলপাতন-কুপিতবানরনখোল্লেখচ্ছিদ্রিতনাসাপুটেন, (হ) বহুশঃ কুসুমাবচয়চলিত-ভ্রমরসহস্রদংশশীর্ণীকৃতশরীরেণ, (ক্ষ) সহস্রশঃ শয়নীকৃতাসংস্কৃতশূন্যদেবকুলকালসর্পদষ্টেন, (ক) শতশঃ শ্রীফলতরু-শিখরচ্যুতিচূর্ণিতোত্ত-

থীঽসমথ ক্রীথস্তেন যৎ পশ্চাৎ প্রধাবিত প্রধাবনং তেন যৎ স্খলিতং প্রচ্যুতিস্তস্মাদধোমুখপাতেন স্ফুটিত ঘন শির কপাল ভুগ্না বক্রীভূতা চ গ্রীবা যস্য তেন।

(র) কদাচিদিতি। জানপদৈঃ দেশবাসিজনৈঃ কৃতো যো নবাগতস্য অপরধার্ম্মিকস্য আদরস্তস্মিন্ মৎসরেণ বিদ্বেষেণ উদ্বদ্ধ আত্মহত্যার্থম্ উদ্বন্ধনাশ্রয়ীকৃত আত্মা দেহো যেন তেন।

(ল) নিরিতি। নিঃসংস্কারতয়া শিক্ষাজনিতব্যুৎপত্তিহীনতয়া যৎকিঞ্চনকারিণা তুচ্ছকার্য্যকারিণা।

(ব) খঞ্জেতি। খঞ্জতয়া মন্দং মন্দং সঞ্চরিতুং শীলং যস্য তেন।

(শ) বধিরেতি। বধিরতয়া সংজ্ঞয়া অঙ্গুল্যাদিসঙ্কেতেন ব্যবহর্ত্তুং শীলং যস্য তেন।

(ষ) রাত্র্যন্ধেতি। রাত্র্যন্ধতয়া দিবাবিহারিণা দিবসসঞ্চারিণা।

(স) লম্বোদরেতি। লম্বোদরতয়া প্রভূতাহারিণা প্রচুরভোজিনা।

(হ) অনেকশ ইতি। ফলপাতনেন কুপিতানাং বানরাণাং নখৈঃ উল্লেখেন অনেকশশ্ছিদ্রিতং সঞ্জাতচ্ছিদ্রং নাসাপুটং যস্য তেন।

(ক্ষ) বহুশ ইতি। বহুশঃ কুসুমাবচয়ে পুষ্পচয়নসময়ে চলিতস্য ধাবিতস্য ভ্রমরসহস্রস্য দংশেন দংশনেন শীর্ণীকৃতং শরীরং যস্য তেন।

(ক) সহস্রশ ইতি। সহস্রশঃ শয়নীকৃতেষু শয়নস্থানীকৃতেষু অসংস্কৃতেষু অপরিষ্কৃতেষু শূন্যেষু মানবরহিতেষু দেবকুলেষু দেবগৃহেষু কালসর্পেণ দষ্টেন।

তাহার মাথার খুলি ফুটিয়াছিল ও গলা বাঁকা হইয়াছিল। (র) দেশবাসী সমস্ত লোক, নবাগত অন্য কোন ধার্ম্মিকের আদর করিয়াছিল, সুতরাং তাহাতে বিদ্বেষ হওয়ায় সে আত্মহত্যা করিবার নিমিত্ত গলায় দড়ি দিয়াছিল। (ল) শিক্ষাজনিত কোন জ্ঞান ছিল না বলিয়া সে, অতিতুচ্ছ কার্য্য করিত। (ব) খোঁড়া বলিয়া ধীরে ধীরে চলিত। (শ) বধিরতানিবন্ধন সঙ্কেতদ্বারা অন্যের সহিত ব্যবহার করিত। (ষ) রাত্র্যন্ধ বলিয়া দিনে বিচরণ করিত। (স) লম্বোদর বলিয়া প্রচুর আহার করিত। (হ) ফল পাড়িবার সময়ে বানরগণ ক্রুদ্ধ হইয়া নখের আঘাতে অনেকবার তাহার নাসিকায় ছিদ্র করিয়া দিয়াছিল। (ক্ষ) পুষ্প চয়ন করিবার সময়ে ধাবিত ভ্রমরগণ দংশন করিয়া বহুবার তাহার শরীর জীর্ণ-শীর্ণ করিয়াছিল। (ক) অপরিষ্কৃত শূন্য দেবগৃহে শয়ন করায় কালসর্পে সহস্রবার তাহাকে

(১) জনপদজন। (২) উদ্বদ্ধাত্মনা। (৩) মন্দ মন্দ সঞ্চারিণা।

মাঙ্গেন, (খ) অসকৃদুত্সন্ন দেবমাতৃগৃহ বাস্তব্য নখ (১) জর্জ্জরিত কপোলেন, (গ) সর্ব্বদা বসন্তক্রীড়িনা জনেনোত্ক্ষিপ্ত খণ্ড খট্বারোপিত বৃদ্ধদাসী বিবাহ-প্রাপ্ত-বিড়ম্বনেন, (ঘ) অনেকায়তন প্রতিশয়িত নিষ্ফলোত্থানেন, (ঙ) দৌস্থিত্যমপি (২) বিবিধ ব্যাধি পরিবৃত স্বকুট স্বমিবোদ্বহতা, (চ) মূর্খতামপি বহুব্যসনানুগতা প্রসূতানেকাপত্যামিব দর্শয়তা, (ছ) ক্রোধমপ্যনেকদণ্ডঘাত (৩) নির্ম্মিত-বহুগাত্রগণ্ডক (৪) ফলিতমিব প্রকাশয়তা, (জ) ক্লেশমপি সর্ব্বাবয়বজ্বলিত-

(খ) শতশ ইতি। শতশ শ্রীফলতরো শিখরাদুপরিদেশাত্ চ্যুত্যা পতনেন চূর্ণিতম্ উত্তমাঙ্গ মস্তক যস্য তেন।

(গ) অসকৃদিতি। অসকৃত্ উত্সন্নদেবমাতৃগৃহেষু ভগ্নব্রাহ্মীপ্রভৃতিগৃহেষু বসন্তীতি তথোক্তা যে ঘটকা ভল্লুকা তেষাং নখৈর্নখাঘাতৈ জর্জ্জরিত অতবিক্ষতীকৃত কপোলৌ গণ্ডৌ যস্য তেন।

(ঘ) সর্ব্বদেতি। সর্ব্বদা বসন্তক্রীড়িনা বসন্তোত্সবকারিণা জনেন উত্খাতায়াম্ উত্তোলিতায়াং খণ্ডায়াং ভগ্নায়াং খট্বায়াম্ আরোপিতা যা বৃদ্ধদাসী তয়া বিবাহেন প্রাপ্ত বিড়ম্বন কদর্থনা যেন তেন।

(ঙ) অনেকেতি। অনেকেষু আয়তনেষু দেবতাস্থানেষু যানি প্রতিশয়িতানি প্রায়োপবেশনানি প্রতিশয়নানি তেভ্যো নিষ্ফলমুত্থান যস্য তেন।

(চ) দৌস্থিত্যমিতি। বিবিধব্যাধিভি পরিবৃতম্ দুঃস্থিতস্য ভাবো দৌস্থিত্য তদপি দুর্গতিমপি স্বকুটুম্ব মিব নিজপরিজনমিব উদ্বহতা দধতা। অত্র জাত্যুত্প্রেক্ষালঙ্কার তেন চ দৌস্থিত্যব্যাধীনা সাতত্য ব্যজ্যত ইত্যলঙ্কারেণ বস্তুধ্বনি।

(ছ) মূর্খতামিতি। বহুভিশ্চ স্তনন্ধয়পানাদ্যাসক্তিভিরনুগতা অনুসৃতা তাম্ মূর্খতামপি প্রসূতানি অনেকানি অপত্যানি যয়া তামিব দর্শয়তা আচারেণ প্রকটয়তা ব্যসনানামবাপত্যরূপত্বাদিতি ভাব। অত্রানেকাপত্য প্রসবোত্প্রেক্ষণাত্ ক্রিয়োত্প্রেক্ষালঙ্কার।

(জ) ক্রোধমিতি। অনেকৈর্দণ্ডাঘাতৈরপক্বতজনকৃত লগুড়প্রহারৈনির্ম্মিতা বহবো গাত্রগণ্ডকা শরীরব্রণা

দংশন করিয়াছিল। (খ) শ্রীফলবৃক্ষের উপর হইতে পতিত হওয়ায় শতবার তাহার মস্তক চূর্ণ হইয়াছিল। (গ) ব্রাহ্মীপ্রভৃতি দেবমাতৃগণের ভগ্নগৃহস্থিত ভল্লুকগণ নখের আঘাতে বারংবার তাহার গণ্ডদেশ জর্জ্জরিত করিয়াছিল। (ঘ) বসন্তোৎসবে মত্ত নাগরিকগণ একখানা ভগ্ন খট্বা উত্তোলন করিয়া তাহাতে একটা বৃদ্ধ দাসীকে বসাইয়া তাহার সহিত বিবাহ দেওয়ায় সে সর্ব্বদা বিড়ম্বনা পাইত। (ঙ) সে অনেক দেবতার দুয়ারে হত্যা দিয়া, আবার নিষ্ফলভাবেই উঠিয়াছিল। (চ) নানাবিধ রোগে পরিবেষ্টিত দুর্গতিকেও সে নিজ পরিজনের ন্যায় বহন করিতেছিল। (ছ) সে, যে মূর্খতা প্রকাশ করিতেছিল তাহার পছনে পিছনে স্তন্যপা প্রভৃতির আসক্তি চলিতে থাকায় সেই মূর্খতা যেন অনেক সন্তান প্রসব করিয়াছিল। (জ) অনেক লাঠীর আঘাতে তাহার গায়ে মাড়ুয়া পড়াইয়াছিল, সুতরাং নিজের ক্রোধটাকেও যেন সে, ফলবানের ন্যায় লোকসমাজে ব্যক্ত করিতেছিল। (ঝ)

(১) বাস্তি ভল্লুকনখ। (২) দৌস্থিত্যমপি। (৩) অভিঘাত। (৪) গণ্ডুক।

দীপিকা দাহ ব্রণ বিভাবিত বহুসুখমিব প্রকটয়তা, (ঝ) পরিভবমপি নিষ্কারণ ক্রুষ্ট (১) জনপদদত্ত পদাকৃষ্টি-শত সম্প্রবাহমিব (২) দধানেন, (ঞ) শুষ্ক-বনলতা-বিনির্ম্মিত বৃহৎকুসুমকরণ্ডকেন, (ট) বেত্রলতা-রচিত-পুষ্প পাতনাঙ্কুশিকেন, (ঠ) অপমপ্যমুক্ত-কাল-কম্বল-খণ্ড-খোলেন, (৩) জরদ্দ্রবিড়ধার্ম্মিকেণাধিষ্ঠিতা চণ্ডিকামপশ্যৎ (ড)। তস্যামেব চ বাসমরোচয়ৎ (৪) (ঢ)।

অথাবতীর্য্য তুরগাৎ প্রবিশ্য ভক্তিপ্রবণেন চেতসা তাং প্রণনাম। কৃতপ্রদক্ষিণশ্চ

বিশেষা যেন তম্ ক্লেশমপি ফলিতমিব সঞ্জাতফলমিব প্রকাশয়তা গাত্রগণ্ডকানামেব ক্লেশফলরূপত্বাদিতি ভাব। ক্রিয়োৎপ্রেক্ষা।

(ঝ) ক্লেশমিতি। সর্ব্বেষু অবয়বেষু অঙ্গেষু জ্বলিতাস্তদুৎপীড়িতজন প্রজ্বালিতা যা দীপিকা প্রদীপাস্তাভ্যাং দাহেন যে ব্রণা ক্ষতানি তৈর্বিভাবিত পরিচায়িত ক্লেশমপি বহুসুখমিব প্রকটয়তা সহাসবদনেন জনসমাজে নিবেদয়তা। অত্র গুণোৎপ্রেক্ষালঙ্কার।

(ঞ) পরীতি। পরিভবমপমানমপি নিষ্কারণম্ আক্রুষ্টাস্তিরস্কৃতা যে জনপদা জনপদবাসিনো জনাস্তৈস্তস্য পদাকৃষ্টিশতস্য পাদপ্রহারসমূহস্য সম্প্রবাহ বিশালস্রোত ইব দধানেন। ক্রিয়োৎপ্রেক্ষা।

(ট) শুষ্কেতি। শুষ্কাভিব নলতাভির্বিনির্ম্মিত বৃহৎ কুসুমকরণ্ডক পুষ্পপাত্র যেন তেন।

(ঠ) বেত্রেতি। বত্রলতয়া বংশকঞ্চিকয়া রচিতা বিহিতা পুষ্পপাতনায় অঙ্কুশিকা যেন তেন।

(ড) অপমিতি। অপমপি অমুক্ত অপরিত্যক্ত কালকম্বলখণ্ডস্য খোল শিরস্ত্রাণ যেন তেন। খোলক পাকবল্মীকপূগকোষশিরস্ত্রকে। ইতি বিশ্ব। জরন্ বৃদ্ধো যো দ্রবিড়ধার্ম্মিকো দ্রবিড়দেশীয়োপাসকস্তেন অধিষ্ঠিতা মাশ্রিতাম্। অত্র জরদ্দ্রবিড়ধার্ম্মিকবর্ণনসমুদায়ে বিবিধবিশেষণপরিপুষ্ট এক এব স্বভাবোক্তিরলঙ্কার প্রধান।

অহো! এষা কিল কবিকল্পনা সুপ্রসূতিরিব মহাকৌতুকপ্রসবিনী স্বভাবেনবাকর্ষতি কাব্যরসিকান্ ইতরাংশ্চ বিরক্তীকরোতি বাহুল্যাৎ।

(ঢ) তস্যামিতি। তস্যামেব চণ্ডিকায়া চণ্ডিকায়তন ইত্যর্থ বাসমরোচয়ৎ রাত্রৌ নিবাস কর্ত্তুমৈচ্ছৎ চন্দ্রাপীড় ইতি সম্বন্ধ।

তাহার ব্যবহারে উৎপীড়িত লোকেরা প্রদীপ জ্বালিয়া তাহার সমস্ত অঙ্গ পোড়াইয়া দেওয়ায় সেই ঘায়ের চিহ্ন সকল তাহার কষ্টের পরিচয় দিত কিন্তু সেই কষ্টকেও সে সহাস্যমুখে বহুতর সুখের ন্যায় প্রকাশ করিত। (ঞ) বিনাকারণে গালি দেওয়ায় দেশীয় লোকেরা তাহাকে যে সকল পদাঘাত করিয়াছিল, তাহার প্রবাহের ন্যায় সে, অপমানও ব ন করিতেছিল। (ট) শুষ্ক বন্য লতাদ্বারা বৃহৎ একটা পুষ্পপাত্র নির্ম্মাণ করিয়াছিল। (ঠ) ফুল পাড়িবার জন্য বাঁশের কঞ্চী দিয়া একটা কৌটা তৈয়ার করিয়াছিল (ড) এব কৃষ্ণবর্ণ একখণ্ড কম্বলদ্বারা মাথার একটা টুপি করিয়াছিল, তাহা ক্ষণকালের জন্যও প রত্যাগ করিত না। (ঢ) চন্দ্রাপীড় রাত্রিতে সেই স্থানেই বাস করিতে ইচ্ছা করিলেন।

(১) আক্রুষ্ট। (২) শত প্রবাহমিব শত সম্প্রবাহমিব।

(৩) অপমপ্যামুক্তকালকম্বলখণ্ডখোলেন। (৪) অরোচয়ৎ।

पुन प्रणम्य प्रशान्तोद्देशदर्शनकुतूहलेन परिभ्रमन्नुच्चैरारटन्तमाक्रोशन्तञ्च कुपित द्रविडधार्म्मिकमेकदेशे ददर्श (ण)। दृष्ट्वा च कादम्बरीविरहोत्कण्ठोद्वेगदूयमानोऽपि सुचिरं जहास। न्यवारयच्च तेन सार्द्धं प्रारब्धकलहान् (१) उपहसत स्वसैनिकान्। उपसान्त्वनैश्च कथमपि प्रियालापशतानुनयै प्रशममुपनीय क्रमेण जन्मभूमि जाति विद्याञ्च कलत्रमपत्यानि विभव वय प्रमाण प्रव्रज्यायाश्च कारण स्वयमेव पप्रच्छ (त)। पृष्टश्चासाववर्णयदात्मानम, अतीत स्वशौर्य्य रूप विभववर्णनवाचालेन तेन सुतरामरज्यत राजपुत्र। विरहातुरहृदयस्य विनोदनता मिवागात्। उपजातपरिचयश्चास्मै ताम्बूलमदापयत् (थ)। अस्तमुपगते च भगवति सप्तसप्तौ, आवासितेषु यथासम्पन्न पादपतलेषु राजसूनुषु, शाखावसक्तप-

(ण) प्रणेति। भक्त्या प्रवणेन प्रणतेन। प्रशान्ता शमगुणोद्दीपका ये उद्देशा स्थानानि तेषां दर्शनकुतूहलेन। आरटन्त शब्दायमानम् आक्रोशन्त सैनिकानधिक्षिपन्तम्।

(त) दृष्ट्वेति। कादम्बर्य्या विरहेण या उत्कण्ठा तया य उद्वेगश्चित्तस्यास्थिरता तेन दूयमानोऽपि सन्ताप्य मानोऽपि। प्रियालापानां शतानि च अनुनयाश्च त। कथमपि कष्टेन प्रशम शान्तभावम् उपनीय प्रापय्य। विभव धनसम्पदम्। वय प्रमाण परिमाणम्। प्रव्रज्याया परिव्राजकताया।

(थ) पृष्ट इति। असौ द्रविडधार्म्मिक। अतीतानां स्वशौर्य्यरूपविभवानां वर्णनेषु वाचालो मुखरस्तेन तेन द्रविडधार्म्मिकेण करणेन। सुतरामत्यन्तम्। विरहातुरहृदयस्य राजपुत्रस्य विनोदनतां विरहजनिताशान्ति निवृत्त्युपायतामगादिव द्रविडधार्म्मिक इति शेष। किञ्चोपजातपरिचयश्चन्द्रापीड अस्मै द्रविडधार्म्मिकाय।

(द) अस्तमिति। सप्त सप्तय अश्वा यस्य तस्मिन् सप्तसप्तौ सूर्य्ये। राजसूनुषु राजपुत्रेषु यथासम्पन्ना यथाप्राप्ता

(ণ) তদনন্তর চন্দ্রাপীড় অশ্ব হইতে অবতরণ করিয়া, চণ্ডীর গৃহে প্রবেশপূর্ব্বক ভক্তিযুক্ত চিত্তে তাঁহাকে প্রণাম করিলেন এবং প্রদক্ষিণ করিয়া পুনরায় প্রণামপূর্ব্বক শান্তিকর স্থানসমূহ দর্শন করিবার কৌতুকে পরিভ্রমণ করত একদিকে ক্রুদ্ধ দ্রবিড়ধার্ম্মিককে উচ্চৈঃস্বরে চীৎকার করিতে ও সৈন্যগণকে তিরস্কার করিতে দেখিলেন। (ত) দেখিয়া, কাদম্বরীর বিরহে উৎকণ্ঠা ও উদ্বেগবশত সন্তপ্ত হইয়াও বহু সময় হাস্য করিলেন এবং নিজের সৈন্যগণ তাহার সহিত কলহ আরম্ভ করিয়া উপহাস করিতেছিল, তাহাদিগকে নিবারণ করিলেন। তাহার পর সান্ত্ববাদ, বহুতর প্রিয়বাক্য ও অনুনয়দ্বারা কোন প্রকারে তাহাকে শান্ত করিয়া, ক্রমশ জন্মভূমি জাতি বিদ্যা স্ত্রী সন্তান, ধনসম্পত্তি বয়সের পরিমাণ ও প্রব্রজ্যার কারণ নিজেই জিজ্ঞাসা করিলেন। (থ) চন্দ্রাপীড় জিজ্ঞাসা করিলে সে, আপনাকে বর্ণনা করিতে লাগিল, সে নিজের অতীত শৌর্য্য সৌন্দর্য্য ও ধনসম্পত্তি বর্ণনায় একেবারে মুখর হইয়া উঠিলে রাজপুত্র তাহাদ্বারা অত্যন্ত আনন্দিত হইলেন, সুতরাং সে যেন বিরহাতুরহৃদয় চন্দ্রাপীড়ের অশান্তিনিবৃত্তির উপায় হইয়া উঠিল এবং পরিচয় জন্মিলে চন্দ্রাপীড় তাহাকে তাম্বুল দান করাইলেন। (দ) তাহার পর ভগবান্ সূর্য্যদেব অস্তমিত হইলেন, রাজপুত্রগণ যথাপ্রাপ্ত

(१) उपहसत्कलहान्।

নীতপর্য্যাণেষু (১) ক্ষিতিতল লুণ্ঠন ( ) পাংশুল-সটাবধূননানুমিতোৎসাহেষু গৃহীত-কতিপয়-শষ্প কবলেষু পীতোদকেষু স্নানার্দ্র পৃষ্ঠতয়া বিগতশ্রমেষু পুরো-নিখাতকুন্তযষ্টিষু সংযতেষু বাজিষু, বাজি সমীপ বিরচিত পর্ণ স্রস্তরে (৩) চ দিবস গমন খিন্ন-পরিবর্ত্তিত যামিকে (৪) সুষুপ্সতি সৈনিকজনে, জ্বলত বহু-পাবক-প্রভা-পীত-তমসি দিবস ইব বিরাজমানে সেনানিবেশে চন্দ্রাপীড় পরিজনেন কদেশে সংযতস্যেন্দ্রায়ুধস্য পুর পরিকল্পিত প্রতীহার-(৫) নিবেদিত শয়নীয়মগাৎ (খ)। নিষণ্ণস্য চাস্য তৎক্ষণমেব পস্পর্শ দু খাসিকা হৃদয়ম্, অরতিগৃহীতশ্চ বিসর্জ্জয়াম্বভূব রাজলোকম্, অতিবল্লভানপি নাললাপ পার্শ্ব স্থান, নিমীলিতলোচনো

যে পাদপাস্তেষাং তলেষু আবাসিতেষু ভর্ত্স্থান প্রাপিতেষু সৎসু। শাখাসু অবসক্তানি লগ্নানি অপনীতপর্য্যাণানি গাত্রচ্ছাদিতপল্যয়নানি যেষাং তেষু ক্ষিতিতলে লুণ্ঠনেন পাংশুলা ধূলিব্যাপ্তা যা সটা জটাস্তাসাম্ অবধূননেন কম্পনেন অনুমিত উৎসাহ পুনর্গমনোদ্যমো যেষাং তেষু গৃহীতা কতিপয়ে শষ্পকবলা ঘাসগ্রাসা যৈস্তেষু পীতানি উদকানি জলানি যৈস্তেষু স্নানেন আর্দ্রাণি পৃষ্ঠানি যেষাং তেষাং ভাবস্তয়া তথোক্তয়া হেতুনা বিগতশ্রমেষু বাজিষু অশ্বেষু পুর অগ্রত নিখাতা প্রোথিতা যা কুন্তযষ্টয়স্তাসু সংযতেষু বদ্ধেষু সৎসু। বাজিনামশ্বানাং সমীপেষু বিরচিতা শয়নায় নির্ম্মিতা পর্ণ স্রস্তরা পর্ণময়াস্তরণানি যেন তস্মিন্ দিবস যাবদ্গমনেন খিন্না কিঞ্চিৎ পরিশ্রান্তা অতএবান্যৈ পরিবর্ত্তিতা যামিকা প্রহরিণো যেন তস্মিন্ সুষুপ্সতি স্বপ্তুমিচ্ছতি সতি। তথা জ্বলতাম্ উৎপাদিতানাং বহূনাং পাবকানামগ্নীনাং প্রভাভি পীতানি গ্রস্তানি নাশিতানি তমাংসি অন্ধকারা যস্য তস্মিন্ তথোক্তে সেনানিবেশে রাত্রাবপি দিবস ইব বিরাজমানে সতি। প্রতীহারেণ দৌবারিকেণ নিবেদিতম্ শয়নীয় শয্যাম্।

(খ) নিষণ্ণস্যেতি। কিঞ্চ দু খস্য আসনম্ আসিকা প্রাপ্তিরিতি দু খাসিকা। ভাবমাত্রে চ হয়তে ইতি হস্তিস্থিতে পর্য্যায়াহ র্ণেষু চ ইতি আসধাতোর্ভাবে বুঞ। নিষণ্ণস্য শয্যায়াং স্থিতস্য অস্য চন্দ্রাপীড়স্য।

বৃক্ষের তলে স স্থাপিত হইলেন, ঘোড়াগুলির পালান খুলিয়া গাছের ডালে ঝুলাইয়া রাখিল, তখন ভূতলে লুণ্ঠন করায় তাহাদের জটাগুলি ধূলিতে পরিপূর্ণ হইয়া গেল আবার সেই জটাগুলি কম্পিত করায় তাহাদের পুনরায় গমনোৎসাহ অনুমিত হইতে লাগিল, কয়েকটী ঘাসের গ্রাস গ্রহণ করিল, জল পান করিল এবং স্নান করায় পৃষ্ঠদেশ আর্দ্র হইয়াছিল বলিয়া পরিশ্রম দূরীভূত হইল, তাহার পর সম্মুখে কুন্ত (শস্ত্রবিশেষ) প্রোথিত করিয়া তাহাতে অশ্বদিগকে বন্ধন করিয়া রাখিল, আর সমস্ত দিন গমন করায় পরিশ্রান্ত প্রহরীদিগকে পরিবর্ত্তিত করিয়া সৈন্যগণ শয়নের নিমিত্ত অশ্বের নিকটে পর্ণময় শয্যানির্ম্মাণপূর্ব্বক শয়ন করিতে ইচ্ছা করিল, বহুতর অগ্নি প্রজ্বালন করায় তাহার আলোকে অন্ধকার বিনষ্ট করিলে সেনানিবেশটী দিনের ন্যায় শোভা পাইতে লাগিল, এমন সময় কোন ভৃত্য, ইন্দ্রায়ুধকে বন্ধন করিয়া তাহার সম্মুখে শয্যা নির্ম্মাণ করিল, কোন দৌবারিক যাইয়া সে সংবাদ জানাইল, তখন চন্দ্রাপীড় সেই শয্যায় শয়ন করিতে গেলেন (খ) এবং তিনি সেই শয্যায় অবস্থান করিলে,

(১) শাখাবসক্তাপনীতপর্য্যাণেষু। (২) লুণ্ঠন। (৩) প্রস্তরে।
(৪) পরিবর্জিতযামিকে। (৫) প্রতিহার।

মুহুর্মুহুর্মনসা জগাম কিম্পুরুষবিষয়ম্ অনন্যচেতা সস্মার হেমকূটস্য, (১) নিষ্কারণ-বান্ধবতামচিন্তয়ন্মহাশ্বেতাপাদানাম্, জীবিতফলমভিললাষ পুনঃ পুনঃ কাদম্বরীদর্শনম্, অপগতাভিমানপেশলায় নিতরামস্পৃহয়ন্মদলেখাপরিচয়ায়, তমালিকাং দ্রষ্টুমাচকাঙ্ক্ষ, কেয়ূরকাগমনমুৎপ্রৈক্ষত, হিমগৃহকমপশ্যত, উষ্ণ মায়তং (২) পুনরুক্তং নিশশ্বাস, ববন্ধ চাধিকাং (৩) প্রীতিং শেষহারে, পশ্চাৎ স্থিতাং পুণ্যভাগিনীমমন্যত পত্রলেখাম্, এবঞ্চানুপজাতনিদ্র এব তামনয়ন্নিশাম্ (ঘ)। উষসি চোত্থায় তস্য জরদ্দ্রবিড়ধার্ম্মিকস্যেচ্ছয়া নিসৃষ্টধনবিসরঃ পূরয়িত্বা মনোরথম্, অভিমতমভিরমণীয়েষু (৪) প্রদেশেষু নিবসন্নল্পৈরেবাহোভিরুজ্জয়িনীমাজগাম [ন]।

কিঞ্চ অরতিগৃহীত ইবং সর্ব্বেব বিষয়েষ্বরতিসম্পন্নঃ। নিমীলিতলোচনো মুদ্রিতনয়নঃ। কিম্পুরুষবিষয় কিন্নরদেশং মনসা জগাম চিন্তিতবানিত্যর্থঃ। হেমকূটস্যেতি স্মৃত্যর্থকর্ম্মণি তি কর্ম্মণি ষষ্ঠী। মহাশ্বেতাপাদানাং মহাশ্বেতায়া ইত্যর্থঃ তপস্বিনতয়া গুরুত্বাৎ পাদশব্দপ্রয়োগো বহুবচনঞ্চ সঙ্গচ্ছতে। জীবিতফলং জীবনপ্রয়োজনস্বরূপং কাদম্বরীদর্শনম্। অপগতেন অভিমানেন হেতুনা পেশলো মনোহরস্তস্মৈ। উৎপ্রৈক্ষত সম্ভাবিতবান্ আত্মতুলনয়া কাদম্বর্য্যা অপ্য উৎকণ্ঠিতত্বেন তস্য অ প্রেষণসম্ভবাদিতি ভাবঃ। অপশ্যন্মনসেতি শেষঃ চিন্তিতবানিত্যর্থঃ। আয়তং দীর্ঘম্ পুনরুক্তং বারং বারম্। শেষহারে শেষাখ্যায়াং মুক্তামালায়াম্। ববন্ধ চকার। পুণ্যভাগিনীমমন্যত কাদম্বরীদর্শনপ্রাপ্তেরিতি ভাবঃ। এবঞ্চ অনেন প্রকারেণ। এষু প্রায়েণৈব কাদম্বর্য্যা উৎকণ্ঠাবশ্যাদিতি ভাবঃ।

(ন) উষসীতি। ইচ্ছয়া নিসৃষ্ট তদভিলাষানুসারেণৈব দত্ত ধনানাং বিসরঃ সমূহঃ। অভিরমণীয়েষু স্বত এব মনোহরেষু প্রদেশেষু অভিমতং যথা স্যাত্তথা নিবসন্নিত্যন্বয়।

তখনই দুঃখ আসিয়া তাঁহার হৃদয় স্পর্শ করিল এবং সকল বিষয়েই অরুচি হওয়ায় রাজগণকে বিদায় দিলেন, অত্যন্তপ্রীতিভাজন পার্শ্বচরদিগের সহিতও আলাপ করিলেন না, মুদ্রিতনয়নে বার বার কিন্নরদেশ ভাবিতে লাগিলেন অনন্যমনে হেমকূটপর্ব্বত স্মরণ করিলেন মহাশ্বেতার অকারণ বন্ধুতা চিন্তা করিলেন, বার বার কাদম্বরীর দর্শন করাই জীবনের ফল মনে করিয়া তাহাই ইচ্ছা করিতে লাগিলেন মদলেখার সহিত আলাপ-ব্যবহারে তাহার কোন অহঙ্কার ছিল না বলিয়া সে আলাপ ব্যবহার বড়ই মনোহর ছিল তাই পুনরায় সেই আলাপ ব্যবহার করিতে ইচ্ছা করিলেন, তমালিকাকে দেখিতে আকাঙ্ক্ষা করিলেন, কেয়ূরকের আগমন সম্ভব বলিয়া মনে করিলেন এবং তাঁহার সেই হিমগৃহের কথা মনে পড়িল, তাহার পর তিনি বারংবার উষ্ণ ও দীর্ঘ নিশ্বাস ত্যাগ করিতে লাগিলেন, শেষনামক হারছড়াকে খুব ভালবাসিতে লাগিলেন এবং পশ্চাদ্বর্ত্তিনী পত্রলেখাকে পুণ্যবতী বলিয়া মনে করিলেন— এইভাবে সে রাত্রিতে তাঁহার নিদ্রা জন্মিল না, তাই জাগরিত অবস্থাতেই সে রাত্রি অতিবাহিত করিলেন (ন) এবং প্রভাতকালে গাত্রোত্থান করিয়া সেই বৃদ্ধ দ্রবিড়ধার্ম্মিকের

[১] হেমকূটস্য রম্যতাম্। [২] উষ্ণমুষ্ণমায়তং।
[৩] ববন্ধ বান্ধবেষ্বধিকাং। [৪] অভিমতেষ্বভিরমণীয়েষু।

आकस्मिकागमनप्रहृष्टसम्भ्रान्तानां पौराणामर्घकमलानीव नमस्काराञ्जलिसहस्राणि प्रतीच्छन्नलक्षित एव विवेश (१) नगरीम् (प)। अहमहमिकया च प्रधावितादतिहर्षरसविह्वलात् परिजनात् (२) "देव! द्वारि चन्द्रापीडो वर्त्तते" इत्युपलभ्यास्य पिता निर्भरानन्दमन्दगमनो मन्दर इव क्षीरोदजलमुत्तरीयांशुकममलमागलितमाकर्षन् प्रहर्षनेत्रजलबिन्दुवर्षी मुक्तमुक्ताफलासार (३) इव कल्पपादपः प्रत्यासन्नवर्त्तिभिर्जरापाण्डुमौलिभिश्चन्दनविलेपनैरनुपहतक्षौमधारिभिः केयूरिभिरुष्णीषिभिः किरीटिभिः शेखरिभिश्च बहुकैलासामिव बहुक्षीरोदामिव क्षितिं दर्शयद्भिः प्रतिपन्नासिवेत्रच्छत्रकेतुचामरैरनुगम्यमानो राजसहस्रैश्चरणाभ्यामेव

(प) आकस्मिकेति। आकस्मिकेन असम्भावितेन आगमनेन प्रहृष्टाश्च ते सम्भ्रान्ताः सत्वराश्चेति ते तथोक्तास्तेषाम्। अर्घकमलानीव पूजार्थपद्मानीव। प्रतीच्छन् गृह्णन्। धर्मोपमालङ्कारः।

(फ) अहमिति। किञ्च उपलभ्य ज्ञात्वा। अस्य चन्द्रापीडस्य पिता तारापीडः। निर्भरेण अतिमात्रेण आनन्देन मन्दं मन्थरं गमनं यस्य सः। मन्दरः समुद्रमन्थनसमये मन्दराचलः क्षीरोदस्य सागरस्य जलमिव आगलितं स्कन्धदेशाद्विच्युतम् अमलम् उत्तरीयांशुकम् आकर्षन्। धर्मोपमाश्लेषानुप्रासयोः संसृष्टिः। प्रहर्षनेत्रजलबिन्दून् आनन्दाश्रुकणान् वर्षतीति सः अतएव मुक्तस्त्यक्तः मुक्ताफलानाम् आसारो धारा येन सः तादृशः कल्पपादप इव विद्यमानः। धर्मोपमालङ्कारः। प्रत्यासन्नवर्त्तिभिः सर्वदा सहचारिभिरित्यर्थः। जरया वार्द्धकेन पाण्डवः शुभ्रा मौलयो मस्तकानि येषां तैः। अनुपहतानि अच्छिन्नानि क्षौमाणि पट्टवसनानि धारयन्तीति तैः। बहवः कैलासाः पर्वता यस्यां तामिव तथा बहवः क्षीरोदाः समुद्रा यस्यां तामिव क्षितिं भुवं दर्शयद्भिः प्रकटयद्भिः समानं

ইচ্ছানুসারে বহুতর ধন দানপূর্ব্বক তাহার অভিলাষ পূর্ণ করিয়া পথে সুন্দর সুন্দর স্থানে ইচ্ছানুসারে বাস করত অল্প দিনেই উজ্জয়িনীতে আসিলেন।

(প) চন্দ্রাপীড়ের আকস্মিক আগমনে পুরবাসিগণ আনন্দে ব্যস্ত হইয়া পড়িল, তখন পূজার পদ্মের ন্যায় নমস্কার করিবার সময়ে তাহাদের অঞ্জলিসমূহ গ্রহণ করত চন্দ্রাপীড় সকলের অলক্ষিতভাবেই রাজধানীতে প্রবেশ করিলেন। (ফ) তাহার পর রাজপরিজনবর্গ আনন্দে বিহ্বল হইয়া "আমি আগে আমি আগে এইরূপে ধাবিত হইয়া রাজার নিকট যাইয়া বলিল—"মহারাজ! চন্দ্রাপীড় দ্বারে উপস্থিত হইয়াছেন।" চন্দ্রাপীড়ের পিতা তারাপীড় পরিজনবর্গের নিকট এই সংবাদ জানিয়া, অত্যন্ত আনন্দবশতঃ মন্থর গতিতে চরণদ্বারাই চন্দ্রাপীড়ের প্রত্যুদ্গমন করিলেন তখন মন্দরপর্ব্বত যেমন ক্ষীরোদসাগরের জল আকর্ষণ করিয়াছিল, সেইরূপ তিনি বিগলিত নির্ম্মল উত্তরীয় বসন আকর্ষণ করিতেছিলেন এবং আনন্দাশ্রু বর্ষণ করায় তিনি মুক্তাবর্ষী কল্পবৃক্ষের ন্যায় বিরাজ করিতেছিলেন, আর সর্ব্বদা সহচর, বার্দ্ধক্যনিবন্ধন শুভ্রমস্তক, চন্দনাঙ্গরাগশালী ও অচ্ছিন্ন পট্টবসনধারী এবং কেয়ূর, উষ্ণীষ, কিরীট ও শিরোমাল্যসমন্বিত সামন্তরাজগণ, পৃথিবীকে বহুতর কৈলাসপর্ব্বত এবং বহুতর ক্ষীরোদসাগরসম্পন্নের ন্যায় দেখাইতে দেখাইতে তরবারি, বেত্র, ছত্র, ধ্বজ ও

(१) आविवेश। (२) प्रधावितादतिरभसवशविह्वलात् परिजनात्। (३) अविरल् मुक्तमुक्ताफल वारि।

प्रत्युज्जगाम (फ)। चन्द्रापीडोऽपि दृष्ट्वा (१) पितरं दूरादेवावतीर्य्य वाजिनश्चूडामणिमरीचिमालिना मौलिना महीमगच्छत् (ब)। अथ प्रसारितभुजेन "एह्येहि" इत्याहूय पित्रा गाढमुपगूढः सुचिरं परिष्वज्य तत्कालसन्निहितानाञ्च माननीयानां कृतनमस्कारः करे गृहीत्वा विलासवतीभवनमनीयत राज्ञा (भ)। तयापि तथैव सर्वान्तःपुरपरिवारया प्रत्युद्गम्याभिनन्दितागमनः (२) कृतागमनमङ्गलाचारो दिग्विजयसम्बद्धाभिरेव कथाभिः कञ्चित् कालं स्थित्वा शुकनासं द्रष्टुमाययौ (म)। तत्राप्यमुनैव क्रमेण सुचिरं स्थित्वा निवेद्य वैशम्पायनं स्कन्धावारवर्त्तिनं कुशलिनम्, आलोक्य च मनोरमाम्, आगत्य विलासवतीभवन एव सर्वाः स्नानादिकाः परवश इव क्रिया निरवर्त्तयत्। अपराह्णे निजमेव भवनम् (३) आयासीत् (य)। तत्र च

शुभत्वात्मनामेव कैलासक्षीरोदयोस्तुल्यत्वादिति भावः। अत्र जात्युत्प्रेक्षयोर्निरपेक्षतया संसृष्टिः। तथा प्रतिपन्नानि विनयप्रदर्शनाय धृतानि असि दण्ड छत्र के चामरादीनि यैस्तैः राजसहस्रैः सामन्तसमूहैरनुगम्यमानः सन्।

(ब) चन्द्र इति। वाजिनो घोटकात्। चूडामणिमरीचिमाला अस्यास्तीति तेन मौलिना मस्तकेन महीं भूमिम् अगच्छत् प्राप्नोत् अस्पृशदित्यर्थः नमस्काराय इति भावः। अत्र छेकानुप्रासोऽलङ्कारः।

(भ) अथेति। उपगूढ आलिङ्गितः सन् सुचिरं परिष्वज्य पितरं प्रत्यालिङ्ग्येत्यर्थः। माननीयानां जनानामिति सम्बन्धविवक्षया षष्ठी। कृतो नमस्कारो येन स तथोक्तश्चन्द्रापीडः।

(म) तयेति। सर्वाणि अन्तःपुराणि अन्तःपुरस्थजना परिवारा यस्यास्तया तयापि विलासवत्यापि। अभिनन्दितम् आगमनं यस्य स तथा कृत आगमनस्य मङ्गलाचारो यस्य स चन्द्रापीडः।

(य) तत्रेति। परवश इव पराधीन इव कादम्बर्य्युत्कण्ठया शून्यहृदयत्वादिति भावः। निरवर्त्तयत् निष्पादितवान्।

চামর ধারণ করিয়া মহারাজ তারাপীড়ের অনুগমন করিলেন। (ব) চন্দ্রাপীড়ও পিতাকে দেখিয়া দূর হইতেই অশ্ব হইতে অবতরণ করিয়া চূড়ারত্নের কিরণজালব্যাপ্ত মস্তকদ্বারা ভূতল স্পর্শ করিলেন। (ভ) তদনন্তর পিতা তারাপীড় "এস এস" এইভাবে আহ্বান করিয়া বাহুযুগল প্রসারণপূর্ব্বক গাঢ় আলিঙ্গন করিলেন, চন্দ্রাপীড়ও বহুকাল যাবৎ পিতাকে প্রত্যালিঙ্গন করিয়া সেই সময়ে নিকটবর্ত্তী মাননীয় ব্যক্তিদিগকে নমস্কার করিলেন, তাহার পর রাজা হস্ত ধারণ করিয়া চন্দ্রাপীড়কে বিলাসবতীর গৃহে নিয়া গেলেন। (ম) বিলাসবতীও সেই ভাবেই অন্তঃপুরস্থ সকল রমণীগণে পরিবৃত হইয়া প্রত্যুদ্গমনপূর্ব্বক, চন্দ্রাপীড়ের আগমনের অভিনন্দন করিয়া মঙ্গলাচরণ সম্পাদন করিলেন, তাহার পর চন্দ্রাপীড় দিগ্বিজয়সংক্রান্ত নানাবিধ কথোপকথনে সেখানে কিছু কাল থাকিয়া শুকনাসকে দেখিতে গেলেন। (য) সেখানেও সেই ভাবেই অনেক সময় থাকিয়া "বৈশম্পায়ন সৈন্যগণের ভিতরে রহিয়াছেন এবং ভাল আছেন" এই কথা জানাইয়া, মনোরমার সহিত সাক্ষাৎ করিয়া,

(१) क्वचित् चन्द्रापीडोऽपीति न दृश्यते। दृष्ट्वा च।

(२) प्रत्युद्गमनाभिनन्दितागमनः। (३) कुमारभवनम्।

রণরণক-খিদ্যমান-মানসঃ কাদম্বর্য্যা বিনা ন কেবলমাত্মানং স্বভবনমবন্তী নগরং বা সকলমিব মহীমণ্ডলং শূন্যমমন্যত (র)। ততো গন্ধর্ব্বরাজপুত্রীবার্ত্তা-শ্রবণোৎসুকশ্চ মহোৎসবমিব ঈপ্সিতবরপ্রাপ্তিকালমিব অমৃতোৎপত্তিসময়মিব পত্রলেখাগমনং প্রত্যপালয়ৎ (ল)।

ততঃ কতিপয়দিবসাপগমে মেঘনাদঃ পত্রলেখামাদায়াগচ্ছৎ, উপানয়চ্চৈনাম্। কৃতনমস্কারাঞ্চ দূরাদেব স্মিতেন প্রকাশিতপ্রীতিশ্চন্দ্রাপীড়ঃ প্রকৃতিবল্লভামপি কাদম্বরীসকাশাৎ প্রসাদলব্ধাপরসৌভাগ্যামিব বল্লভতরতামুপাগতামুত্থায়াতিশয়দর্শিতাদরমালিলিঙ্গ পত্রলেখাম্, মেঘনাদঞ্চ প্রণতং পৃষ্ঠে করকিসলয়েন পস্পর্শ(ব)। সমুপবিষ্টশ্চ (১) অব্রবীৎ—"পত্রলেখে! কথয়, তত্রভবত্যা মহাশ্বেতায়া মদলেখায়া দেব্যা কাদম্বর্য্যাশ্চ কুশলম্? কুশলো বা সকলঃ (২) তমালিকা

(র) রণেতি। রণরণকেন কাদম্বর্য্যা উৎকণ্ঠাবেগেন খিদ্যমানং পীড্যমানং মানসং যস্য সঃ।

(ল) তত ইতি। প্রত্যপালয়ৎ প্রতীক্ষিতবান্। অত্রোপমাত্রয়স্য মিথো নিরপেক্ষতয়া সংসৃষ্টিঃ।

(ব) তত ইতি। এনাং পত্রলেখাম্ উপানয়ৎ চন্দ্রাপীড়সমীপে উপাস্থাপয়ৎ। প্রকৃত্যা স্বভাবেনৈব বল্লভা দয়িতা তামপি প্রসাদেন অনুগ্রহেণ লব্ধমপরং সৌভাগ্যং যয়া তামিব অতএব বল্লভতরতাম্ অতিশয়েন বাল্লভ্যম্ উপগতাং প্রাপ্তাং পত্রলেখাম্। অতিশয়েন দর্শিতঃ আদরো যস্মিন্ কর্ম্মণি তদ্যথা তথা আলিলিঙ্গ। অত্র ক্রিয়োৎপ্রেক্ষা-পদার্থহেতুককাব্যলিঙ্গয়োরঙ্গাঙ্গিভাবেন সঙ্করঃ।

(শ) সমুপেতি। মদলেখয়া সহেতি সমদলেখা তস্যা। শেখরীকৃত শিরোভূষণীকৃতো যোঽঞ্জলিস্তেন।

ফিরিয়া আসিয়া বিলাসবতীর গৃহেই স্নানাদি সমস্ত কার্য্য পরাধীনের ন্যায় হইয়া সম্পাদন করিলেন এবং অপরাহ্ণে নিজের বাড়ীতেই গেলেন। (র) সেখানে উৎকণ্ঠাবশত মন অস্থির হইয়া পড়িল এবং কাদম্বরীর বিরহে কেবল আপনাকে নিজের বাটীকে এবং উজ্জয়িনী নগরীকে নহে—সমস্ত ভূমণ্ডলকেই শূন্য বলিয়া মনে করিতে লাগিলেন। (ল) তাহার পর গন্ধর্ব্বরাজনন্দিনী কাদম্বরীর বৃত্তান্ত শুনিবার জন্য উৎসুক হইয়া মহোৎসবের ন্যায় অভীষ্ট বর লাভ সময়ের ন্যায় এবং অমৃতের উৎপত্তিকালের ন্যায় পত্রলেখার আগমনের প্রতীক্ষা করিতে লাগিলেন।

(ব) তাহার পর কয়েক দিন অতীত হইলে মেঘনাদ পত্রলেখাকে নিয়া আসিল এবং তাহাকে চন্দ্রাপীড়ের নিকট উপস্থিত করিল, তখন পত্রলেখা নমস্কার করিলে চন্দ্রাপীড় দূর হইতেই ঈষৎ হাস্য করিয়া তাহার প্রতি প্রণয় প্রকাশ করিলেন এবং সে স্বভাবতই প্রীতি-ভাজন হইলেও কাদম্বরীর নিকট হইতে অনুগ্রহে অন্য সৌভাগ্য লাভ করিয়াছিল বলিয়াই যেন আরও বেশী প্রীতিভাজন হইয়াছিল, তাই চন্দ্রাপীড় উঠিয়া অত্যন্ত আদর দেখাইয়া তাহাকে আলিঙ্গন করিলেন এবং মেঘনাদ নমস্কার করিলে করপল্লবদ্বারা তাহার পৃষ্ঠে স্পর্শ করিলেন। (শ) তাহার পর উপবেশন করিয়া বলিলেন—"পত্রলেখে! বল, মাননীয়া

(১) সমুপবিষ্টশ্চ। (২) বাহ্য সকলঃ।

কেয়ূরকাদিপরিজন ?” ইতি। সাব্রবীৎ—“দেব! যথাজ্ঞাপয়সি ভদ্রম্। ত্বামর্চ্চয়তি শেখরীকৃতাঞ্জলিনা সসখীজনা সপরিজনা দেবী কাদম্বরী” ইতি (য)। এবমুক্তবতীং পত্রলেখামাদায় মন্দিরাভ্যন্তরং বিসর্জ্জিতরাজলোকো বিবেশ। তত্র চোত্তাম্যতা মনসা ধারয়িতুমপারয়ন্ কুতূহলম্, অতিপ্রীত্যা দূরমুৎসারিতপরিজন প্রবিশ্যাগার প্ররূঢ়ায়া স্থলকমলিন্যা পৃথুভিরুন্নালৈ পলাশৈরুপরচিতাতপত্রকৃত্যায়া (১) মধ্যাস্য মধ্যভাগমন্যতরস্য মরকতপতাকায়মানস্য পত্রমণ্ডপস্য তলে চরণারবিন্দেন সমুৎসার্য্য সুখরসুপ্ত হংসমিথুনমুপবিশ্যাপ্রাক্ষীৎ—(র) “পত্রলেখে! কথয়, আগতে ময়ি (২) কথমসি স্থিতা ? কিয়ন্তি বা দিনানি ? কীদৃশো বা দেবীপ্রসাদ ? কা বা গোষ্ঠ্যঃ সমভবন্ ? কীদৃশ্যো বা কথা সমজায়ন্ত ? কো বাতিশয়েনাস্মান্ স্মরতি ? কস্য বা গরীয়সী প্রীতি ” ইতি (ল)। এবং পৃষ্টা চ ব্যজিজ্ঞপৎ—“দেব! দত্তাবধানেন শ্রূয়তাম্, যথা স্থিতাস্মি, যাবন্তি বা দিনানি,

(য) এবমিতি। বিসর্জ্জিতঃ পরিত্যক্তো রাজলোকঃ সামন্তবর্গো যেন স তথোক্তশ্চন্দ্রাপীড়। উত্তাম্যতা কাদম্বরীবিরহেণ অস্থিরতাং গচ্ছতা। ধারয়িতুং সংবরীতুম্। অগারপ্ররূঢ়ায়া গৃহাভ্যন্তরজাতায়া পৃথুভির্বিশালৈ তথা উদ্গতানি উত্থিতানি নালানি যেষাং তৈ পলাশৈ পত্রৈ উপরচিতং কৃতম্ আতপত্রকৃত্যং ছত্রকার্য্যং যয়া তস্যা স্থলকমলিন্যা মধ্যভাগম্ অধ্যাস্য অধিষ্ঠায়। মরকতপতাকায়মানস্য মরকতমণিনির্ম্মিতপতাকাবদাচরত।

(র) পত্রেতি। কিয়ন্তি বা দিনানি স্থিতাসীতি শেষ। দেব্যা কাদম্বর্য্যা প্রসাদোঽনুগ্রহ। গোষ্ঠ্যঃ পরস্পরালাপা। গোষ্ঠী সভায়াং সলাপে ইতি বিশ্ব। প্রীতিমতীতি শেষ।

সহ শ্বেতাদেবী ও মদলেখার সহিত কাদম্বরীদেবীর মঙ্গল ত ? এবং তমালিকা ও কেয়ূরকপ্রভৃতি সমস্ত পরিজনবর্গ ভাল আছে ত ?। পত্রলেখা বলিল—“রাজপুত্র! আপনি যেরূপ বলিতেছেন, তাহাদের সকলেরই মঙ্গল। সখীজন ও পরিজনগণের সহিত কাদম্বরী দেবী মস্তকে অঞ্জলিপুট স্থাপন করিয়া আপনাকে নমস্কার করিয়াছেন। (য) পত্রলেখা এইরূপ বলিলে তাহাকে লইয়া এবং রাজগণকে বিদায় দিয়া গৃহমধ্যে প্রবেশ করিলেন, সেখানেও উতলা মনে কৌতুক সংবরণ করিতে না পারিয়া, অত্যন্ত প্রীতিবশত পরিজনদিগকে দূরে সরাইয়া ভিতরে প্রবেশ করিলেন সেই গৃহের অভ্যন্তরদেশেই একটী স্থলপদ্মিনী জন্মিয়াছিল সে বিস্তৃত ও উন্নাল পত্রসমূহদ্বারা ছত্রের কার্য্য করিতেছিল, তাহার মধ্যে এবং মরকতমণিনির্ম্মিত পতাকার ন্যায় অপর একটী পত্রমণ্ডপের তলে উপবেশন করিয়া চন্দ্রাপীড় চরণারবিন্দদ্বারা সুখসুপ্ত দুইটী হংসকে সরাইয়া জিজ্ঞাসা করিলেন—(র) “পত্রলেখে! বল, আমি আসিলে পর তুমি কিভাবে ছিলে ? কয় দিনই বা ছিলে ? কাদম্বরীদেবীর অনুগ্রহই বা তোমার উপর কিরূপ হইয়াছিল ? পরস্পর আলাপই বা কি হইয়াছিল ? প্রস্তাবই বা কিরূপ হইত ? কেই বা আমাকে অধিক স্মরণ করিত ? এবং আমার প্রতি কাহারই বা অধিক প্রীতি জানিয়াছ ?।” (ল) এইরূপ জিজ্ঞাসা করিলে পত্রলেখা জানাইল—

(১) অগারমধ্যিপ্ররূঢ়ায়া। (২) ক্বচিৎ আগতে ময়ীতি পাঠো নাস্তি।

যাদৃশো বা দেবীপ্রসাদ, যথা বা গোষ্ঠ্যঃ সমভবন্ যাদৃশ্যশ্চ কথা সমজায়ন্ত, যো বাতিশয়েন তব স্মরতি, যস্য বা ত্বয়ি গরীয়সী প্রীতিরস্তী"তি (ঙ)।

"ততঃ খল্বাগতে দেবে কেয়ূরকেণ সহ প্রতিনিবৃত্যাহং তথৈব কুসুমশয়নীয়সমীপে সমুপাবিশম্, অতিষ্ঠঞ্চ সুখং নবনবাননুভবন্তী দেবীপ্রসাদান্ (চ)। কিং বহুনা, প্রায়েণ মম চক্ষুষি চক্ষুঃ, বপুষি বপুঃ, করে করপল্লবঃ, (১) নামাক্ষরেষু বাণী, প্রীতৌ হৃদয়ং দেব্যাঃ সকলমেব তং দিবসমভবৎ (ছ)। অপরাহ্ণে চ মামেবাবলম্ব্য নিষ্ক্রম্য হিমগৃহকাৎ সঞ্চরন্তী যদৃচ্ছয়া নিষিদ্ধপরিজনা বল্লভবালোদ্যানং জগাম। তত্র সুধাধবলাং কালিন্দীজলতরঙ্গময্যেব মরকতসোপানমালয়া প্রমদবনবেদিকামধ্যারোহৎ (জ)। তস্যাঞ্চ মণিস্তম্ভাবষ্টম্ভস্থিতা স্থিত্বা চ মুহূর্তং

(ঙ) এবমিতি। কিঞ্চ এবং পৃষ্টা পত্রলেখেতি শেষঃ। দত্তং যদবধানমেকাগ্রতা তেন।

(চ) তত ইতি। তথৈব পূর্ববদেব কুসুমশয়নীয়সমীপে কাদম্বর্য্যাঃ পুষ্পশয্যানিকটে।

(ছ) কিমিতি। মম চক্ষুষি চক্ষুরিত্যনেন মদ্দর্শনাতিরেকঃ বপুষি বপুরিত্যনেন অঙ্গালিঙ্গনাধিক্যম্ করে কর-পল্লব ইত্যনেন ময়ি প্রেমাতিশয়ঃ মম নামাক্ষরেষু বাণী বাক্যম্ এতেন বারং বারং মম নামোচ্চারণম্ মম প্রীতৌ চ হৃদয়মিত্যনেন চ মম প্রীতিজননে চিত্তৈকাগ্রতা ব্যজ্যতে। অত্র অভবদিত্যেকয়া ক্রিয়য়া বহূনা কর্ত্তৄণামভিসম্বন্ধাৎ তুল্যযোগিতালঙ্কারঃ। দিবসমিতি অভিবিধৌ কালাধ্বনোর্ব্যাপ্তৌ ইতি দ্বিতীয়া।

(জ) অপেতি। যদৃচ্ছয়া স্বেচ্ছয়া। বল্লভং প্রিয়ং যদ্বালোদ্যানং নূতনোপবনং তৎ। কালিন্দ্যা যমুনায়া জলতরঙ্গেণ নির্মিতেব কালিন্দীজলতরঙ্গময়ী তয়েব নীলত্বস্যাবিরতভাবাৎ মরকতসোপানমালয়া করণেন সুধয়া চূর্ণলেপেন ধবলা তাম্ প্রমদবনস্য বেদিকাং পরিষ্কৃতাং ভূমিং তাম্। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

(ঝ) তস্যামিতি। কিঞ্চ মণিস্তম্ভস্য অবষ্টম্ভেন আশ্রয়স্য অবলম্বনেন স্থিতা হৃদয়েন সহ দীর্ঘকাল

রাজকুমার! মনোযোগ দিয়া শুনুন আমি যেভাবে ছিলাম, যত দিন ছিলাম, কাদম্বরীর যেরূপ অনুগ্রহ হইয়াছিল পরস্পর যে সকল আলাপ হইত, যেরূপ প্রস্তাব চলিত যে আপনাকে অধিক স্মরণ করিত এবং আপনার প্রতি যাহার অধিক প্রণয় জানিয়াছি।

(ক) আপনি সেখান হইতে আসিলে আমি কেয়ূরকের সহিত ফিরিয়া যাইয়া, পূর্ব্বের ন্যায় কাদম্বরীদেবীর পুষ্পশয্যার নিকটে উপবেশন করিলাম এবং তাঁহার নূতন নূতন অনুগ্রহ অনুভব করত সুখে অবস্থান করিতে লাগিলাম। (খ) অধিক আর কি বলিব, সেই সমস্ত দিনটার মধ্যে প্রায়ই আমার চোখে চোখ, আমার শরীরে শরীর, আমার হস্তে হস্তপল্লব, আমার নামবর্ণে বাক্য এবং আমার সন্তোষসাধনেই দেবীর মন ছিল। (গ) তাহার পর অপরাহ্ণকালে আমাকে লইয়াই হিমগৃহ হইতে বাহির হইয়া ইচ্ছানুসারে বিচরণ করত, পরিজনদিগকে সঙ্গে আসিতে নিষেধ করিয়া, প্রীতিকর নূতন উপবনে গমন করিলেন, সেখানে যমুনার জলতরঙ্গদ্বারা নির্ম্মিতের ন্যায় মরকতমণির সোপানশ্রেণীদ্বারা প্রমদবনের শুভ্রবর্ণ বেদিকার উপরে আরোহণ করিলেন। (ঘ) সেই বেদিকার উপরে একটী মণিময়স্তম্ভ

(১) করপল্লবম্।

মিব হৃদয়েন সহ দীর্ঘকালমবধার্য্য কিমপি ব্যাহর্ত্তুমিচ্ছন্তী নিশ্চলধৃত-তারকেণ নিষ্পন্দপক্ষ্মণা চক্ষুষা মুখং মে সুচিরং ব্যলোকয়ৎ (গ)। বিলোকয়ন্ত্যেব চ কৃতসঙ্কল্পা মদনাগ্নিং প্রবেষ্টুমিচ্ছন্তী স্নাতেব স্বেদাম্ভঃ স্রোতসি, (১) স্রোতসৈব তরলীকৃতা সমকম্পত, কম্পিতাঙ্গী চ পতনভিয়েবাগৃহ্যত বিষাদেন (ঘ)।

অথ ময়া বিদিতাভিপ্রায়য়া তন্মুখে বিনিবেশিত নিষ্কম্প নয়ন দত্তাবধানয়া 'আজ্ঞাপয়' ইতি বিজ্ঞাপিতে নিজাবয়বৈরপি বেপথুমদ্ভির্নিবার্য্যমাণেব রহস্যশ্রবণ-লজ্জয়া আত্মপ্রতিমামপি লিখিত-মণিকুট্টিমেন চরণাঙ্গুষ্ঠেনাপক্রমায়েবাস্পৃশন্তী,

মবধার্য্য মনসা সহ বহুকালং সম্মন্ত্রণেন নিশ্চিত্য। ব্যাহর্ত্তুং বক্তুম্। নিশ্চলং যথা স্যাত্তথা ধৃতা তারকা যস্য তেন নিষ্পন্দানি পক্ষ্মাণি লোমানি যস্য তেন।

(ঘ) বিলোকেতি। কৃতসঙ্কল্পা বদ্ধমনস্কেতি যাবৎ। স্নাতেব স্নানং কৃতবতীব। অন্যোঽপি মর্ত্তুকামো ঽগ্নিং প্রবেষ্টুমিচ্ছন্ পূর্ব্বং স্নাতি। স্রোতসা ঘর্ম্মপ্রবাহেণ তরলীকৃতেব চালিতেব সতী সমকম্পত। অন্যোঽপি স্রোতসা তরলীকৃতঃ সন্ কম্পতে। বিষাদেন বিরহদুঃখেন কম্পিতাঙ্গী কাদম্বরী পতনভিয়েব তস্যা এব পতনভয়েনেব অগৃহ্যত অবালম্ব্যত। অন্যমপি মূর্চ্ছাগমনাদিনা কম্পিতাঙ্গং পতনভয়েনাপরো গৃহ্ণাতি। অত্র প্রথমে দ্বে ক্রিয়োৎপ্রেক্ষে তৃতীয়া চ গুণোৎপ্রেক্ষা।

(ঙ) অথেতি। বিদিত অভিপ্রায় কাদম্বর্য্যা মনোভাবপ্রকাশাশয়ো যয়া তয়া তস্যাঃ কাদম্বর্য্যা মুখে বিনিবেশিতে স্থাপিতে নিষ্কম্পে নয়নে যয়া সা চাসৌ দত্তমবধানং যয়া সা চেতি তয়া। বিজ্ঞাপিতে বিজ্ঞাপনে কৃতে। বেপথুমদ্ভিঃ কম্পবদ্ভিঃ। অন্যোঽপি বেপথুমান্ সন্ বন্ধুমনিষ্টান্নিবারয়তি। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কারঃ। রহস্যস্য গুপ্তবিষয়স্য শ্রবণলজ্জয়া। অয়ন্তু উত্তরবাক্যেঽপি হেতুরিতি বোধ্যম্। লিখিতং সংসৃষ্টং মণিকুট্টিমং যেন তেন চরণাঙ্গুষ্ঠেন অপক্রমায়েব অপসরণায়েব আত্মপ্রতিমামপি স্বপ্রতিবিম্বমপি আস্পৃশন্তী স্পৃশন্তী। ক্রিয়োৎপ্রেক্ষা।

অবলম্বনপূর্ব্বক কিছুকাল থাকিয়া মনের সহিত বহুকাল যাবৎ স্থির করিয়া কোন বিষয় বলিতে ইচ্ছা করত বহুকাল যাবৎ আমার মুখের দিকে চাহিয়া রহিলেন, তখন তিনি নয়নযুগলের তারা দুইটী আমার মুখের উপরে নিশ্চলভাবে রাখিয়াছিলেন এবং নয়নের লোমগুলি নিষ্পন্দ হইয়াছিল। (ঘ) এইভাবে দৃষ্টিপাত করত কৃতসঙ্কল্প হইয়া মদনানলে প্রবেশ করিতে ইচ্ছা করিয়া ঘর্ম্মজলের স্রোতেই যেন স্নান করিলেন, সেই স্রোতে সঞ্চালিত হইয়াই যেন কাঁপিতে লাগিলেন এবং তখন তাঁহার পড়িয়া যাইবার ভয়েই যেন বিষাদ আসিয়া কম্পিতাঙ্গ অবস্থায় তাঁহাকে ধারণ করিল।

(ঙ) তাহার পর আমি অভিপ্রায় বুঝিতে পারিয়া তাঁহার মুখমণ্ডলে নিশ্চলভাবে নয়নযুগল সংস্থাপন করিয়া মনোযোগপূর্ব্বক বলিলাম—"দেবি! আপনার মনোভাব ব্যক্ত করুন" এইরূপ জানাইলে তাঁহার নিজের অঙ্গগুলিও কম্পিত হইয়া যেন তাঁহাকে বারণ করিতে লাগিল গুপ্ত বিষয় শুনিবার লজ্জায় চরণের অঙ্গুষ্ঠদ্বারা মণিময় ভূতল কর্ষণ করিয়া সরিয়া যাইবার নিমিত্তই যেন নিজের প্রতিবিম্বকেও স্পর্শ করিতে লাগিলেন, মণিময়ভূতল

(১) স্বেদাম্ভঃস্রোতসি।

ভবনকলহংসান্ কুট্টিমোল্লেখমুখরনূপুরেণ চরণারবিন্দেন বিসর্জয়ন্তী, কর্ণোৎপলমধুকরানপি স্বিদ্যদ্বদনব্যজনীকৃতেন (১) চাংশুকপল্লবেনোৎসারয়ন্তী, তাম্বূলবীটিকাশকলমুৎকোচমিব দন্তখণ্ডিতং শিখণ্ডিনে দদতী, বনদেবতাশ্রবণশঙ্কিতেব মুহুর্মুহুরিতস্ততো বিলোকয়ন্তী, বক্তুকামাপি ন শক্নোতি স্ম কিঞ্চিদপি লজ্জাকলিতগদ্গদা গদিতুম্ (ঙ)। প্রযত্নতোঽপি চাস্যা নিঃশেষং জ্বলতা মদনানলেনেব দগ্ধা, প্রবহতা নয়নোদকেনেবোঢা, প্রবিশদ্ভির্দুঃখৈরিবাক্রান্তা, পতদ্ভিঃ কুসুমচাপশরৈরিব শকলীকৃতা, নিষ্পতদ্ভির্শ্বসিতৈরিব (২) নির্বাসিতা, হৃদয়বর্ত্তিভিশ্চিন্তাশতৈরিব বিধৃতা, নিশ্বাসপায়িভিঃ (৩) মধুকরকুলৈরিব নিপীতা, ন প্রাবর্ত্তত

কুট্টিমস্য উল্লেখেন ঘর্ষণেন মুখরং শব্দায়মানং নূপুরং যস্য তেন। চরণারবিন্দেন ভবনকলহংসান্ বিসর্জয়ন্তী অপসারয়ন্তীব। অত্র প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা। স্বিদ্যতো ঘর্ম্মাক্তীভবতো বদনস্য ব্যজনীকৃতেন চাংশুকপল্লবেন চেলাঞ্চলেন কর্ণোৎপলমধুকরানপি উৎসারয়ন্তীব। প্রতীয়মানা ক্রিয়োৎপ্রেক্ষা। শিখণ্ডিনে ভবনময়ূরায় দন্তখণ্ডিতং চর্বিতম্ তাম্বূলবীটিকায়াঃ শকলং খণ্ডম্ উৎকোচমিব অপসরণায়েতি ভাবঃ দদতী। অন্যোঽপ্যপসরণায় উৎকোচং দদাতি। জাত্যুৎপ্রেক্ষা। তথা বনদেবতানাং শ্রবণাৎ শঙ্কিতেব সতী। ক্রিয়োৎপ্রেক্ষা। লজ্জয়া কলিতা বিহিতা গদ্গদ অস্পষ্টস্বরো যস্যা সা। গদিতুং বক্তুম্।

(চ) প্রযত্নত ইতি। অস্যা কাদম্বর্য্যা বাণী নিঃশেষং সম্পূর্ণাবয়বং যথা স্যাত্তথা জ্বলতা মদনানলেন দগ্ধেব সতী প্রবহতা নয়নোদকেনাশ্রুণা ঊঢা সমাকৃষ্য নীতেব সতী প্রবিশদ্ভির্দুঃখৈর্বিবরদ্বারেণ হৃদয়ং গচ্ছদ্ভির্দুঃখৈ রাক্রান্তেব সতী পতদ্ভিঃ কুসুমচাপস্য মদনস্য শরৈঃ শকলীকৃতা খণ্ডীকৃতা ছিন্নেব সতী নিষ্পতদ্ভির্নির্গচ্ছদ্ভিঃ শ্বাসবায়ুভিঃ নির্বাসিতা বহিষ্কৃতেব সতী হৃদয়বর্ত্তিভিশ্চিন্তাশতৈঃ বিধৃতা আকৃষ্টেব সতী নিশ্বাসপায়িভিঃ তীব্রনিশ্বাসপানশীলৈরিতি ভাবঃ মধুকরকুলৈর্ভ্রমরসমূহৈঃ নিপীতেব সতী চ প্রযত্নতোঽপি ন প্রাবর্ত্তত মুখান্ন নিরগচ্ছৎ। অত্র সর্ব্বত্র কবিসময় এব ক্রিয়োৎপ্রেক্ষালঙ্কারঃ।

কর্ষণ করায় শব্দায়মান নূপুরসংযুক্ত চরণপদ্মদ্বারা গৃহপালিত হংসদিগকে যেন সরাইয়া দিতে লাগিলেন, ঘর্ম্মাক্ত মুখমণ্ডলে বাতাস করিবার জন্য সঞ্চালিত বসনাঞ্চলদ্বারা কর্ণোৎপলস্থিত ভ্রমরদিগকেও যেন তাড়াইয়া দিতেছিলেন গৃহপালিত ময়ূরটীকে উৎকোচের ন্যায় দন্তচর্বিত তাম্বূলখণ্ড দান করিতে লাগিলেন এবং “বনদেবতারা শুনিবেন” এই আশঙ্কায় যেন বারংবার ইতস্তত দৃষ্টিপাত করিতে লাগিলেন, এদিকে লজ্জা আসিয়া কণ্ঠস্বর অস্পষ্ট করিয়া ফেলিল, তাই তিনি বলিতে ইচ্ছা করিলেও কিছুই বলিতে পারিলেন না। (চ) পূর্ণমাত্রায় প্রজ্বলিত মদনানলে যেন তাঁহার বাক্য দগ্ধ করিয়া ফেলিয়াছিল, নয়নজলপ্রবাহে যেন ভাসাইয়া নিয়াছিল, দুঃখ সকল হৃদয়ে প্রবেশ করিতে থাকিয়াই যেন আক্রমণ করিয়াছিল, মদনের বাণ পতিত হইতে থাকিয়াই যেন খণ্ড খণ্ড করিয়া ফেলিয়াছিল, নিশ্বাস নির্গত হইতে থাকিয়া যেন নির্ব্বাসন করিয়াছিল, হৃদয়স্থিত চিন্তাসমূহে যেন আকর্ষণ করিয়া রাখিয়াছিল এবং নিশ্বাস-

(১) স্বিদ্যদ্বদনব্যজনচিহ্নেন। (২) নিঃশ্বসিতৈরিব শ্বসিতৈরিব।

(৩) নিশ্বাসপায়িভি নিশ্বাসপাতিভি।

বাণী (চ)। কেবলং তু দুঃখসহস্রগণনায় মুক্তাক্ষমালিকামিব কল্পয়ন্তী গলদ্ভি রস্পৃষ্টকপোলস্থলৈ শুচিভিরধোমুখী নয়নজলবিন্দুভির্দুর্দিনমদর্শয়ৎ (ছ)।

তদা চ তস্যাঃ সকাশাদশিক্ষতেব লজ্জাপি লজ্জালীলাম্, বিনয়োঽপি বিনয়াতিশয়ম্, মুগ্ধতাপি মুগ্ধতাম্, বৈদগ্ধ্যমপি বৈদগ্ধ্যম, ভয়মপি ভীরুতাম্, বিভ্রমোঽপি বিভ্রমিতাম্, বিষাদোঽপি বিষাদিতাম, বিলাসোঽপি বিলাসম্ (জ)।

তথাভূতা চ "দেবি! কিমিদম্" ইতি বিজ্ঞাপিতা ময়া প্রমৃজ্য লোহিতায়মানোদরে লোচনে দুঃখপ্রকর্ষেণাত্মন সমুদ্বন্ধনায়েব মৃণালকোমলয়া বাহুলতয়া বেদিকা কুসুম-পালিকা গ্রথিত কুসুমমালামবলম্ব্য সমুন্নতৈকভ্রূলতা মৃত্যু-মার্গম্ (১) ইবাবলোকয়ন্তী দীর্ঘমুষ্ণঞ্চ নিশ্বসিতবতী (ঝ)। তদ্দুঃখমুৎপ্রেক্ষ

(ছ) কেবলমিতি। কাদম্বরী অধোমুখী সতী দুঃখসহস্রগণনায় মুক্তাক্ষমালিকা মুক্তাময়জপমালা কল্পয়ন্তীব রচয়ন্তীব অধোমুখত্বাদেবাস্পৃষ্টকপোলস্থলং যথা তথা গলদ্ভি শুচিভি শুভ্রবর্ণৈর্নয়নজলবিন্দুভি কেবলং দুর্দ্দিন বৃষ্টিম্ অদর্শয়ৎ। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার। ঘনান্ধকারে বৃষ্টৌ চ দুর্দ্দিন কথয়ো বিদু রিতি যাদ্ব।

(জ) তদেতি। কিঞ্চ লজ্জাপি তদা তস্যা কাদম্বর্য্যা সকাশাৎ লজ্জালীলা লজ্জাকার্য্য সঙ্কুচিতভাবম্ অশিক্ষতেব। তথা চ এতাবন্ত কাল যাবৎ স্থিতাপি লজ্জা স্বকার্য্যং সঙ্কুচিতভাব ন প্রকটিতবতী কিন্তু তদানীং তস্যা সকাশাচ্ছিক্ষমাণা সতী সব র্থৈব ত প্রকটিতবতীতি ভাব। অত্র ক্রিয়োৎপ্রেক্ষালঙ্কার। তেন চ তস্যা লজ্জাতিশয়েন সঙ্কুচিতভাবো ব্যজ্যত ইত্যলঙ্কারেণ বস্তুধ্বনি। অন্যত্রাপীদৃশ এব ভাবোঽলঙ্কারো ধ্বনিশ্চোন্নেয়। বিভ্রমোঽপি অধীরতাপি বিভ্রমিতামধীরতাম্।

(ঝ) তথেতি। লোহিতায়মানে অবিরতরোদনাদারক্তবর্ণে উদরে অভ্যন্তরে যয়োস্তাদৃশে লোচনে প্রমৃজ্য। দুঃখপ্রকর্ষেণ কষ্টাতিরেকেণ। বেদিকাকুসুমানাং যা পালিকা রক্ষিকা দাসী তয়া গ্রথিতা যা কুসুমমালা তাম্। সমুন্নতা একা ভ্রূলতা যস্যা সা অতএব মৃত্যুমার্গম্ অবলোকয়ন্তীব সতী। অত্র প্রথমা ফলোৎপ্রেক্ষা দ্বিতীয়া ক্রিয়োৎপ্রেক্ষা তয়োশ্চ পরস্পরনিরপেক্ষতয়া সংসৃষ্টি।

পায়ী ভ্রমরগণ যেন পান করিয়া ফেলিয়াছিল, তাই তিনি বিশেষ যত্ন করিলেও তাঁহার মুখ হইতে বাক্য নির্গত হইতেছিল না। (ছ) অধোমুখ হইয়া সহস্র দুঃখ গণনা করিবার জন্যই যেন মুক্তাময় জপের মালা নির্ম্মাণ করিতে থাকিয়া, গণ্ডযুগল স্পর্শ না করিয়া বিগলিত শুভ্রবর্ণ অশ্রুবিন্দুদ্বারা কেবল বৃষ্টি প্রদর্শন করিতেছিলেন।

(জ) এবং তখন লজ্জাও যেন তাঁহার নিকট হইতে লজ্জার কার্য্য শিক্ষা করিয়াছিল, বিনয়ও যেন অত্যন্ত বিনয় অভ্যাস করিয় ছিল, মুগ্ধতাও (অনভিজ্ঞতাও) যেন মুগ্ধতা শিখিয়াছিল, সৌন্দর্য্যও যেন সৌন্দর্য্য অভ্যাস করিয়াছিল ভয়ও যেন ভীরুতা শিক্ষা করিয়াছিল, অধৈর্য্যও যেন অধীরতা শিখিয়াছিল, বিষাদও যেন বিষাদ অভ্যাস করিয়াছিল এবং বিলাসও যেন বিলাস শিখিয়াছিল।

(ঝ) তিনি সেইরূপ হইলে আমি জিজ্ঞাসা করিলাম—"দেবি! এ ব্যাপারটা কি?"

---

(১) মৃত্যু।

মাথয়া চ (১) কথনায় পুনঃ পুনরনুবধ্যমানা ময়া ব্রীড়য়া নখ-মুখ বিলিখিত-কেতকীদলা (২) লিখিত্বেব বক্তব্যমর্পয়ন্তী বিবক্ষাস্ফুরিতাধরা নিশ্বাসমধু-করানিবোপাংশু সন্দিশন্তী ক্ষিতিতল-নিহিত-নিশ্চল-নয়না সুচিরমতিষ্ঠত্ (ঞ)।

ক্রমেণ চ ভূয়ো মন্মুখে নিধায় দৃষ্টিং পুনঃ পুনরপ্যাপূর্য্যমাণলোচনচ্যুতৈর্মদনা-নলধূমধূসরাং বাচমিব প্রক্ষালয়ন্তী বাষ্পজলবিন্দুভিঃ, বাষ্পজলবিন্দুব্যাজেন চ বিলক্ষ স্মিত-স্ফুরিতৈর্দশনাংশুভিঃ সাধ্বস-বিস্মৃতান্ পূর্ব্বান্ (৩) অভিধেয়-বর্ণানিব গ্রথ্নতী কথমপি ব্যাহারাভিমুখমাত্মানমকরোত্ (ট)। অব্রবীচ্চ মাম্—

(ঞ) তদিতি। কিঞ্চ তস্যা কাদম্বর্য্যাং দুঃখম্ উত্প্রেক্ষমাণয়া সম্ভাবয়ন্ত্যা ময়া। অনুবধ্যমানা অনুরুধ্যমানা। ব্রীড়য়া লজ্জয়া। নখমুখেন নখাগ্রেণ বিলিখিতং সংঘৃষ্টং কেতকীদলং যয়া সা অতএব বক্তব্য বিষয় লিখিত্বা অর্পয়ন্তীব। বিবক্ষয়া স্ফুরিত অধরো যস্যা সা অতএব নিশ্বাসমধুকরান্ নিশ্বাসপানার্থাগত ভ্রমরান্ উপাংশু নিভৃত সন্দিশন্তীব ক্ষিতিতলে নিহিতে স্থাপিতে নিশ্চলে নয়নে যস্যা সা তথোক্তা সতী। অত্রাপি ক্রিয়োত্প্রেক্ষয়ো পূর্ব্ববত্ সংসৃষ্টি।

(ট) ক্রমেণেতি। ভূয় পুনরপি। আপূর্য্যমাণাভ্যাং লোচনাভ্যাং চ্যুতৈর্গলিতৈ বাষ্পজলবিন্দুভি মদনানলস্য ধূমেন ধূসরাং বাচ স্বয়মুচ্চার্য্যমাণ বাক্য প্রক্ষালয়ন্তীব সতী। কিঞ্চ বিলক্ষস্মিত লজ্জাযুক্ত মন্দহাস্যেন স্ফুরিতৈর্দশনাংশুভির্দন্তকিরণৈ সাধ্বসেন ভয়েন বিস্মৃতান্ পূর্ব্বান্ পূর্ব্বাবধারিতান্ বাষ্পজলবিন্দুব্যাজেন স্থিতা নিতি শেষ অভিধেয়বর্ণা বক্তব্যাভিধায়কাক্ষরাণি গ্রথ্নতীব সতী। অত্র বাষ্পজলবিন্দুনাং বর্ত্তুলত্বাদিরূপত্বেন বর্ণসাম্য দন্তকিরণানাঞ্চ বিততত্বেন সূত্রসাম্যম্ সুতরাঞ্চ তৈস্তেষাং গ্রথনমুপপদ্যত ইতি বোধ্যম্। আত্মানং ব্যাহারাভিমুখং কথনায়োদ্যতমকরোত্। অত্র সাপহ্নবা ক্রিয়োত্প্রেক্ষালঙ্কার।

তখন তিনি আরক্তমধ্য নয়নযুগল মার্জ্জনা করিয়া অত্যন্তদুঃখবশত নিজের উদ্বন্ধনের নিমিত্তই যেন মৃণালতুল্য কোমল বাহুলতাদ্বারা বেদিকাপুষ্পরক্ষিণী দাসীকর্ত্তৃক গ্রথিত পুষ্পমালা ধারণ করিয়া এবং একটী ভ্রূ উন্নমিত করিয়া মৃত্যুর পথই যেন দেখিতে লাগিয়া, দীর্ঘ ও উষ্ণ নিশ্বাস ত্যাগ করিলেন। (ঞ) আমি তাঁহার মনের দুঃখ সম্ভাবনা করিয়া বলিবার জন্য বারংবার অনুরোধ করিতে লাগিলাম, তখন তিনি লজ্জাবশত নখাগ্রদ্বারা কেতকীপুষ্পের একটী দলের উপরে রেখাপাত করিতে থাকায় বক্তব্য বিষয় লিখিয়াই যেন সমর্পণ করিতে লাগিলেন এবং বলিবার ইচ্ছা করায় অধর স্পন্দিত হইয়া উঠিল, তাই তিনি নিশ্বাসপানার্থ আগত ভ্রমর-দিগের নিকটেই যেন গোপনে বলিতে লাগিলেন—এই অবস্থায় নয়নযুগল ভূতলে নিশ্চলভাবে রাখিয়া অনেক কাল রহিলেন।

(ট) ক্রমে পুনরায় আমার মুখের উপরে দৃষ্টি রাখিয়া, পরিপূর্ণ নয়ন হইতে বিগলিত বাষ্পবিন্দুদ্বারা, কামাগ্নির ধূমে ধূসরবর্ণ বাক্যকে বারংবার যেন প্রক্ষালন করিতে লাগিলেন এবং লজ্জার সহিত ঈষৎ হাস্য করায় দন্তের কিরণগুলি প্রকাশিত হইতে লাগিল, তাহাতে বোধ হইতেছিল যে, ভয়বশত পূর্ব্বনির্দ্দিষ্ট বক্তব্য বিষয়ে বর্ণগুলি ভুলিয়া গিয়াছিলেন, বাষ্পবিন্দুচ্ছলে অবস্থিত সেই বর্ণগুলিকেই যেন দন্তরশ্মিদ্বারা গাঁথিতেছিলেন—এই অবস্থায়

(১) তদ্বৃত্তকথনায়। (২) বিলিখিতকেতকীদলা। (৩) অপূর্ব্বান্।

"পত্রলেখে! বল্লভতয়া তস্মিন্ স্থানে ন তাতো নাম্বা ন মহাশ্বেতা ন মদলেখা ন জীবিতম্ যত্র মে ভবতী দর্শনাৎপ্রভৃতি প্রিয়াসি। ন জানে কেনাপি কারণে-

नावहस्तित (१) सकलसखीजन त्वयि विश्वसिति ( ) मे हृदयम् (ठ)। कमपरमुपालभे, कस्य वान्यस्य कथयामि परिभवम्, केन वान्येन साधारणीकरोमि दुःखम् (ड)। दुःखभारमिममसह्यमद्य (२) निवेद्य भवत्यास्त्यक्ष्यामि जीवितम् (ढ)। जीवितेनैव शपामि ते, स्वहृदयेनापि विदितवृत्तान्तेनामुना जिह्रेमि, किमुतान्यहृदयेन (ण)। कथमिव मादृशी रजनिकरकिरणावदातं कौलीनेन कलङ्कयिष्यति कुलम्, कुलक्रमागताञ्च लज्जां परित्यक्ष्यति, अकन्यकोचिते वा चापले चेतः प्रवर्त्तयिष्यति (त)। साहं न सङ्कल्पिता पित्रा, न दत्ता मात्रा,

(ठ) पत्रलेखे इति। स्थाने विषये। भवती त्वम्। अपक्रान्तो हस्तादित्यपहस्तः स इव कृत इत्यपहस्तित करोत्यर्थे तस्मादपहस्तशब्दात् कर्म्मणि क्तः। अपहस्तिता निष्कासिता सकला सखीजना येन तत् मे मम हृदय कर्त्तृ केनाप्यनिर्वचनीयेन कारणेन त्वयि विश्वसिति इति न जाने इत्यन्वयः।

(ड) कमिति। उपालभे निन्दामि। परिभवं मदनकृतमत्याचारम्। साधारणीकरोमि विभजामीत्यर्थः।

(ढ) दुःखेति। भवत्यास्तव समीपे। दुःखस्य भारोऽतिरेकस्तम्। जीवितं जीवनम्।

(ण) ननु शोकक्षोभे च हृदयं प्रलापैरेव धार्य्यते। इति न्यायात् सखीभ्यो निवेद्य दुःखभारोऽयं लघुक्रियतामित्याह जीवितेनैवेति। जीवितेनैव स्वजीवनेनैव ते तव समीपे। विदितो वृत्तान्तो येन तेन अमुना स्वहृदयेनापि जिह्रेमि लज्जे सुतराम् अन्यहृदयेन किमुत वक्तव्यमित्यर्थः। अतएव न सम्भवत्यन्येभ्यो निवेदनमिति भावः।

(त) कथमिति। मादृशी प्रियावगमादुत्पन्नविवेचनशक्तिरिति भावः। कौलीनेन आकस्मिकात्मसमपर्णा लोकापवादेन रजनिकरस्य चन्द्रस्य किरणवत् अवदातं निर्म्मलं कुलं कथमिव कलङ्कयिष्यति कलङ्कवत् कलङ्कान्वितं करिष्यति। अकन्यकेति अप्राशस्त्ये नञ् तथा च अकन्यकोचिते अप्रशस्तकन्यायोग्ये चापले कामचाञ्चल्ये स्वयमात्मार्पणे।

কোন প্রকারে আপনাকে আপনি বলিতে উদ্যত করিলেন। (ঠ) তাহার পর আমাকে বলিলেন— পত্রলেখে। দর্শনাবধি যে বিষয়ে তুমি আমার প্রিয় হইয়াছ, সে বিষয়ে পিতা নহেন মাতা নহেন মহাশ্বেতা নহে মদলেখা নহে এমন কি, জীবনও প্রিয় নহে। আমি জানি না, কেন যে আমার হৃদয় সমস্ত সখীগণকেও দূরে রাখিয়া তোমার উপরেই বিশ্বাস করিতেছে। (ড) আমি অন্য আর কাহাকে নিন্দা করিব? অন্য কাহার নিকটেই বা এই অত্যাচারের কথা বলিব? এবং অন্য কাহাকেই বা এই দুঃখ ভাগ করিয়া দিব?। (ঢ) তাই আজ তোমার নিকটে এই অসহ্য দারুণ দুঃখ জানাইয়া জীবন ত্যাগ করিব। (ণ) আমি তোমার নিকটে নিজের জীবনের শপথ করিয়া বলিতেছি যে নিজের এই হৃদয়ও এই বৃত্তান্ত জানিয়াছে বলিয়া আমি লজ্জিত হইতেছি, তাহা'ত অন্যের হৃদয়ের কথা আর কি বলিব। (ত) আমার ন্যায় কন্যা, চন্দ্রকিরণের ন্যায় নির্ম্মল কুলকে কি করিয়া লোকাপবাদ দ্বারা কলঙ্কিত করিবে? কি করিয়াই বা কুলক্রমাগত লজ্জা পরিত্যাগ করিবে এবং কি

(१) अपहस्तित। (२) निःश्वसिति। (३) क्वचित् अद्येति पाठो नास्ति।

